# पाणिनीयाष्टकम्

## [ उत्तरार्द्धम् ]






गुरुकुल विश्वविद्यालय कांगड़ी ।

# गुरुकुल के उपयोगी प्रकाशन

## ऐतिहासिक ग्रन्थ

| | | |
|---|---|---|
| भारतवर्ष का इतिहास [ तीन भाग ] | श्री रामदेव | ७) |
| बृहत्तर भारत [ सचित्र, सजिल्द, अजिल्द ] | श्री चन्द्रगुप्त | ७), ६) |
| अपने देश की कथा [ दूसरा संस्करण ] | श्री सत्यकेतु | १।≈) |
| योगेश्वर कृष्ण | श्री चमूपति | ४) |
| ऋषि दयानन्द का पत्र व्यवहार | स्वामी श्रद्धानन्द | ॥।) |
| हैदराबाद आर्य सत्याग्रह के अनुभव | श्री क्षितीश | ।) |
| महावीर गेरीबाल्डी | श्री इन्द्र | १॥) |

## संस्कृत साहित्य

| | |
|---|---|
| बालनीति कथामाला [ तीसरा संस्करण ] | १) |
| नीतिशतक [ संशोधित ] ≈) साहित्य दर्पण, संशोधित | २) |
| संस्कृत प्रवेशिका, प्रथम भाग [ चौथा संस्करण ] | ।।।≈) |
| अष्टाध्यायी, सटीक, पूर्वार्द्ध ७) रघुवंश संशोधित [ तीन सर्ग ] | ।) |
| साहित्य-सुधा संग्रह १, २, ३, बिन्दु | १।, १।), १।) |
| संस्कृत प्रवेशिका, २ भाग [ तीसरा संस्करण ] | ॥≈) |
| संस्कृत साहित्य पाठावली | ≈) |

## शालोपयोगी

| | | |
|---|---|---|
| विज्ञान प्रवेशिका २ भाग [ मिडिल स्कूलों के लिए ] | श्री यज्ञदत्त | २॥) |
| गुणात्मक विश्लेषण [ बी. एस. सी. के लिए ] | श्री रामशरण दास | १) |
| भाषा प्रवेशिका [ वर्धा योजनानुसार ] | श्री ओम्प्रकाश | ।।।) |
| आर्यभाषा पाठावली [ आठवां संस्करण ] | श्री भवानी प्रसाद | १।।) |
| ए गाइड टु दी स्टडी ऑफ़ संस्कृत ट्रांसलेशन एण्ड कम्पोजीशन [ पटना यूनिवर्सिटी की मैट्रिक परीक्षा में स्वीकृत ] | | १।) |

प्रकाशन मन्दिर, गुरुकुल कांगड़ी विश्वविद्यालय, हरिद्वार।

ओ३म्

# पाणिनीयाष्टकम्

## [ उत्तरार्द्धम् ]





पण्डितवर श्रीयुतगङ्गादत्तशास्त्रिभिः ( तुरीयाश्रमे स्वामिशुद्धबोध तीर्थनाम्ना प्रसिद्धैः ) निर्मितया तत्त्वप्रकाशिकया व्याख्यया सनाथीकृतम् ।

रूप्यक सप्तकम्



ओ३म

# अथ पञ्चमाध्यायस्य प्रथमः पादः।



## प्राक्क्रीताच्छः ॥१॥

'तेन क्रीतम्' इत्यतः प्राक् छोऽधिक्रियते। वक्ष्यति तस्मै हितमिति। वत्सेभ्यो हितो वत्सीयो गोधुक्। करभीय उष्ट्रः।

## उगवादिभ्यो यत् ॥२॥

उवर्णान्ताद् गवादिभ्यश्च प्राक्क्रीतीयेषु यत्। शङ्कव्यं दारु। गव्यं तृणम्। नाभि नभञ्च, (१) (गणसू०) नभ्योऽक्षः। नभ्यमञ्जनम्। (शुनः सम्प्रसारणं वा च दीर्घत्वम्) शून्यम्। शुन्यम्। ऊधसोऽनङ् च। ग०। ऊधसे हितः, ऊधन्यः कूपः।

## कम्बलाच्च संज्ञायाम् ॥३॥

कम्बलात्प्रा० यत् सज्ञायाम्। कम्बल्यमूर्णापलशतम्। संज्ञायां किम् कम्बलीया ऊर्णा।

## विभाषा हविरपूपादिभ्यः ॥४॥

हविर्विशेषवाचिभ्योऽपूपादिभ्यश्च प्रा० वा यत्। आमिक्ष्यमामिक्षीयं वा दधि। अपूप्यम्। अपूपीयम्।

---

[१] नाभिशब्दो यतं लभते नभादेशं चेत्यर्थः। रथनाभावेवेदम् अन्यत्र नाभ्यम्।

## तस्मै हितम् ।५।

चतुर्थीसमर्थाद्धिते यथाविहितम् । वत्सीयः । पट्यम् । गव्यम् । आमिक्ष्यम् । अपूप्यम् । अपूपीयम् ।

## शरीरावयवाद्यत् ।६।

चतु० शरीरावयववाचिनो हि० यत् । दन्त्यम् । कण्ठ्यम् । ( नस् नासिकायाः ) नस्यम् ।

## खलयवमाषतिलवृषब्रह्मणश्च ।७।

च० भ्यः खलादिभ्यो हि० यत् । खलाय हितं, खल्यम् । यव्यम् । माष्यम् । तिल्यम् । वृष्यम् । ब्रह्मण्यम् । चकारोऽनुक्तसमुच्चयार्थः । रथाय हिता, रथ्या ) ।

## अजाविभ्यां थ्यन् ।८।

च० भ्यामजाविभ्यां हि० थ्यन् । अजाय अवये वा हिता अजथ्या । अविथ्या यूथिः ।

## आत्मन्विश्वजनभोगोत्तरपदात्खः ।९।

च० आत्मन्विश्वजनाभ्यां भोगोत्तरपदाच्च हि० खः । आत्मनीनम् । विश्वजनीनम् । पितृभोगीणः (१) । ( आचार्यादणत्वश्च ) आचार्यभोगीनः ( खविधाने (२) पञ्चजनादुपसंख्यानम् ) पञ्चजनीनम् । ( सर्वजनाठ्ठञ् चं* ) सार्वजनिकः सर्वजनीनः । ( महाजनान्नित्यम् ) माहाजनिकः । ( तत्पुरुष इति वक्तव्यम् ) बहुव्रीहौ तु महाजनीयः ।

---

[१] पितुर्भोगः शरीरं तस्मै हित इति विग्रहः ।

[२] *समानाधिकरणादितिवक्तव्यमितितेनेह न । पञ्चानां जनाय हितः । पञ्चजनीयः सर्वेषां जनाय हितः । सर्वजनीयः ।

## सर्वपुरुषाभ्यां णढञौ ।१०।

च० भ्यां सर्वपुरुषाभ्यां हि० णढञौ । ( सर्वाण्णोवेतिवक्तव्यम् ) सर्वस्मै हितः । सार्वः । सर्वीयः । ( पुरुषाद्वधविकारसमूहतेनकृतेष्विति वक्तव्यम् ) पुरुषस्य वधः पौरुषेयः (१) । पुरुषस्य विकारः पौरुषेयः । एवं समूहादिष्वपि ।

## माणवचरकाभ्यां खञ् ।११।

च० भ्यां माणवचरकाभ्यां हि० खञ् । माणवीनम् । चारकीणम् ।

## तदर्थं विकृतेः प्रकृतौ ।१२।

प्रकृतिरुपादानकारणं तस्यैवोत्तरमवस्थान्तरं विकृतिः । च० विकृतिवाचिनः प्राति० हि० य० तदर्थं प्रकृतावभिधेयायाम् । अङ्गारेभ्य इमानि, अङ्गारीयाणि काष्ठानि । शङ्कव्यं दारु । तदर्थमिति किम् । यवाना धानाः । धानानां सक्तवः । प्रकृत्यन्तरनिवृत्तिरत्र विवक्षितः, न तादर्थ्यम् । विकृतेरिति किम् । उदकार्थः कूपः । प्रकृताविति किम् । असयर्था कोशी ।

## छदिरुपधिबलेर्ढञ् ।१३।

च० भ्यः छद्यादिभ्यो हि० ढञ् तद० । छादिषेयाणि तृणानि । औपधेयम् दारु (२) । बालेयास्तण्डुलाः ।

## ऋषभोपानहोर्ञ्यः ।१४।

च० भ्यां विकृतिवाचिभ्यां, ऋषभोपानद्भ्यां हि० ञ्यः तद० । छस्यापवादः । ऋषभायायमार्षभ्यो वत्सः । औपानह्यो मञ्जः ।

---

[१] भाष्योक्तेस्तेनेत्यस्य द्वन्द्वे निवेशः । तस्येदमित्यणि, प्राणिरजतादिभ्योऽञित्यञि, समूहेऽप्यणि, तेन कृते ग्रन्थेऽणि च प्राप्ते-अग्रन्थेऽप्राप्त इति विवेकः ।
[२] उपधिशब्दात्स्वार्थे । उपधीयत इति उपधी रथाङ्गम् । तदेव औपधेयम् ।

## चर्म्मणोऽञ् ॥१५॥

चर्म्मणो या विकृतिस्तद्वाचिनश्च० प्रा० हि० अञ् तद० । वध्र्यं इदं वार्ध्र चर्म्म । वारत्रं चर्म्म ।

## [१] तदस्य तदस्मिन्स्यादिति ।१६।

स्यात्समानाधिकरणात्प्रथमासमर्थात्षष्ठ्यर्थे सप्तम्यर्थे च यथाविहितम् । प्राकारीया इष्टकाः । प्रासादीयम् । प्राकारीयोदेशः ।

## परिखाया ढञ् ।१७।

स्यात् स० प्र० परिखाशब्दात्ष० स० ढञ् । पारिखेयी भूमिः । छयतोः पूर्णोऽवधिः । इतः परमन्यः प्रत्ययो विधीयते ।

## प्राग्वतेष्ठञ् ।१८।

'तेन तुल्यं क्रिया चेद्वतिः' इति वतिं वक्ष्यति । वतेः प्राक्ठञधिक्रियते । पारायणिकः । तौरायणिकः । चान्द्रायणिकः । 'पारायण तुरायण चान्द्रायणं वर्तयति' ।

## आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ।१९।

'तदर्हति' इति वक्ष्यति । गोपुच्छादिवर्जितात् ठक् अर्हात्प्रागर्थेषु । पणेन क्रीतं, पाणिकम् । अगोपुच्छेति किम् । गोपुच्छेन क्रीतं गौपुच्छिकम् ।

## असमासे निष्कादिभ्यः ।२०।

असमासे निष्कादिभ्य आर्हीयेषु (२) ठक् । नैष्किकम् । समासे तु परमनैष्किकम् । अत्र ठञेव । 'परिमाणान्तस्या संज्ञा शाणयोः' इति उत्तरपद वृद्धिः ।

---

[१] इति शब्दो लौकिकविवक्षायां, तेन प्रासादो देवदत्तस्य स्य दित्यर्थे प्रासादीयो देवदत्त इति न ।

[२] आर्हादिति 'तेनक्रीत' मितियावदनुवर्तते । असमासग्रहणेन ज्ञाप्यते, इतः प्राक् तदन्तविधिरिति । तेन सुगव्यं, यवापूप्यमित्यादि । इत ऊर्ध्वं तु 'संख्यापूर्वपदानां तदन्त ग्रहणं प्राग्वतेरिष्यते यच्चालुकि' पारायणिकः । द्वैपारायणिकः । अलुकीति किम् । द्वाभ्यां शूर्पाभ्यां क्रीतम्, द्विशूर्पम् । द्विशूर्पेण क्रीते शूर्पादञ् माभूत् किन्तु ठञ् द्विशौर्पिकम् ।

## शताच्च ठन्यतावशते ॥२१।

शतात्, आर्हीयेष्वर्थेषु ठन्यतौ, अशतेऽभिधेये । शतेनक्रीतम् । शतिकम् । शत्यं वा । ( शतप्रतिषेधेऽन्यशतत्वेऽप्रतिषेधः ) तेनेहन-शतेन क्रीतं शत्यम् ( १ ) । अशत इति किम् । शतं परिमाणमस्य, शतकः सघः । अत्र प्रत्यार्थो वस्तुतः प्रकृत्यर्थान्न भिद्यते । तेन ठन्यतौ न किन्तु कनेव ।

## संख्याया अतिशदन्तायाः ॥२२॥

त्यन्तशदन्तभिन्नात्सख्यावाचिन आ० कन् । पञ्चभिः क्रीतः पञ्चकः । बहुकः । गणकः । अतिशदन्ताया इति किम् । साप्ततिकः । दशकः । चात्वारिंशत्क । अर्थवतस्तिशब्दस्य ग्रहणान्नेह । कतिकः ।

## वतोरिड् वा। २३।

वत्वन्तात्परस्य कन इड् वा । तावतिकः । तावत्कौ वा । यावतिकः । यावत्कः ।

## विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम् ॥२४॥

विंशतित्रिंशद्भ्यां, आ० ड्वुन्नसंज्ञायाम् ( २ ) । विंशकः । 'ति विंशते र्डिति, इति तिलोपः । त्रिंशकः । असज्ञायामिति किम् । विंशतिकः । त्रिंशत्कः ।

## कंसाट्टिठन् ॥२५॥

कंसाद् आ० टिठन् । कंसिकः । कंसिकी । ( टिठनर्द्धाच्चेति वक्तव्यम् ) अर्द्धिकः । अर्द्धिकी । ( कार्षापणाट्टिठन् वक्तव्यो वा च प्रतिरादेशः ) कार्षापणिकः । कार्षापणिकी । प्रतिकः । प्रतिकी ।

## शूर्पादञन्यतरस्याम् ॥२६॥

शूर्पाद् आ० अञ् वा । शौर्पम् । शौर्पिकम् । शूर्पेण क्रीत मिति विग्रहः ।

---

( १ )—असमास इति चाल्लब्धम् । तेन—द्विशतेन क्रीतं, द्विशतकमित्येव ।
( २ )—संज्ञायान्तु—विंशतिकः । त्रिंशत्कः ।

## शतमानविंशतिकसहस्रवसनादण् । २७

शतमानादिभ्य आ० अण् । शातमानम् । वैंशतिकम् । साहस्रम् । वासनम् ।

## अध्यर्द्धपूर्वाद्द्विगोर्लुगसंज्ञायाम् । २८

अध्यर्द्धपूर्वाद् द्विगोश्च परस्य आ० लुक् नतु संज्ञायाम् । अध्यर्द्धकसम् । द्विकसम् । संज्ञायां तु पाञ्चकलापिकम् । ( द्विगोर्लुकि तन्निमित्तग्रहणम् ) द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्, तेन क्रीतं द्विशौर्पिकम् । ( अर्थविशेषासम्प्रत्ययेऽतन्निमित्तादपीति वक्तव्यम् ) द्विशूर्प्या क्रीतं द्विशूर्पम् ।

## विभाषा कार्षापणसहस्राभ्याम् । २९

अ० द्वि कार्षापण सहस्रान्तात्प० आ० वा लुक् । अध्यर्द्धकार्षापणिकम् । अध्यर्धकार्षापणम् । द्विकार्षापणिकम् । द्विकार्षापणम्(१) । अध्यर्धसहस्रम् । अध्यर्धसाहस्रम् । द्विसहस्रम् । द्विसाहस्रम् । ( कार्षापणसहस्राभ्यां सुवर्णशतमानयोरुपसंख्यानम् ) अध्यर्द्धसुवर्णम् । अध्यर्धसौवर्णिकम् । द्विसुवर्णम् । द्विसौवर्णिकम् । अध्यर्धशतमानम् । अध्यर्द्धशातमानम् । द्विशतमानम् । द्विशातमानम् ।

## द्वित्रिपूर्वान्निष्कात् । ३०

द्वित्रिपूर्वान्निष्कान्ताद्द्विगोः आ० वा लुक् । द्विनिष्कम् । द्विनैष्किकम् त्रिनिष्कम् । त्रिनैष्किकम् । ( बहुग्रहणं कर्त्तव्यम् ) बहुनिष्कम् । बहुनैष्किकम् ।

---

(१) औपसंख्यानिकस्य टिठनो लुक् । पक्षे-अध्यर्धप्रतिकम् । द्विप्रतिकम् । अत्र लुङ् न, प्रत्यादेशस्य प्रत्ययसंनियोगशिष्टत्वात् ।

## बिस्ताच्च । ३१

द्वित्रि० विस्तान्ताद्द्विगोः आ० वा लुक्। द्विविस्तम्। द्वैविस्तिकम्। त्रिविस्तम्। त्रैविस्तिकम्। बहुविस्तम्। बहुवैस्तिकम्।

## विंशतिकात्खः । ३२

अध्यर्द्धपूर्वाद्द्विगोश्च विंशतिकान्ताद् आ० खः। अध्यर्द्धविंशतिकीनम्। द्विविंशतिकीनम्।

## खार्य्या ईकन् । ३३

अ० द्वि० खार्य्यन्ताद् आ० ईकन्। अध्यर्द्धखारीकम्। द्विखारीकम् (केवलायाश्च वक्तव्यः) खारीकम्। (काकिण्याश्चोपसंख्यानम्) अध्यर्द्धकाकिणीकम्। द्विकाकिणीकम्। (केवलायाश्च) काकिणीकम्।

## पणपादमाषशताद्यत् । ३४

अ० द्वि० पणाद्यन्ताद्, आ० यत्। अध्यर्द्धपण्यम्। द्विपण्यम्। अध्यर्द्धपाद्यम्। त्रिपाद्यम्(१)। अध्यर्द्धमाष्यम्। द्विमाष्यम्। अध्यर्द्धशत्यम्। द्विशत्यम्।

## शाणाद्वा । ३५

अ० द्वि० शाणान्ताद् आ० वा यत्। पक्षे ठञ्। तस्य च लुक्। अध्यर्द्धशाण्यम्। अ० शाणम्। द्विशाण्यम्। द्विशाणम्। (शतशाणाभ्यां वेति वक्तव्यम्) अध्यर्द्धशत्यम्। अ० शतम्। द्विशत्यम्। द्विशतम्। (द्वित्रिपूर्वादणचेति वक्तव्यम्) द्विशाणम्। द्वैशाणम्। द्विशाण्यम्। त्रिशाणम्। त्रैशाणम्। त्रिशाण्यम्।

---

[१]–'पद्यत्यतदर्थे' इति न। प्राण्यङ्गार्थस्यैव तत्र ग्रहणात्।

## तेन क्रीतम् ॥३६॥

ठञादयस्त्रयोदश प्रत्ययाः प्रकृताः ।

तेनेति तृतीयासमर्थात् क्रीते यथावि० प्रत्ययः । प्रास्थिकम् । साप्ततिकम् । पाणिकम् । पादिकम् । माषिकम् ।

## तस्य निमित्तं संयोगोत्पातौ ॥३७॥

षष्ठीसमर्थान्निमित्तमित्यर्थे य० तच्चेत्संयोगोत्पातौ । संयोगः सम्बन्धः । उत्पातः प्राणिनां शुभाशुभ सूचकः महाभूत परिणामः । शत्यः । शतिकः । (निमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम्) वातस्य शमनं कोपनं वा वातिकम् । पैत्तिकम् । श्लैष्मिकम् । ( सन्निपाताच्चेति वक्तव्यम् ) सान्निपातिकम् ।

शतस्य निमित्तं धनपतिना संयोगः शत्यः, शतिकः, साहस्रः । शतस्य निमित्त मुत्पातो दक्षिणाक्षिस्पन्दनम् । शत्यम्, शतिकम् ।

## गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् ॥३८॥

ष० गोशब्दाद् द्व्यचश्च संख्यापरिमाणाश्वादिवर्जितादू नि० यत् तच्चे० । गोर्निमित्तं सयोग उत्पातो वा । गव्यः । यशस्यः । ( यत्प्रकरणे ब्रह्मवर्चसाच्चोपसंख्यानम् ) ब्रह्मवर्चसस्य निमित्तं संयोगो ब्रह्मवर्चस्यः ॥ गोद्व्यचः किम् । विजयस्य वैजयिकः । असंख्यात्यादि किम् । पञ्चानां पञ्चकम् ।

## पुत्राच्छ च ॥३९॥

ष० पुत्रात्नि० छश्चात्यत् तच्चे० । पुत्रस्य निमित्तं संयोगः पुत्रीयः पुत्र्यो वा ।

## सर्वभूमिपृथिवीभ्यामणञौ ॥४०॥

ष० सर्वभूमिपृथिवीभ्यां नि० अणञौ तच्चे० । सर्वभूमेर्निमित्तंसंयोग उत्पातो वा सार्वभौमः । पार्थिवः । सर्वभूमिशब्दोऽनुशतिकादिषु पठ्यते ।

## तस्येश्वरः ॥४१॥

षष्ठीसमर्थाभ्यां सर्व० ईश्वरेऽणञौ । सार्वभौमः । पार्थिवः ।

## तत्र विदिति इति च ।४२।

सप्तमीसमर्थाभ्यां सर्वभूमिपृथिवीभ्यां विदितेऽणञौ । सर्वभूमौ विदितः सार्वभौमः । पार्थिवः ।

## लोकसर्वलोकाट्ठञ् ।४३।

सप्त० भ्या । लोकसर्वलोकाभ्यां वि० ठञ् । लोके विदितः लौकिकः । सार्वलौकिकः । 'अनुशतिकादीनां च' त्युभयपदवृद्धिः ।

## तस्य वापः ।४४।

षष्ठीसमर्थाद्वापेयथा० । उप्यतेऽस्मिन्वापः क्षेत्रम् । प्रस्थस्य वापः प्रास्थिकम् । द्रौणिकम् । खारीकम् ।

## पात्रात्ष्ठन् ।४५।

ष० पात्राद्वापे ष्ठन् । पात्रशब्दोऽत्र परिमाणवाची । पात्रिकं क्षेत्रम् । पात्रिकी क्षेत्रभक्तिः ।

## तदस्मिन्वृद्ध्यायलाभशुल्कोपदा (१) दीयते ।४६।

प्रथमासमर्थात्सप्तम्यर्थे यथा० यत्तत्प्रथमासमर्थं वृद्ध्यादि चेत्तद्दीयते । पञ्चास्मिन् वृद्धिर्वाऽयो वा लाभो वा शुल्को वोपदा वा दीयते, इति पञ्चकः । सप्तकः । शत्यः । शतिकः । ( चतुर्थ्यर्थे (२) उपसंख्यानम् ) पञ्चास्मै वृद्ध्यादिर्दीयते पञ्चकोदेवदत्तः ।

---

[१] उत्तमर्णेन मूलातिरिक्तं ग्राह्यं वृद्धिः । ग्रामादिषु स्वामिग्राह्योभाग आयः । विक्रेत्रा मूल्यादधिकं ग्राह्यं लाभः । रक्षानिमित्तिकाभृतिः, राजभागःशुल्कः । उत्कोच उपदा ।

[२] यद्वि यस्मै दीयते तस्मिन्नपि तद्दीयते तत्र तदस्मिन् दीयत इत्येव सिद्धमिति खण्डितमिदम् ।

## पूरणाद्धार्द्धाट्ठन् ॥ ४७ ॥

प० पूरणान्तादर्धाच्चस० ठन् यत्प्रथ० । द्वितीयो वृद्धयादिरस्मिन्दीयते द्वितीयिकः । तृतीयिकः । अर्द्धिकः । अर्द्ध शब्दोरूपकस्यार्थे रूढः ।

## भागाद्यच्च ॥ ४८ ॥

प० भागाद् सप्त० यत्, चाट्ठन् । यत्प्र० । भागोवृद्धयादिरस्मिन्दीयते । भाग्यं भागिकं वा शतम् । भाग्या भागिका वा विंशतिः ।

## तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ॥ ४९ ॥

वंशादिभ्यः परो यो भारशब्दस्तदन्ताद् द्वितीयासमर्थाद्धरत्यादिषु य० । वंशभारं हरति वहति आवहति वा, वांशभारिकः । भारभूतेभ्योवंशादिभ्य-इतिव्याख्यान्तरम्, तेन भारभूतान् वंशान् हरति वांशिक इत्याद्यपि । भारादिति किम् । वंशं हरति । वंशादिभ्य इति किम् । व्रीहिभारं हरति ।

## वस्नद्रव्याभ्यां ठन्कनौ ॥ ५० ॥

द्वि०भ्यां वस्नद्रव्याभ्यां ह० ठन्कनौ । वस्नं हरतीत्यादि वस्निकः । द्रव्यकः ।

## सम्भवत्यवहरति पचति ॥ ५१ ॥

द्वि० सम्भवत्यादिषु यथा० । प्रस्थं सम्भवति अवहरति पचति वा प्रास्थिकः । ( तत्पचतीति द्रोणादण् च ) द्रौणी द्रौणिकीवा ।

## आढकाचितपात्रात्खोऽन्यतरस्याम् ॥ ५२ ॥

द्वि०भ्य आढकादिभ्यः सम्भ० खो वा । आढकीनः । आढकि-

को वा । आचितीनः । आचितिको वा । पात्रीणः । पात्रिको वा ।

## द्विगोःष्ठंश्च ॥ ५३ ॥

द्वि० आढकाद्यन्ताद्द्विगोःसम्भ०ष्ठन्खौ वा । द्वौआढकौस्चति । द्व्याढकिकः । द्व्याढकिकी । द्व्याढकीना । द्व्याढकी । द्व्याचितिकी । द्व्याचितीना । द्व्याचिता । द्विपात्रिकी द्विपात्रीणा । द्विपात्री ।

## कुलिजाल्लुक्खौ च ॥ ५४ ॥

द्वि०कुलिजान्ताद्द्विगोःसम्भ०लुक्खौ वा चात्ष्ठन् । द्विकुलिजा । लुक् । द्विकुलिजीना । ख । द्विकुलिजिकी । ष्ठन् । द्विकुलिजिकी । ठञ् ।

## सोऽस्यांशवस्नभृतयः ॥ ५५ ॥

प्र० अंशादिसमानाधिकरणात्षष्ठ्यर्थे यथा० । पञ्च अंशो वस्नो भृतिर्वाऽस्य । पञ्चकः । साहस्रः । अंशो भागः । वस्नं मूल्यम् । भृतिर्वेतनम् ।

## तदस्य परिमाणम् ॥ ५६ ॥

परिमाणसमानाधिकरणात्प्र०ष० यं० । प्रस्थं परिमाणमस्य प्रास्थिको राशिः । खारीकः । शत्यः । शतिकः । साहस्रः । द्रौणिकः । वर्षशतं परिमाणमस्य, वार्षशतिकः । षाष्टिकः ।

## संख्यायाः संज्ञासंघसूत्राऽध्ययनेषु ॥ ५७ ॥

परि० प्र० संख्यावाचिनःप्रातिपदिकात् ष० य० संज्ञादिष्वभिधेयेषु । ( तत्र संज्ञायां स्वार्थे प्रत्ययो वाच्यः ) पञ्चैव पञ्चकाः शकुनयः । पञ्च परिमाणमस्य पञ्चकः संघः । अष्टकं सूत्रम् । पञ्चकमध्ययनम् । ( स्तोमे डविधिः पञ्चदशाद्यर्थम् ) पञ्चदशः स्तोमः ।

## पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ।५८।

एते रूढिशब्दा निपात्यन्ते ।

## पञ्चद्दशतौ वर्गे वा ।५९।

एतौ निपात्येते वर्गे । पञ्च परिमाणमस्य पञ्चद् । पञ्चको वा वर्गः । दशद् । दशको वा ।

## सप्तनोऽञ् छन्दसि ।६०।

परि० प्र० सप्तन्प्रातिपदिकात्ष० अञ् छन्दसि वर्गे । सप्त साप्तानि असृजन् ।

## त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् ।६१।

परि० प्र० भ्यां त्रिंशच्चत्वारिंशद्भ्यां ष० डण् संज्ञायाम् । ब्राह्मणे । त्रिंशदध्यायाः परिमाणमेषां ब्राह्मणानाम् त्रैंशानि ब्राह्मणानि । चात्वारिंशानि ब्राह्मणानि ।

## तदर्हति ।६२।

द्वितीयासमर्थादर्हत्यर्थे यथाविहितं प्रत्यय । श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः शत्यः । शतिकः । साहस्रः ।

## छेदादिभ्योनित्यम् ।६३।

द्वि० भ्यश्छेदादिभ्यो नित्यम० य० । छेदं नित्यमर्हति छैदिको वेतसः भैदिकः ।

## शीर्षच्छेदाद्यच्च ।६४।

द्वि० शीर्षच्छेदान्नित्यम० यत् चाद्यथाविहितम् । शिरश्छेदमर्हति नित्यम शीर्षच्छेद्यः । शैर्षच्छेदिको वा । प्रत्ययसंनियोगेन शिरसः शीर्षभावो निपात्यते ।

## दण्डादिभ्यो यत्। ६५

द्वि० भ्यो दण्डादिभ्य अ० यत्। दण्ड्यः। मुसल्यः। अर्घ्यः। मेध्यः।

## छन्दसि च। ६६

द्वि० भ्योद० अ० यत् छन्दसि। उदकमर्हन्ति उदक्या वृत्तयः। यूप्यः पलाशः। गर्त्योदेशः।

## पात्राद्घंश्च। ६७

द्वि० पात्राद० घन् चाद्यत्। पात्रियः। पात्र्यो वा। ठक्ठञो रपवादः।

## कडङ्करदक्षिणाच्छ च। ६८

द्वि० भ्यां कडङ्करदक्षिणाभ्याम० छः। चाद्यत्। कडङ्करीयः। कडङ्कर्यो वा गौः। दक्षिणीयो दक्षिण्यो वा।

## स्थालीबिलात्। ६९

द्वि० स्थालीबिलाद्० अ० छयतौ। स्थालीबिलमर्हन्ति। स्थालीबिलीयास्तण्डुलाः। स्थालीबिल्या वा। पाकयोग्या इत्यर्थः।

## यज्ञर्त्विग्भ्यां घखञौ। ७०

द्वि० भ्यां यज्ञर्त्विग्भ्याम० घखञौ। यज्ञियो ब्राह्मणः। आर्त्विजीनः। (यज्ञर्त्विग्भ्यां तत् कर्म्मार्हतीत्युपसंख्यानम्) यज्ञियो देशः। आर्त्विजीनं कुलम्।

## पारायणतुरायणचान्द्रायणं वर्त्तयति॥ ७१

द्वि० भ्यः पारायणादिभ्यो वर्तयत्यर्थे ठञ्। पारायणं वर्तयति पारायणिकश्छात्रः। तौरायणिको यजमानः। चान्द्रायणिकस्तपस्वी।

## संशयमापन्नः॥ ७२

द्वि० संशयादापन्नेऽर्थे ठञ्। सांशयिकः स्थाणुः।

# योजनं गच्छति ॥ ७३ ॥

द्वि० योजनाद्गच्छत्यर्थे ठञ् । यौजनिकः । [ क्रोशशतयोजनशतयोरुपसंख्यानम् ] क्रौशशतिकः । यौजनशतिकः । [ ततोऽभिगमनमर्हतीतिक्रोशशतयोजनशतयोरुपसंख्यानम् ] क्रोशशतादभिगमनमर्हति । क्रौशशतिकः । यौजनशतिकः ।

# पथः ष्कन् ॥ ७४ ॥

द्वि० पथो ग० ष्कन् पन्थानं गच्छति । पथिकः । षकारोङीषर्थः । पथिकी ।

# पन्थो ण नित्यम् ॥ ७५ ॥

द्वि० पथोनित्यङ्ग० णः पन्थादेशश्च । पन्थानं नित्यं गच्छति । पान्थः । नित्यमितिकिम् पथिकः ।

# उत्तरपथेनाऽऽहृतञ्च ॥ ७६ ॥

तृतीयासमर्थादुत्तरपथशब्दादाहृतार्थे चाद् ग० ठञ् । उत्तरपथेनाहृतं गच्छति वा औत्तरपथिकम् [ आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसङ्ख्यानम् ] वारिपथिकः । जाङ्गलपथिकः । स्थालपथिकः । कान्तारपथिकः । [ अजपथशङ्कुपथाभ्याञ्च ] आजपथिकः । शाङ्कुपथिकः । [ मधुकमरिचयोरणस्थलात् ] स्थालपथ । मधुकं मरिचं वा ।

# कालात् ॥ ७७ ॥

कालादित्यधिक्रियते । व्युष्टादिभ्योऽण् इति यावत् ।

# तेन निर्वृत्तम् ॥ ७८ ॥

तृ० कालवाचिनो निर्वृत्तेऽर्थे ठञ् । अह्ना निर्वृत्तमाह्निकम् ।

## तमधीष्टोभृतोभूतोभावी ॥ ७९ ॥

द्वि० का० अधीष्टादिष्वर्थेषु ठञ् । अधीष्टः सत्कृत्य व्यापारितः । भृतो वेतनेन क्रीतः । भूतः स्वसत्तया व्याप्तकालः । भावी तादृश एवानागतः 'कालाध्वनोः' इति द्वितीया । मासमधीष्टो भृत इत्यादि मासिकः । अध्यापकः, कर्मकरः, व्याधिः, उत्सवो वा ।

## मासाद्वयसि यत्खञौ ॥ ८० ॥

द्वि० का० मासाद् भूतेऽर्थे यत् खञौ वयसि । मासम्भूतो मास्यो मासीनो वा ।

## द्विगोर्यप् ॥ ८१ ॥

द्वि० का० मासान्ताद् द्विगोर्भू० ०यप् व० । द्वौ मासौ भूत इति द्विमास्यः ।

## षण्मासाण्ण्यच्च ॥ ८२ ॥

द्वि० का० षण्मासात् भू० ण्यत्चाद्यप् ठञ् च व० । षण्मासं भूतः षाण्मास्यः । षण्मास्यः । षाण्मासिकः ।

## अवयसि ठंश्च ॥ ८३ ॥

द्वि० का० षण्० भू० ठन् चात्ण्यद् वयसि । षण्मासिकोरोगः । षाण्मास्योवा ।

## समायाः खः ॥ ८४ ॥

द्वि० का० समाशब्दादधी० खः । समामधीष्टो भृतो भूतो भावी वा समीनः । केचित्तु 'तेन निर्वृत्त' मिति सर्वत्रानुवर्तयन्ति । समया निर्वृत्तः समीनः ।

## द्विगोर्वा ॥ ८५ ॥

द्वि० का० समान्ताद् द्विगोः अ० वा खः । पक्षे ठञ् । द्वे समे अधीष्टो भृतो भूतो भावी वा द्विसमीनः द्वैसमिकः ।

## रात्र्यहस्संवत्सराच्च । ८६

द्वि० रात्र्याद्यन्ताद्द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः पक्षे ठञ् । द्वे रात्री अधीष्टोभृतो भूतो भावी वा द्विरात्रीणः । द्वाभ्यां रात्रिभ्यां वा निर्वृत्तो द्विरात्रीण इत्यादि । द्विरात्रीणः । द्वैरात्रिकः । द्व्यहीनः । द्व्यह्निकः । द्विसम्वत्सरीणः । द्विसाम्वत्सरिकः । सङ्ख्यायाः संवत्सरसंख्यस्य चेत्युत्तर पद वृद्धिः ।

## वर्षाल्लुक् च । ८७

द्वि० वर्षान्ताद्द्विगोर्नि० वा खः पक्षे ठञ् तयोश्च लुक् । द्विवर्षः । द्विवर्षीणः । द्विवार्षिकः(१) । द्वौ वर्षौ अधीष्ट इत्यादि विग्रहः ।

## चित्तवति नित्यम् । ८८

द्वि० व० नि० विहितस्य प्रत्ययस्य नित्यं लुक् चित्तवत्यभिधेये । द्वौ वर्षौ भूतो द्विवर्षो दारकः । चित्तवतीति किम् । द्विवर्षीणो व्याधिः ।

## षाष्टिकाः षाष्टिरात्रेण पच्यन्ते । ८९

तृ० षष्टिरात्रश० पच्यन्तेऽर्थे कन् निपात्यते रात्रिशब्दस्य च लोपः । षष्टिरात्रेण पच्यन्ते षष्टिकाः । संज्ञैषा धान्यविशेषस्य ।

## वत्सरान्ताच्छश्छन्दसि । ९०

तृ० वत्सरान्तान्नि० छश्छन्दसि । इद्वत्सरीय । इदावत्सरीयः ।

## सम्परिपूर्वात्खच । ९१

तृ० सम्परिपूर्वाद्वत्सरान्तात्खश्चाच्छश्छं० । सम्वत्सरीणः । सम्वत्सरीयः । परिवत्सरीणः । परिवत्सरीयः ।

## तेन परिजय्यलभ्यकार्य्यसुकरम् । ९२

तृ० का० एष्वर्थेषु ठञ् । मासेन परिजय्यो ( जेतुं शक्यः ) लभ्यः कार्य्यः सुकरोवा मासिकः ।

---

(१)-वर्षस्याभविष्यति । ७ । ३ । १६ । इत्युत्तरपदवृद्धिः । भविष्यतितु द्वैवार्षिकः ।

## तदस्य ब्रह्मचर्य्यम् ॥ ६३ ॥

ब्रह्मचर्य्यसमानाधिकरणाद् द्वि० का० ष० ठञ् । मासं ब्रह्मचर्य्यमस्य मासिको ब्रह्मचारी । यद्वा प्रथमान्तादस्येत्यर्थे प्रत्ययः । मासोऽस्येति मासिकं ब्रह्मचर्यम् । [ महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम् ] महानाम्नी व्रतम् । महानाम्नीनां ब्रह्मचर्य्यं माहानाम्निकम् । आदित्यव्रतिकम् । [ तच्चरतीति च ] महानाम्नीश्चरतीति माहानाम्निकः । 'भस्याढे' इति पुंवद्भावः । 'नस्तद्धिते' इति टिलोपः । अवान्तरदीक्षादिभ्योडिनिर्वक्तव्यः । अवान्तरदीक्षी [ अष्टाचत्वारिंशतोड्वुंश्च डिनिश्च वक्तव्यः ] अष्टाचत्वारिंशद्वर्षाणि व्रत चरति अष्टाचत्वारिंशकः । अष्टाचत्वारिंशी [ चातुर्मास्यानां यलोपश्च ड्वुंश्च डिनिश्च वक्तव्यः ] चातुर्मास्यानि चरति चातुर्मासकः । चातुर्मासी । [ चतुर्मासाण्ण्यो यज्ञे तत्र भवे ] चातुर्मास्या यज्ञाः । [ संज्ञायामण् ] चतुर्षु मासेषु भवा पौर्णमासी चातुर्मासी । आषाढी, कार्तिकी, फाल्गुनी ।

## तस्य च दक्षिणा यज्ञाख्येभ्यः ॥ ६४ ॥

ष० यज्ञाख्येभ्यो दक्षिणाऽर्थे ठञ् । द्वादशाहस्य दक्षिणा-द्वादशाहिकी । आख्याग्रहणादकालादपि अग्निष्टोमस्य दक्षिणाऽऽग्निष्टोमिकी ।

## तत्र च दीयते कार्य्यं भववत् ॥ ६५ ॥

सप्तमीसमर्थात्कालाद्दीयते कार्य्यमित्येतयोरर्थयोर्भववत्प्रत्ययाः । मासे दीयते कार्य्यं वा मासिकम् । प्रावृषेण्यम् । शारदम् । ठञधिकारे कालाधिकारस्य पूर्णोऽवधिः ।

## व्युष्टादिभ्योऽण् ॥ ६६ ॥

स० भ्यो व्युष्टादिभ्यो दी० अण् । व्युष्टे दीयते कार्य्यं वा वैयुष्टम् । व्युष्टशब्दः कालवाची दिवसमुखे वर्तते [ सर्वत्राऽण्ग्रहणेऽग्निपदादिभ्य उपसंख्यानम् ] अग्निपदे दीयते कार्य्यं वा आग्निपदम् । पैलुमूलम्

## तेन यथाकथाचहस्ताभ्यां णयतौ ॥ ९७ ॥

तृ० भ्यां यथाकथाचहस्ताभ्यां दी० णयतौ । यथाकथाच दीयते कार्य्यं वा याथाकथाचम् । अनादरेण देयं कार्यं वेत्यर्थः । हस्त्यम् हस्तेन दीयते कार्यं वा अर्थाभ्यां न यथासख्यम् । यथाकथा चेत्यव्यय-संघातेऽनादरे वर्तते ।

## सम्पादिनि ॥ ९८ ।

तृ० सम्पादिन्यर्थे ठञ् । कर्णवेष्टकाभ्यां संपादि कार्णवेष्टकिकम् मुखम् । कर्णालङ्काराभ्या मवश्यं शोभत इत्यर्थः । गुणोत्कर्षः सम्पत्तिः ।

## कर्म्मवेषाद्यत् ॥ ९९ ॥

तृ० भ्यां कर्मवेषाभ्यां सम्पा० यत् । कर्मण्यम् शरीरम् । वेष्योनटः । कर्मणासम्पद्यते । वेषेण सम्पद्यते इति विग्रहः । वेषः कृत्रिम आकारः ।

## तस्मै प्रभवति सन्तापादिभ्यः ॥ १०० ॥

चतुर्थीसमर्थेभ्यः सन्तापादिभ्यः प्रभवत्यर्थे ठञ् । सन्तापाय प्रभवति सान्तापिको मोहः । सान्नाहिकः ।

## योगाद्यच्च ॥ १०१ ॥

च० योगात् प्र० यत् चाट्ठञ् । योगाय प्रभवति । योग्यः । यौगिको वा ।

## कर्म्मण उकञ् ॥ १०२

च० कर्मणः प्र० उकञ् । कर्मणे प्रभवति । कार्मुक धनुः । नान्यत्र धनुषोऽनभिधानात् ।

## समयस्तदस्य प्राप्तम् ॥ १०३ ॥

प्रथमासमर्थात्समयात् षष्ठ्यर्थे ठञ् यत्प्रथमासमर्थं तत्प्राप्तञ्चेत् । समयः प्राप्तोऽस्य सामयिक कार्य्यम् । उपनतकालमित्यर्थः ।

## ऋतोरण् ॥ १०४ ॥

प्र० ऋतोः ष० अण् यत्प्रथमासमर्थं प्राप्तञ्चेत् । ऋतुः प्राप्तोऽस्य आर्तवम् पङ्कजम् । ( तदस्य प्रकरणे उपवस्त्रादिभ्य उपसंख्यानम् ) उपवस्त्रा प्राप्तास्य औपवस्त्रम् ।

## छन्दसि घस् ॥ १०५ ॥

प्र० ऋतोः ष० घस् छन्दसि यत्प्र०। अयं ते योनिर्ऋत्वियः ।

## कालाद्यत् ॥ १०६ ॥

प्र० कालात् ष० यत् यत्प्र० । कालः प्राप्तोऽस्य कालयस्तापः ।

## प्रकृष्टे ठञ् ॥ १०७

प्रकृष्टेऽर्थे वर्तमानात्का० प्र० ष० ठञ् । प्रकृष्टः कालोऽस्य कालिकं वैरम् । ठञ् ग्रहणं विस्पष्टार्थम् ।

## प्रयोजनम् ॥ १०८ ॥

प्र० ष० ठञ् यत्प्रथमासमर्थं तत्प्रयोजनञ्चेत् । प्रयोजनं फलं कारणञ्च । भौजनिकी स्थितिः पायसिकम् ।

## विशाखाषाढादण् मन्थदण्डयोः ॥ १०९ ॥

प्र० भ्यां विशाखाषाढाभ्या ष० अण् मन्थदण्डयोरभिधेययोःयत्प्र०। विशाखाप्रयोजनमस्य वैशाखो मन्थः । आषाढो दण्डः । ( चूडादिभ्य उपसंख्यानम् ) चूडा प्रयोजनमस्य चौडम् । श्रद्धा प्रयोजनमस्य श्राद्धम् ।

## अनुप्रवचनादिभ्यश्छः ॥११०॥

प्र० भ्योऽनुप्रवचनादिभ्यः ष० छः यत्प्र० । अनुप्रवचनीयम् । ( छप्रकरणे [illegible]शिपूरीपदिरुहिप्रकृतेरनात्सपूर्वपदादुपसंख्यानम् ) गेहानुप्रवेशनीयम् । प्रपापूरणीयम् । गोप्रपदनीयम् । प्रासादरोहणीयम् । ( स्वर्गादिभ्यो यद्वक्तव्यः ) स्वर्गः प्रयोजनमस्य स्वर्ग्यम् । यशस्यम् । आयुष्यम् । धन्यम् । ( पुण्याहवाचनादिभ्यो लुग्वक्तव्यः ) पुण्याहवाचनं प्रयोजनमस्य पुण्याहवाचनम् ।

## समापनात्सपूर्वपदात् ॥१११॥

प्रयोजनसमानाधिकरणात् प्र० सपूर्वात् समापनात् ष० छः । व्याकरणसमापनीयम् । व्याकरणसमापनं प्रयोजनमस्येति विग्रहः ।

## ऐकागारिकट् चौरे ॥ ११२ ॥

ऐकागारिकडिति निपात्यते चौरेऽभिधेये । एकागारं प्रयोजनमस्य ऐकागारिकश्चौरः । 'प्रयोजनम्' इत्यनेनैवसिद्धे चौरे नियमार्थमिदं वचनम् ।

## आकालिकडाद्यन्तवचने ॥ ११३ ॥

आकालिकडिति निपात्यते आद्यन्तवचने । समानकालावाद्यन्तावस्य आकालिकःस्तनयित्नुः ( आकालाट्ठंश्च ) आकालिका[१] । समानकालशब्दस्याकालशब्दआदेशः । आद्यन्तयोश्च तद्विशेषणम् । ठञः पूर्णोऽवधिः ।

## तेन तुल्यं क्रियाचेद्वतिः ॥ ११४ ॥

तेनेति तृ॰ तुल्यमित्यर्थे वतिः यत्तुल्यं सा क्रिया चेत् । ब्राह्मणेन तुल्यं ब्राह्मणवत् । क्रियाग्रहणं किम् । गुणद्रव्यतुल्ये मा भूत् । पुत्रेण सह स्थूलः । पुत्रेण तुल्यः पिङ्गलः ।

## तत्र तस्येव । ११५

तत्रेतिसप्तमीसमर्थात् षष्ठीसमर्थाच्च इवार्थे वतिः यत्तुल्यं सा क्रिया चेत् । मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः । यज्ञदत्तवन्मैत्रस्य गावः ।

## तदर्हम् ॥ ११६ ॥

द्वितीयासमर्थादर्हन्यर्थे वतिः । राजानमर्हति, राजवत् पालनम् । क्रियेत्यनुवर्तनान्नेह–राजानमर्हति छत्रम् ।

## उपसर्गाच्छन्दसि धात्वर्थे ॥ ११७ ॥

धात्वर्थे वर्तमानादुपसर्गाद्वतिः छन्दसि । यदुद्वतो निवतोयासिबप्सद् । उद्गतानि निगतानि च ।

## तस्य भावस्त्वतलौ ॥ ११८ ॥

षष्ठीसमर्थाद्भाव इत्यथ त्वतलौ । अश्वत्वम् । अश्वता । इह शब्दस्य प्रवृत्ति निमित्तं भाव शब्देनोच्यते ।

## आ च त्वात् ॥ ११९ ॥

त्वशब्दादात्वतलावधिक्रियेते । म्रदिमा । मार्दवम् । मृदुत्वम् । मृदुता ।

१–आकालिका विद्युत् । जन्मना तुल्यकालविनाशा । उत्पत्त्यनन्तरं विनाशीत्यथः ।

## न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवण वटयुधकतरसलसेभ्यः ॥ १२० ॥

वक्ष्यमाणभावप्रत्ययाश्चतुराद्यन्तभिन्नान्नञ्पूर्वात्त्पुरुषान्न। अपतित्वम्। अपतिता। 'पत्यन्तपुरोहितादिभ्य इति यक्न्। नञ्पूर्वात् किम्। बार्हस्पत्यम्। तत्पुरुषात्किम्। नास्य पटव इति अपटुस्तस्य भावः आपटवम्। अचतुरेति किम्। आचतुर्यम्। आसंगत्यमित्यादि।



## पृथ्वादिभ्य इमनिज्वा ॥ १२१ ॥

प० भ्यः पृथ्वादिभ्यो भावेऽर्थे इमनिज्वा। प्रथिमा। पार्थवम्। पृथुत्वम्। पृथुता। 'टेः' इति टिलोपः। 'रऋतः'[१] इति रेफादेशः।

## वर्णदृढादिभ्यः ष्यञ्च ॥ १२२ ॥

प० भ्यो वर्णदृढादिभ्यो भा० ष्यञ् चादिमनिच। शुक्लस्य भावः शौक्ल्यम्। शुक्लत्वम्। शुक्लता। शुक्लिमा। दार्ढ्यम्। दृढत्वम्। दृढता। द्रढिमा। षोडीषर्थः। औचिती याथाकामी।

## गुणवचनब्राह्मणादिभ्यः कर्मणि च ॥ १२३ ॥

प० भ्यो गुणवचनेभ्यो ब्राह्मणादिभ्यश्च कर्मणि भावेऽर्थे ष्यञ्। जडस्य भावः कर्म वा, जाड्यम्। जडत्वम्। जडता वा। ब्राह्मण्यम्। ब्राह्मणत्वम्। ब्राह्मणता वा। ब्राह्मणादिराकृतिगणः। (चातुर्वर्ण्यादीनामुपसंख्यानम्) चातुर्वर्ण्यम्। (चतुर्वेदस्योभयपदवृद्धिश्च) चत्वारो वेदानधीते चतुर्वेदः स एव चातुर्वैद्यः। चातुराश्रम्यम्। (अर्हतो नुम् च) आर्हन्त्यम्। आर्हन्ती स्त्रीचेत्।

## स्तेनाद्यन्नलोपश्च ॥ १२४ ॥

प० स्तेनाद्भावकर्म्मणोर्यन्नलोपश्च। 'स्तेन चौर्ये' पचाद्यच्। स्तेनस्य भावः कर्म वा, स्तेयम्। स्तेनादिति योग विभज्य स्तैन्यमिति ष्यञन्तमपि केचिदिच्छन्ति।

## सख्युर्यः ॥ १२५ ॥

प० सख्युर्भावकर्म्मणोर्यः। सख्यम्। (दूतवणिग्भ्याञ्च) दूत्यम्। वणिज्यम्। ब्राह्मणादित्वाद् वाणिज्यमित्यपि।

---

१—'पृथु,मृदु, भृशकृश दृढ परिवृढानामेव रत्वम्' इति वार्तिकम्।

## कपिज्ञात्योर्ढक् ॥ १२६ ॥

ष० भ्यां कपिज्ञातिभ्यां भावकर्म्मणोर्ढक् । कपेर्भावः कर्म्म वा कापेयम् । ज्ञातेयम् ।

## पत्यन्तपुरोहितादिभ्यो यक् ॥१२७॥

ष० भ्यः पत्यन्तपुरोहितादिभ्यो भावकर्म्मणोर्यक् । सैनापत्यम् । पौरोहित्यम् । ( राजाऽसे ) ग० सू० । राजन्शब्दोऽसमासे यक लभत इत्यर्थः । राज्ञः कर्म भावो वा राज्यम् । समासे तु ब्राह्मणादित्वात्ष्यञ् । आधिराज्यम् ।

## प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ॥१२८॥

ष० भ्यः प्राणभृदादिभ्योभावकर्मणोरञ् । अश्वस्य भावः कर्म वा आश्वम् । कौमारम् । औद्गात्रम् ।

## हायनान्तयुवादिभ्योऽण् ॥१२९॥

ष० भ्यो हायनान्तादिभ्यो युवादिभ्यश्च भावकर्मणोरण् । द्विहायनस्य भावः कर्म वा । द्वैहायनम् । यौवनम् । कौशलम् । ( श्रोत्रियस्य यलोपश्च ) श्रौत्रम्

## इगन्ताच्च लघुपूर्वात् ॥१३०॥

ष० लघुपूर्वादिगन्ताद्भावकर्म्मणोरण् । मुनेर्भावः कर्म वा । मौनम् । शौचम् । कविशब्दस्य ब्राह्मणादि त्वात् काव्यम् । इगन्तादिति किम् । पटुत्वम् । लघुपूर्वादिति किम् । पाण्डुत्वम् ।

## योपधाद्गुरूपोत्तमाद्वुञ् ॥१३१॥

ष० योपधाद्गुरूपोत्तमाद्भावकर्म्मणोर्वुञ् । रामणीयकम् । (सहायाद्वा) साहाय्यम् । साहायकम् । योपधादिति किम् । विमानत्वम् । गुरूपोत्तमात् किम् । क्षत्रियत्वम् ।

## द्वन्द्वमनोज्ञादिभ्यश्च ॥१३२॥

ष० भ्यो द्वन्द्वमनोज्ञादिभ्यो भावकर्म्मणोर्वुञ् । गौपालपशुपालिका । मानोज्ञकम् । गोपाल पशुपालानां भावः कर्म वेति ।

---

कुशल चपल निपुण पिशुन कुतूहल क्षेत्रज्ञ युवादिषु ब्राह्मणादिषु च पठ्यन्ते । तेन कौशल्य मित्याद्यपि ।

## गोत्रचरणाच्छ्लाघाऽत्याकारतदवेतेषु ॥ १३३॥

ष० गोत्रवाचिनश्चरणवाचिनश्च भावकर्मणोर्वुञ् श्लाघादिषु । श्लाघा-विकत्थनम् । अत्याकारः-पराधिक्षेपः । ते-गोत्रचरणयोर्भावकर्मणी प्राप्तस्तदवेतः । गार्गिकया श्लाघतेऽत्याकुरुते वा, काठिकया श्लाघते अत्या कुरुते वा, गार्गिकामवेतः । काठिकामवेतः । श्लाघादिष्विति किम् । गार्ग्यत्वम् । कठत्वम् ।

## होत्राभ्यश्छः ॥ १३४ ॥

ष० भ्यः ऋत्विग्विशेषवाचिभ्यो भावकर्म्मणोश्छः । मित्रावरुणीयम् । अच्छावाकीयम् ।

## ब्रह्मणस्त्वः ॥ १३५ ॥

ष० ऋ० ब्रह्मन्शब्दाद् भावकर्म्मणोस्त्वः । ब्रह्मणो भावः कर्म वा ब्रह्मत्वम् । ब्राह्मणपर्यायात्तु त्वतलौ ॥ ब्रह्मत्वम् । ब्रह्मता । नेति वाच्ये त्ववचनं तलो बाधनार्थम् ।

इति पञ्चमाध्यायस्य प्रथमः पादः ।

---

# अथ पञ्चमाध्यायस्य द्वितीयः पादः ।

---

## धान्यानां भवने क्षेत्रे खञ् ॥ १ ॥

षष्ठीसमर्थाद्धान्यवाचिनो भवने क्षेत्रे खञ् । भवन्ति जायन्तेऽस्मिन्निति भवनं क्षेत्रम् । मुद्गानां भवनं क्षेत्रं मौद्गीनम् । कौद्रवीणम् । धान्यानामिति किम् । तृणानां भवनमत्र न । क्षेत्रमिति किम् । मुद्गानां भवनं कुशूलम् ।

## व्रीहिशाल्योर्ढक् ॥ २ ॥

ष० भ्यां व्रीहिशालिभ्यां भ० ढक् । व्रीहीणां भवनं क्षेत्रं व्रैहेयम् । शालेयम् ।

## यवयवकषष्टिकाद्यत् ॥ ३ ॥

ष० भ्यो यवादिभ्यो भ० यत्। यवानां भवनं क्षेत्रम्। यव्यम्। यवक्यम्।। षष्टिक्यम्।

## विभाषा तिलमाषोमाभङ्गाणुभ्यः ॥ ४ ॥

ष० भ्यस्तिलादिभ्योभ० वा यत्। पक्षे खञ्। तिलानां भवनं क्षेत्रम्। तिल्यम्। तैलीनम्। माष्यम्। माषीणम्। उम्यम् औमीनम्। भङ्ग्यम्। भाङ्गीनम्। अणव्यम्। आणवीनम्।

## सर्वचर्म्मणः कृतः खखञौ ॥ ५ ॥

तृतीयासमर्थात्सर्वचर्म्मणः कृतेऽर्थे खखञौ। असामर्थ्येऽपि निपातनात्समासः। सर्वश्चर्मणा कृतः, सर्वचर्म्मीणः। सार्वचर्म्मीणः।

## यथामुखसम्मुखस्य दर्शनः खः ॥ ६ ॥

ष० भ्यां यथामुखसम्मुखाभ्यां दर्शनेऽर्थे खः। दृश्यतेऽस्मिन्निति दर्शनः आदर्शादिः उच्यते। निपातनात्सादृश्येऽव्ययीभावः। यथामुखं दर्शनोयथामुखीनः। सर्वस्य मुखस्य दर्शनः, सम्मुखीनः। सर्वपर्यायस्य समशब्दस्यान्तो लुप्यते निपातनात्।

## तत्सर्वादेः पथ्यङ्गकर्म्मपत्रपात्रं व्याप्नोति ॥ ७ ॥

द्वितीयासमर्थात्पथ्याद्यन्ताद्व्याप्नोत्यर्थे खः। सर्वपथंव्याप्नोति सर्वपथीनो रथः। सर्वाङ्गीणस्तापः। सर्वकर्म्मीणः पुरुषः। सर्वपत्रीणः सारथिः। सर्वपात्रीण ओदनः।

## आप्रपदं प्राप्नोति ॥ ८ ॥

प्रपद मिति पादस्याग्रमभिधीयते। आङ्मर्यादायां तयोरव्ययीभावः। द्वि० आप्रपदा (१) त्प्राप्नोत्यर्थे खः। आप्रपदं प्राप्नोति आप्रपदीनः पटः।

## अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ॥ ९ ॥

द्वि० भ्योऽनुपदादिभ्यो बद्धादिष्वर्थेषु खः। अनुरायामे सादृश्ये वा। अनुपदं बद्धाअनुपदीना उपानत्। प प्रमाणेत्यर्थः। अयः प्रदक्षिणमनयः

---

(१)—पादस्याग्रं प्रपदं तन्मर्यादीकृत्येत्याप्रपदम्।

अनुपदीना उपानत् । पदप्रमाणेत्यर्थः । सर्वान्नीनः । अयः प्रदक्षिणनयः प्रसव्यम् । अयानयीनः अयानयं नेयः ।

## परोवरपरम्परपुत्रपौत्रमनुभवति । १० ।

द्वि० भ्यः परोवरादिभ्योऽनुभवत्यर्थे खः । परोवरेति परस्योत्वं प्रत्ययसंनियोगेन निपात्यते । परांश्चावरांश्चानुभवतीति परोवरीणः । परपरतराणांश्च परम्पर शब्दो निपात्यते । परम्परीणः । पुत्रपौत्रीणः ।

## अवारपारात्यन्तानुकामङ्गामी ॥ ११ ॥

द्वि० भ्योऽवारादिभ्यो गामीत्यर्थे खः । अवारपारीणः । ( विगृहीताद्विपरीताच्चेति वक्तव्यम् ) अवारीणः । पारीणः । पारावारीणः । अत्यन्तीनः । अनुकामीनः ।

## समांसमांविजायते ।१२।

समांसमांशब्दाद्विजायतेऽर्थे खः । समांसमीना गौः । समांसमीना सा यैव प्रतिवर्षं प्रसूयते ।

## अद्यश्वीनाऽवष्टब्धे ।१३।

अद्यश्वीना इति निपात्यतेऽवष्टब्धे विजने । अद्य श्वो वा विजायते अद्यश्वीना वडवा । आसन्नप्रसवेत्यर्थः ॥ अवष्टब्ध शब्दआसन्नपरः । केचितु विजायत इति नानुवर्तयन्ति । अद्यश्वीनं मरणम् । आसन्नमित्यर्थः ।

## आगवीनः ।१४।

आगवीन इति आङ्पूर्वाद्गोः कर्म करे । खः निपात्यते । आगवीनः कर्मकरः । गोः प्रत्यर्पणपर्यन्त कर्म करोति स इत्यर्थः ।

## अनुग्वलङ्गामी ।१५।

अनुगोरलङ्गामीत्यर्थे खः । अनुगवीनो गोपलः । गोःपश्चात् पर्याप्तं गच्छतीत्यर्थः ।

## अध्वनो यत्खौ ॥१६॥

द्वि० अध्वनोऽलङ्गामीत्यर्थे यत्खौ । अध्वानमलं पर्याप्तं गच्छति अध्वन्यः । अध्वनीनः । ( ये चाभावकर्मणोः' आत्माध्वानौ खे' इति प्रकृतिभावः । )

## अभ्यमित्राच्छ च।१७

द्वि० अभ्यमित्राद् अल० छश्चाद् यत्खौ । अभ्यमित्रीयः । अभ्यमित्र्यः । अभ्यमित्रीणः । अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः ।

## गोष्ठात्खञ्भूतपूर्वे।१८

भूतपूर्वेऽर्थे वर्त्तमानाद् गोष्ठात् खञ् । गावस्तिष्ठन्त्यस्मिन्सगोष्ठः । गोष्ठो भूतपूर्वः गौष्ठीनो देशः ।

## अश्वस्यैकाहगमः।१९

ष० अश्वादेकाहगमेऽर्थे खञ् । एकाहेन गम्यत इति एकाहगमः आश्वीनोऽध्वा ।

## शालीनकौपीने अधृष्टाकार्य्ययोः।२०

शालीनकौपीने इति निपात्येतेऽधृष्टाकार्य्ययोरर्थयोः । शालीनः । अधृष्टः । १कौपीनम् पापम् । शालाप्रवेशमर्हति, कूपपतनमर्हतीति च विग्रहः । रूढिशब्दावेतौ नात्रान्वयार्थेऽभिनिवेशः ।

( १ )—तत्साधनत्वात्तद् गोप्यत्वात्पुरुषलिङ्गमपि । तत्संबन्धात् तदाच्छादनमपि ।

# व्रातेन जीवति । २१

वृ० व्राताज्जीवत्यर्थे खञ् । व्रातेन शरीरायासेन नतु बुद्धिवैभवेन जीवति व्रातीनः ।

# साप्तपदीनं सख्यम् । २२

साप्तपदीनमिति निपात्यते सख्यञ्चेत् । सप्तभिःपदै रवाप्यते इति विग्रहः ।

# हैयङ्गवीनं सञ्ज्ञायाम् । २३

( ह्योगोदोहस्य हियङ्गुरादेशः विकारार्थे खञ् च ) हैयङ्गवीनमिति निपात्यते सञ्ज्ञा चेत् । ह्यो गोदोहस्य विकारो हैयङ्गवीनं घृतम् । दुह्यत इति दोहः क्षीरम् । गोदोहः गोदोहः ।

# तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ । २४

ष० पील्वादिभ्यः कर्णादिभ्यश्च पाकमूलयोरर्थयोः कुणब्जाहचौ । पीलूनां पाकः पीलुकुणः । कर्णस्य मूलं कर्णजाहम् ।

# पक्षात्तिः । २५

ष० पक्षात्मूलेऽर्थे तिः । पक्षतिः प्रतिपत् । पक्षिणां पक्षमूलं च ।

# तेन वित्तश्चुञ्चुप्चणपौ । २६

तृतीयासमर्थाद्वित्तेऽर्थे चुञ्चुप् चणपौ । पकारः प्रत्यययो रादौ लुप्त निर्दिष्टस्तेन चस्य नेत्संज्ञा । विद्यया वित्तः प्रतीतो ज्ञातो वा विद्याचुञ्चुः । केशचणः ।

## विनञ्भ्यां नानाञौ नसह । २७

असहार्थे वर्तमानाभ्यां विनञ्भ्यां नानाञौ स्वार्थे । विना । नाना ।

## वेः शालच्छङ्कटचौ । २८

विप्रातिपदिकाच्छालच्छङ्कटचौ । विशालः । विशङ्कटः । विस्तृत इत्यर्थः ।

## सम्प्रोदश्च कटच् । २९

सम्प्रोद्भ्यो वेश्च कटच् । सङ्कटम् । प्रकटम् । उत्कटः । विकटः । ( कटच्प्रकरणेऽलाबूतिलोमाभ्यो रजस्युपसंख्यानम् ) अलाबूकटम् । तिलकटम् । उमाकटम् । ( भङ्गायाश्च ) भङ्गाकटम् । गोष्ठजादयः स्थानादिषु पशुनामादिभ्य ) गोगोष्ठम् । अविगोष्ठम् । ( संघे कटच् ) अविकटः । उष्ट्रकटः । ( विस्तारे पटच् ) अविपटम् । ( द्वित्वे गोयुगच् ) द्वावुष्ट्रौ उष्ट्रगोयुगम् ( स्नेहने तैलच्शब्दश्च प्रयोक्तव्यः ) इङ्गुदतैलम् । सर्षपतैलम् । ( सम्भवने क्षेत्रे शाकटशब्दश्च प्रयोक्तव्यः ) इक्षुशाकटम् । ( शाकिनशब्दश्च प्रयोक्तव्यः ) इक्षुशाकिनम् ।

## अवात्कुटारच्च । ३०

अवात्कुटारच् चात्कटच् च । अवकुटारम् । अवकटम् ।

## नते नासिकायाः सञ्ज्ञायां टीटञ्-नाटज्भ्रटचः । ३१

नासिकाया नतेऽर्थे वर्तमानादवाट्टीटञ् नाटज्भ्रटचः सञ्ज्ञायाम् । अवटीटम् । अवनाटम् । अवभ्रटम् । तत् योगान्नासिकापि पुरुषोऽपि तथोच्यते । अवटीटा नासिका । अवनाटः पुरुषः ।

## नेर्बिडज्बिरीसचौ । ३२

ना० नतेऽभि० सं० नेर्बिडज्बिरीसचौ । निबिडम् । निबिरीसम् । तद्योगात्पुरुषोऽपि निबिडः । नासिकापि निबिडेत्यादि । कथ निबिडाः केशा निबिड वस्त्रमिति । उपमानाद्भविष्यति ।

## इनच्पिटच्चिकचि च । ३३

ना० निप्रातिपदिकादिनच्पिटच् एतौ तत्सन्नियोगेन निशब्दस्य यथा संख्यं चिक चि, एतावादेशौ । चिकिनः । चिपिटः ( इनच्पिटच्काश्चि- कचिचिकादेशाश्च ) चिकः ( क्लिन्नस्य चिल् पिल्लश्चास्य चक्षुषी ) क्लिन्ने चक्षुषी अस्य चिल्लः । पिल्लः । ( चुल् च वक्तव्यः ) चुल्लः । अस्येत्यनेन नार्थः । चक्षुषोरेवाभिधाने प्रत्यय इष्यते । क्लिन्ने चक्षुषी, चिल्ले । पिल्ले चुल्ले । तद्योगात्तु पुरुष स्तथोच्यते ।

## उपाधिभ्यांत्यकन्नासन्नारूढयोः । ३४

आसन्नारूढयोरर्थयोर्वर्तमानाभ्यामुपाधिभ्यां त्यकन् । पर्वतस्यासन्नम्, उपत्यका । तस्यैवारूढम् । अधित्यका । 'प्रत्ययस्थात्कात्' इति नात्रभवति, संज्ञाधिकारात् ।

## कर्म्मणि घटोऽठच् । ३५

सप्तमीसमर्थात्कर्म्मणो घट इत्यर्थेऽठच् । कर्मठः । घटत इति घटः पचाद्यच् ) कर्मणि घटत इत्यर्थः ।

## तदस्य सञ्जातं तारकादिभ्य इतच् । ३६

सञ्जातसमानाधिकरणेभ्यः प्रथमासमर्थेभ्यस्तारकादिभ्यः षष्ठ्यर्थे इतच् । तारकाः सञ्जाता अस्य नभसः तारकितं नभः । पुष्पितो वृक्षः । तारकादिराकृतिगणः ।

## प्रमाणेद्वयसज्दघ्नञ्मात्रचः । ३७

प्रमाणार्थे वर्तमानात् प्रातिपदिकात् प्र०ष०द्वयसजादयः । प्रमाणमिह परिच्छेदकमात्रम् । ऊरुद्वयसम् । ऊरुदघ्नम् । ऊरुमात्रम् (१)। ( वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलं वक्तव्यौ ) तावदेव तावद्द्वयसम् । तावन्मात्रम् । यावद्द्वयसम् । यावन्मात्रम् । अत्र 'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम' इति भाष्याद् द्वयसज्दघ्नचौ ऊर्ध्वमाने एव भवतः । मात्रच्च प्रमाण एव । प्रमाणं चेह परिच्छेदकमात्रम् ।

## पुरुषहस्तिभ्यामण् च । ३८

प्रमाणेऽर्थे वर्तमानाभ्यां पुरुषहस्तिभ्यां प्र० ष० अण् चाद् द्वयसजादयः । पुरुषः प्रमाणमस्य । पौरुषम् । पुरुषद्वयसम् । हास्तिनम् । हस्तिद्वयसम् ।

## यत्तदेतेभ्यः परिमाणे वतुप् । ३९

परि०भ्यो यत्तदेतेभ्यः प्र० ष० वतुप् । यत्परिमाणमस्य यावान् । तावान् । एतावान् । ( वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् ) त्वावान् । मावान् । त्वत्सदृशो मत्सदृश इत्यर्थः । प्रमाणपरिमाणयोरर्थभेदः । तथा च । 'आयामस्तु प्रमाणं स्यात्, परिमाणन्तु सर्वतः ॥ इति ॥

## किमिदंभ्यां वो घः । ४०

ष० भ्यां किमिदंभ्यां ष० वतुप् तदवयवस्य वस्य च घः । कियान् । इयान् । एतदेव चादेशविधानंज्ञापकं किमिदंभ्यां वतुप्प्रत्ययो भवतीति ।

---

(१)-अत्रवृत्तौ- प्रमाणे लः' शमः । शमः प्रमाणमस्य शमः । स्यान्नवेत्यथः । दिष्टिः । वितस्तिः । 'द्विगोर्नित्यम्' द्वौ शमौ प्रमाणमस्य द्विशमम् । प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज्वक्तव्यः । शममात्रम् । प्रस्थमात्रम् । पञ्चमात्रम् । इति वार्तिकत्रयाद्यधिकम् । ल इति लुकः पूर्वाचार्य संज्ञा ।

## किमः संख्यापरिमाणे डति च । ४१

संख्यापरिमाणेऽर्थे वर्तमानात्किम्प्रातिपदिकात् प्र० ष· डतिश्चाद्वतुप वस्य च घः। का सङ्ख्या येषां ते कति कियन्तो वा ब्राह्मणाः।

## संख्याया अवयवे तयप्। ४२

अवयवेऽर्थे वर्तमाना या संख्या तद्वाचिनः प्रातिपदिकात् प० तयप्। चत्वारोऽवयवा अस्याः सा चतुष्टयी। पञ्चावयवा अस्य तत्पञ्चतयम्।

## द्वित्रिभ्यां तयस्यायज्वा। ४३

द्वित्रिभ्यां परस्य तयस्याऽयजादेशो वा। द्वावयवावस्य तद् द्वयम्। द्वितयम्। त्रयम्। त्रितयम्। तय ग्रहणं स्थानिनिर्देशार्थम्। अन्यथा प्रत्ययान्तरमयज् विज्ञायेत। तत्र को दोषः। त्रयी गतिरिति तयनिबन्धन ईकारो न स्यात्। प्रथमचरमेति विधिर्नस्यात्। द्वये। द्वयाः।

## उभादुदात्तो नित्यम्। ४४

उभशब्दात्परस्य तयपो नित्यमयजादेशः सचोदात्तः। उभयोमणिः। उभये देवमनुष्याः।

## तदस्मिन्नधिकमिति दशान्ताड्डः। ४५

अधिकसमानाधिकरणात्प्रथमासमर्थाद्दशान्तात्संख्यावाचिनः सप्तम्यर्थे डः। एकादशअधिका अस्मिन् शते एकादशं शतम्। शतसहस्रयोरेवेष्यते। नेह-एकादशाधिका अस्यां विंशतौ। प्रकृतिप्रत्ययार्थयोः समानजातीयत्व एवेष्यते। नेह। एकादश माषा अधिका अस्मिन् सुवर्णशते। दशान्तादिति किम् पञ्चाधिका अस्मिन् शते।

## शदन्तविंशतेश्च । ४६

अधि०प्र० शदन्तात्विंशतेश्च संख्यावाचिनः स० डः । त्रिंशदधिका अस्मिन् शते त्रिंशंशतम् । ( संख्याग्रहणञ्च कर्तव्यम् ) तेनेह न-गोत्रिंशदधिका अस्मिन्गोशते । ( विंशतेश्चान्तग्रहणं कर्तव्यम् ) एकविंशं शतम् ।

## संख्याया गुणस्य निमाने मयट् । ४७

गुणस्य निमाने या संख्या तद्वाचिनः प्रातिपदिकात् प्र० प० मयट् । द्विमयम् (१) । त्रिमयम् । गुणस्येति किम् । द्वौ व्रीहियवौ निमानमस्योदश्वितः । निमाने किम् । द्वौ गुणौ क्षीरस्यैकस्तैलस्य द्विगुणं क्षीरं पच्यते तैलेन ।

## तस्य पूरणे डट् । ४८

षष्ठीसमर्थात्संख्यावाचिनः प्रातिपदिकात् पूरणेऽर्थे डट् । पूर्यतेऽनेनेति पूरणम् । येन संख्या संख्यान पूर्यते संपद्यते स तस्याः पूरणः । एकादशः । एकादशानां पूरण इत्यर्थः ।

## नान्तादसंख्यादेर्मट् । ४९

असंख्यादेर्नान्तात्संख्यावाचिनः परस्य डटो मडागमः । पञ्चानां पूरणः पञ्चमः । नान्तादिति किम् । विंशतेः पूरणो विंशः । असंख्यादेरिति किम् । एकादशानां पूरण एकादशः ।

---

( १ )-यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्य, द्विमयमुदश्विद् यवानाम् । निमानं-मूल्यम् ।

## थट् च च्छन्दसि । ५०

असं० ना० सं० प० डटस्थट् चान्मट् छं० । पर्णमयानि पञ्चथानि भवन्ति पञ्चथः । सप्तथ । पञ्चमः ।

## षट्कतिकतिपयचतुरां थुक् । ५१

षडादीनां थुगागमो डटि परे । कतिपय शब्दो न संख्या । तस्मादस्मादेव ज्ञापकाडडट् प्रत्ययः । षण्णां पूरणः षष्ठः । कतिथः । कतिपयथः । चतुर्थः । ( चतुरश्छयतावाद्यक्षरलोपश्च तुरीय । तुर्यः ।

## बहुपूगगणसंघस्य तिथुक् । ५२

बह्वादीनां तिथुग् डटि परे । पूगसंघशब्दयोरस्मादेव ज्ञापकाड्डट् । बहूनां पूरणः बहुतिथः । पूगतिथ । गणतिथः । संघतिथः ।

## वतोरिथुक् । ५३

वत्वन्तस्येथुग् डटि । यावतां पूरणः यावतिथः ।

## द्वेस्तीयः । ५४

ष० संख्यावाचिनः द्विप्रातिपदिकात्पूरणेऽर्थे तीयः । द्वयोः पूरणः द्वितीयः ।

## त्रेः सम्प्रसारणञ्च । ५५

ष० सं० त्रिप्रा० पू० तीयस्त्रेः सम्प्रसारणञ्च । तृतीयः ।

## विंशत्यादिभ्यस्तमडन्यतरस्याम् ।५६

ष०भ्यो विंशत्यादिभ्यः सं०भ्यः परस्य डटस्तमड्वा । विंशतेः

पूरणः त्रिंशतितमः । त्रिंशो वा । एकत्रिंशतितमः । एकत्रिंशो वा ।

## नित्यं शतादिमासार्द्धमाससम्वत्सराच्च । ५७

ष० भ्यः शतादिभ्यो मासादिभ्यश्च परस्य डटो नित्यं तमट् । शतस्य पूरणः शततमः । मासस्य पूरणः मासतमः । मासादेरत एव डट् । अर्द्धमासतमः । सहस्रतमः । सम्वत्सरतमः ।

## षष्ट्यादेश्चासंख्यादेः । ५८

असंख्यादेः षष्ठ्यादेः संख्यावाचिनः प्रातिपदिकात् परस्य डटो नित्यं तमट् । षष्टितमः । सप्ततितमः । असंख्यादेरिति किम् एकषष्टः । एकषष्टितमः ।

## मतौ छः सूक्त सामनोः । ५९

मत्वर्थे छः सूक्तसाम्नोः । अच्छावाकशब्दोऽस्मिन्निति अच्छावाकीयं सूक्तम् । मित्रावरुणीय साम ।

## अध्यायानुवाकयोर्लुक् । ६०

मत्वर्थस्य छस्य वा लुक् अध्यायानुवाकयोः । अत एव ज्ञापकात्तन्न छ । गर्दभाण्डशब्दोऽस्मिन् गर्दभाण्डः अध्यायोऽनुवाको वा गर्दभाण्डीयः ।

## विमुक्तादिभ्योऽण् । ६१

विमुक्तादिभ्यो मत्वर्थेऽण् अध्या० । विमुक्तशब्दो ऽस्मिन् वैमुक्तोऽध्यायोऽनुवाको वा ।

## गोषदादिभ्यो वुन् । ६२

गोषदादिभ्यो मत्वर्थे वुन् अध्या० । गोषद शब्दो ऽस्मिन् गोषदको-

ऽध्यायोऽनुवाको वा।

## तत्र कुशलः पथः। ६३

सप्तमीसमर्थात्पथः कुशल इत्यर्थे वुन्। पथि कुशलः पथकः।

## आकर्षादिभ्यः कन्। ६४

स० भ्यः आकर्षादिभ्यः कु० कन्। आकर्षे कुशलः आकर्षकः। दीपकः।

## धनहिरण्यात्कामे। ६५

स० भ्यां धनहिरण्याभ्यां कामेऽर्थे कन्। काम इच्छाऽभिलाषः। धने-कामोऽस्य धनकः। हिरण्यकः। दे दत्तस्य।

## स्वाङ्गेभ्यः प्रसिते। ६६

स० भ्यः स्वाङ्गवाचिभ्यः प्रसितेऽर्थे कन्। केशेषु प्रसितः केशकः। प्रसितः प्रसक्तस्तत्पर इत्यर्थः। बहुवचनं स्वाङ्गसमुदायशब्दादपि यथा-स्यात्। दन्तोष्ठकः। केशनखकः।

## उदराट्ठगाद्यूने। ६७

स० उदरादाद्यूने प्रसितेऽर्थे ठक्। आद्यून इति प्रत्ययार्थविशेषणम्। उदरे प्रसितः औदरिकः। यो बुभुक्षया ऽत्यन्तं पीड्यते स एवमुच्यते। आद्यून इति किम् उदरकः।

## सस्येन परिजातः। ६८

तृतीयासमर्थात्सस्य प्रातिपदिकात्परिजात इत्यर्थे कन्। सस्यकश्छात्रः। सस्यको मणिः। सस्यशब्दोऽयं गुणवाची। यो गुणैः सम्बद्धो जायते यस्य किंचिदपि वैगुण्यं नास्ति तस्येदमभिधानम्।



## अंशं हारी । ६९

द्वितीयासमर्थादंशप्रातिपदिकाद्धारी (१) त्यर्थे कन् । अंशकः सुतः ।

## तन्त्रादचिरापहृते । ७०

पञ्चमीसमर्थात्तन्त्रप्रातिपदिकादचिरापहृतेऽर्थे कन् । अचिरापहृतः स्तोककालापहृतः । तन्त्रकः पटः । प्रत्यग्रो नव इत्यर्थः ।

## ब्राह्मणकोष्णिके संज्ञायाम् । ७१

ब्राह्मणकोष्णिकावेतौ निपात्येते सञ्ज्ञायाम् । ब्राह्मणको देशः । उष्णिका यवागूः । यत्रायुधजीविनो ब्राह्मणाः सन्ति तत्र ब्राह्मणक इति । अल्पान्ना यवागूरुष्णिकेत्युच्यते । अन्नशब्दस्योष्णादेश निपात्यते ।

## शीतोष्णाभ्यां कारिणि । ७२

द्वि० भ्यां शीतोष्णाभ्यां कारिण्यर्थे कन् । शीतकोऽलसः । उष्णकः शीघ्रकारी ।

## अधिकम् । ७३

अधिकमिति अध्यारूढशब्दात्कन् उत्तरपदलोपश्च निपात्यते । अधिको द्रोणः खार्याम् । अधिका खारी द्रोणेन ।

## अनुकाभिकाभीकः कमिता । ७४

अनुक, अभिक, अभीक, एते शब्दा निपात्यन्ते कमित्रर्थे । अनुकामयते अनुकः । अभेः पाक्षिकं दीर्घत्वं च निपात्यते । अभिकः अभीकः ।

---

( १ ) हारीत्यावश्यके णिनिः तत्र षष्ठी प्रतिषेधात् कर्मणि द्वितीयैव ।

## पार्श्वेनान्विच्छति । ७५

तृतीयासमर्थात्पार्श्वप्रातिपदिकादन्विच्छत्यर्थे कन् । पार्श्वकः । अनृजुरुपायः पार्श्वम् । तेनार्थानन्विच्छति । मायिकः कौसृतिको जालिक उच्यते ।

## अयःशूलदण्डाजिनाभ्यां ठक्ठञौ । ७६

तृ० भ्यामयःशूलदण्डाजिनाभ्या मन्विच्छत्यर्थे ठक्ठञौ स्तः । तीक्ष्ण उपायोऽयःशूल उच्यते । तेनान्विच्छति आयः शूलिकः । दाण्डाजिनिकः । दण्डाजिनं दम्भः ।

## तावतिथं ग्रहणमिति लुग्वा । ७७

तावतां पूरणं तावतिथम् । गृह्यतेऽनेनेति ग्रहणम् । तावतिथमिति पूरण प्रत्ययान्तानां सामान्यनिदशः । तृ० पूरणप्रत्ययान्ताद्ग्रहणसमानाधिकरणात्कन् पूरणप्रत्ययस्य च वा लुक् । द्विकं ग्रहणं देवदत्तस्य । द्वितीयकम् । तावतिथेन गृह्णातीति कन्वक्तव्यः पूरणप्रत्ययस्य च नित्यं लुक् । षष्ठेन रूपेण गृह्णातीति षट्को देवदत्तः । पञ्चकः ।

(१)

## स एषां ग्रामणीः । ७८

ग्रामणीसमानाधिकरणात्प्रथमासमर्थात् षष्ठ्यर्थे कन् । ग्रामणीर्मुख्यः । देवदत्तो ग्रामणी येषां देवदत्तका इमे । ग्रामणीरिति किम् । देवदत्तः शत्रुरेषाम् ।

## शृङ्खलमस्य बन्धनं करभे । ७९

---

[१] ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु' इत्यमरः ।

बन्धनसमानाधिकरणात् शृङ्खलप्रातिपदिकात्ष० कन् करभेऽभिधेये। शृङ्खलं बन्धनमस्य। शृङ्खलकः करभः। उष्ट्राणामपत्यानि करभाः। तेषां काष्ठमयं पाशक पादे व्यतिषज्यते तदुच्यते शृङ्खलम्।

## उत्क उन्मनाः। ८०

उत्क इति निपात्यते उन्मनाश्चेत्। उद्गतंमनो यस्य स उन्मनाः। उत्कः। उत्सुक इत्यर्थः।

## कालप्रयोजनाद्रोगे। ८१

कालप्रयोजनाभ्यां (१) प्रा० भ्यां कन्। द्वितीयेऽह्नि भवो द्वितीयको ज्वर। विषपुष्पजनितो विषपुष्पकः। उष्णं कार्यमस्य। उष्णकः। कालो दिवसादिः। प्रयोजनं कारणं रोगस्य फलं वा। रोगे किम् द्वितीयो दिवसोऽस्य।

## तदस्मिन्नन्नं प्राये संज्ञायाम्। ८२

प्रथमासमर्थात्सप्तम्यर्थे कन्। यत्प्रथमासमर्थमन्नञ्चेत् प्राय विषयं तत् संज्ञायाम्। गुडापूपाः प्रायेणान्नमस्यां गुडापूपिका पौर्णमासी। (वटकेभ्य इनिर्वक्तव्यः) वटकिनी पौर्णमासी।

(२)

## कुल्माषादञ्। ८३

प्र० कुल्माषात् सप्तम्यर्थेऽञ्। कुल्माषाः प्रायेणान्नमस्यां

---

(१) कालवाचकः पूरणप्रत्ययमात्रएव, ततः सप्तम्यन्ताद् भवे प्रत्ययः। कारणवाचकात्तृतीयान्ताज्जनितइत्यर्थे। फलबोधकात्प्रथमान्तादस्य कार्य मित्यर्थे, अभिधान स्वाभाव्यादिति नागेशः।

(२) अर्धस्विन्नास्तु गोधूमा अन्येऽपि चणकादयः। कुल्माषा इति कथ्यन्ते शब्दशास्त्रेषु पण्डितैः। कुल्माषा गुरवोरूक्षा वातला भिन्न वर्चसः।

कौल्माषी पौर्णमासी ।

## श्रोत्रियंश्छन्दोऽधीते । ८४

छन्दोऽधीतेऽर्थे श्रोत्रियन्निति निपात्यते । श्रोत्रियो ब्राह्मणः ।

## श्राद्धमनेन भुक्तमिनिठनौ । ८५

प्र० भुक्तसमानाधिकरणात् श्राद्ध प्रा० तृतीयार्थे इनिठनौ । वेत्यनुवृत्ते श्छान्दस इत्यपि । श्राद्धी । श्राद्धिका वा । श्रद्धा ऽस्मिन्नस्तीति-श्राद्धम् 'प्रज्ञा श्रद्धार्चाभ्यो णः' इति णे श्राद्धम् । श्राद्धशब्देनेह न पित्र्यं कर्म अपितु तत्साधनद्रव्यं गृह्यते ।

## पूर्वादिनिः । ८६

पूर्व प्रा० अनेनेत्यर्थे इनिः । पूर्वंकृतमनेन पूर्वी । पूर्विणौ ।

## सपूर्वाच्च । ८७

सपूर्वात् पूर्व प्रा० अनेनेत्यर्थे इनिः । पूर्वं कृतमनेन कृतपूर्वी कटम् । 'सुप्सुपा' इति समासं कृत्वा तद्धितप्रत्ययः क्रियते ।

## इष्टादिभ्यश्च । ८८

इष्टादिभ्योऽनेनेत्यर्थे इनिः । इष्टमनेन, इष्टी यज्ञे । पूर्ती श्राद्धे । 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानमिति' सप्तम्युपसंख्यायते ।

## छन्दसि परिपन्थिपरिपरिणौ पर्य्यवस्थातरि । ८९

परिपन्थिन् परिपरिन् एतौ छन्दसि विषये निपात्येते पर्य्यवस्थातरि । मा त्वा परिपन्थिनो विदन् । मा त्वा परिपरिणो विदन् ।

## अनुपद्यन्वेष्टा । ६०

अनुपदीति निपात्यतेऽन्वेष्टाचेत् । पदस्य पश्चादनुपदम् अनुपदी उष्ट्राणाम् ।

## साक्षाद्द्रष्टरि संज्ञायाम् । ६१

अव्ययात् साक्षात् प्रा० द्रष्टर्य्यर्थे इनिः सञ्ज्ञायाम् । साक्षी ।

## क्षेत्रियच् परक्षेत्रे चिकित्स्यः ६२

क्षेत्रियजिति निपात्यते परक्षेत्रे चिकित्स्य इत्यर्थे । क्षेत्रियो व्याधिः । शरीरान्तरे चिकित्स्यः । अप्रतीकार्य इत्यर्थः ।

## इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा । ६३

इन्द्रियमिति निपात्यते इन्द्रलिङ्गादिष्वर्थेषु । इन्द्र आत्मा तस्य लिङ्गमिन्द्रियम् । तेन, दृष्टं सृष्टं जुष्टं दत्तं, इति वा घच् निपात्यते । इतिशब्दः प्रकारार्थः । इन्द्रेण दुर्जयमिन्द्रियम् ।

(१)

## तदस्यास्त्यस्मिन्निति मतुप् । ६४

अस्तिसमानाधिकरणात्प्र० षष्ठ्यर्थे सप्तम्यर्थे वा मतुप् । गावोऽ

---

( १ ) भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादयः । इतिवार्तिकम् । भूम्नि-गोमान् । निन्दायाम्-कुष्ठी । प्रशंसायाम् रूपवती कन्या । नित्ययोगे-क्षीरिणो वृक्षाः । अतिशायने-उदरिणी कन्या । संसर्गे-दण्डी । अस्ति विवक्षायाम्-अस्तिमान् ।

स्य संति गोमान् । वृक्षवान् । ( गुणवचनेभ्यो मतुपो लुक् ) शुक्लो गुणो ऽस्यास्ति शुक्लः कम्बलः ।

## रसादिभ्यश्च । ९५

अ० भ्यः प्र० भ्यो रसादिभ्यः ष० स० वा मतुप् । अन्यमत्वर्थीयनिवृत्यर्थं वचनम् । रसवान् । ( गुणात् ) । ( एकाचः ) स्ववान् । गुणग्रहणं रसादीनां विशेषणम् ।

## प्राणिस्थादातो लजन्यतरस्याम् । ९६

आकारान्तात् प्राणिस्थात् प्रा० वा लच् मतुब्विषये । चूडालः । चूडावान् । प्राणिस्थात् किम् । शिखावान् दीपः । आतः किम् । हस्तवान् । प्राण्यङ्गादेव । नेह । मेधावान् ।

## सिध्मादिभ्यश्च । ९७

अ० भ्यः प्र० भ्यः सिध्मादिभ्यः ष० स० लज्वा । सिध्मलः । सिध्मवान् । अन्यतरस्यां ग्रहणं मतुप्समुच्चयार्थं न तु प्रत्ययविकल्पार्थम् । तेनाकारान्तेभ्य इनि ठनौ न ( वातदन्तावल ललाटानामूङ् च ) वातूल इत्यादि ।

## वत्सांसाभ्यां कामबले । ९८

अ० भ्यां० प्र० भ्यां वत्सांसाभ्यां ष० स० लज्वा कामवति बलवति चार्थे । वत्सलः । अंसलः । वत्सल इति स्नेहवानुच्यते । अंसलो बलवान् ।

## फेनादिलच्च । ९९

फेन प्रा० मत्वर्थे इलज्वा चाल्लच् । सर्वत्रैव अन्यतरस्यां ग्रहणं मतुप् समुच्चयार्थम् ।

## लोमादिपामादिपिच्छादिभ्यः शनेलचः । १००

लोमादिभ्यः पामादिभ्यः पिच्छादिभ्यश्च मत्वर्थे शनेलजादयः स्युः। लोमादिभ्यः शः। लोमशः। लोमवान्। पामादिभ्यो नः पामनः (१)। पामवान्। पिच्छादिभ्य इलच् पिच्छिलः। पिच्छवान्।

## प्रज्ञाश्रद्धार्चाभ्यो णः । १०१

प्रज्ञादिभ्यो मतुब्विषये णः मतुबप्यत्र समुच्चीयते। प्रज्ञावान्। प्राज्ञः। श्राद्धः। श्रद्धावान्। अर्चावान्। आर्चः। ( वृत्तेश्च ) वार्त्तम्।

## तपःसहस्राभ्यां विनिनी । १०२

तपः सहस्राभ्यां प्रा० भ्यां मतुब्विषये विनिनी प्रत्ययौ। तपस्वी। सहस्री। पुनर्वचनमणा बाधा माभूदिति। ठनश्च बाधनार्थम्।

## अण् च । १०३

तपः सहस्राभ्यां म० अण्। तापसः। साहस्रः। ( ज्योत्स्नादिभ्य उपसंख्यानम् ) ज्योत्स्ना विद्यतेऽस्मिन् पक्षे इति ज्यौत्स्नः। तामिस्रः। इत्यादि।

## सिकताशर्कराभ्यां च । १०४

सिकताशर्कराभ्यां म० अण्। सैकतः। शार्करम्।

## देशे लुबिलचौ च । १०५

सि० श० भ्यां म० लुबिलचौ चादण् मतुप् च देशे। सिकताः

---

( १ ) ( अङ्गात् कल्याणे ) ( ग० सू० ) अङ्गना। ( लक्ष्म्या अच्च ) लक्ष्मणः। ( विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः ) विषुणः।

सन्त्यत्र देशे सिकताः। सिकतिलः। सैकतः। सिकतावान्। शर्कराः। शर्करिलः। शार्करः। शर्करावान्।

## दन्त उन्नत उरच्। १०६

उन्नतसमानाधिकरणात् दन्तप्रा० म० उरच्। उन्नता दन्ताःसन्त्यस्य दन्तुरः। उन्नत इति किम्। दन्तवान्।

## ऊषसुषिमुष्कमधो रः। १०७

ऊषादिभ्योम० रः। ऊषोऽस्मिन्नस्ति ऊषरः। सुषिरः। मुष्कोऽण्डः मुष्करः। मध्वत्रास्ति मधुरः। ( रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् ) खरः। मुखरः कुञ्जरः ( नगपांसुपाण्डुभ्यश्चेति वक्तव्यम् ) नगरम्। पांसुरम्। पाण्डुरम्[(१)]। ( कच्छ्वा ह्रस्वत्वञ्च ) कच्छुरम्।

## द्युद्रुभ्यां मः। १०८

द्युद्रुभ्यां म० मः। द्युमः। द्रुमः।

## केशाद्वोऽन्यतरस्याम्। १०९

केश प्रा० म० वा वः। प्रकृतेन अन्यतरस्यां ग्रहणेन मतुपि सिद्ध पुनर्ग्रहण मिनिठनोः समावेशार्थम्। केशवः। केशी। केशिकः। केशवान्। ( वप्रकरणे मणिहिरण्याभ्यामुपसंख्यानम् ) मणिवः। हिरण्यवः। ( छन्दसीवनिपौ च ) ( वश्च मतुप् च ) रथीरभूत्मुद्गलानी गविष्टौ। सुमंगलीरियं। वनिप्। ऋतावानम्। मघवानमीमहे। उद्वाच। उद्वती च। मेधारथाभ्यामिरन्निरचौ ) मेधिरः। रथिरः। ( अर्णसो लोपश्च ) अर्णवः।

---

(१) पाण्डुरशब्दस्तु अव्युत्पन्न एव। गुणमात्रे गुणिनि च वर्तते। 'हरिणः पाण्डु, रः पाण्डुः' इत्यमरः।

## गाण्ड्यजगात्संज्ञायाम् । ११०

गाण्ड्यजगाभ्यां म० वः संज्ञायाम् । ह्रस्वदीर्घयो यणा तन्त्रेण निर्देशः । गाण्डिवम् गाण्डीवम् अर्जुनस्य धनुः । अजगवं धनुः ।

## काण्डाण्डादीरन्नीरचौ । १११

काण्डाण्डाभ्यां ईरन्नीरचौ । काण्डीरः । अण्डीरः ।

## रजःकृष्यासुतिपरिषदो वलच् । ११२

रजआदिभ्यः प्रा० भ्यो म० वलच् । रजस्वला स्त्री । 'वले' इति दीर्घः । कृषीवलः । आसुतीवलः । परिषद्वलः ( वलच्प्रकरणेऽन्येभ्योपि दृश्यते ) भ्रातृवलः । पुत्रवलः । उत्संगवलः । 'ले' इत्यत्र संज्ञायामित्यनुवृत्ते भ्रातृवल इत्यादौ न दीर्घः ।

## दन्तशिखात्संज्ञायाम् । ११३

दन्तशिखाभ्यां म० वलच् संज्ञायाम् । दन्तावलो गजः । शिखावलो मयूरः ।

## ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः । ११४

ज्योत्स्नादयः शब्दा म० निपात्यन्ते । ज्योतिष उपधालोपो नश्च प्रत्ययः । ज्योत्स्ना-चन्द्रप्रभा । तमस उपधाया इत्व रश्च । स्त्रीत्वमतन्त्रम् । तमिस्रम् । तमिस्रा-रात्रिः । शृङ्गादिनच् । शृङ्गिणः । ( ऊर्जोऽसुगागमो विनिवलचौ च ) ऊर्जस्वी । ऊर्जस्वलः । गोर्मिनिः । गोमी । ( मलशब्दादिनजीमसचौ ) मलिनः । मलीमसः ।

## अत इनिठनौ । ११५

अकारान्तान्म० इनि ठनौ। दण्डी। दण्डिकः। अन्यतरस्यां ग्रहणान्मतुबपि दण्डवान्।

## व्रीह्यादिभ्यश्च। ११६।

व्रीह्यादिभ्यो म० इनि ठनौ। व्रीही। व्रीहिकः। न च सर्वेभ्यो व्रीह्यादिभ्य इनिठनाविष्येते, किन्तर्हि शिखामालासंज्ञादिभ्य इनिः। यवखदादिभ्य इकः। अन्येभ्य उभयम्।

## तुन्दादिभ्य इलच्च। ११७।

तुन्दादिभ्यो म० इलच्। चात् इनिठनौ मतुप् च। तुन्दिलः। तुन्दी। तुन्दिकः। तुन्दवान्। (स्वाङ्गाद्विवृद्धौ) ग० सू०। विवृद्धौ कर्णौ यस्य सः कर्णिलः। कर्णी। कर्णिकः। कर्णवान्।

## एकगोपूर्वाट्ठञ् नित्यम्। ११८।

एकपूर्वाद्गोपूर्वाच्च म० नित्यं ठञ्। एकशतमस्यास्तीति ऐकशतिकः। ऐकसहस्रिकः। गौशतिकः।

## शतसहस्रान्ताच्च निष्कात्। ११९।

निष्कपूर्वात् शतान्तात् सहस्रान्ताच्च म० नित्यं ठञ्। निष्कशतमस्यास्तीति नैष्कशतिकः। नैष्कसहस्रिकः।

## रूपादाहतप्रशंसयोर्यप्। १२०।

आहतप्रशंसयोरर्थयोर्वर्तमानाद्रूपप्रा० म० नित्यं यप्। आहतं रूपमस्यास्ति इति रूप्यः कार्षापणः। प्रशस्तंरूपमस्यास्तीति रूप्यो गौः। (यप्प्रकरणेऽन्येभ्योपि दृश्यते)। हिम्याः। गुण्या ब्राह्मणाः। आहतेति किम्। रूपवान्।

## अस्मायामेधास्रजो विनिः । १२१ ।

असन्तात्प्रा० मायादिभ्यश्च म० विनिः । यशस्वी । मायावी । मेधावी । स्रग्वी । व्रीह्यादिषु पाठान्मायाशब्दात् इनिठनावपि भवतः । मायी । मायिकः ।

## बहुलं छन्दसि । १२२ ।

छन्दसि विषये म० बहुलं विनिः । अग्ने तेजस्विन् । कचिन्न । सूर्यो वर्चस्वान् । ( छन्दोविन्प्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्चेति वक्तव्यम् ) अष्ट्रावी । मेखलावी । द्वयावी । उभयावी । रुजावी । हृदयावी । ( मर्मणश्च ) मर्मावी । ( सर्वत्रामयस्य ) आमयावी । ( शृङ्ग-वृन्दाभ्यामारकन् ) शृङ्गारकः । वृन्दारकः । ( फलबर्हाभ्या मिनज्वक्तव्यः ) फलिनः । बर्हिणः । ( हृदयाच्चालुरन्यतरस्याम् ) हृदयालुः । हृदयी । हृदयिकः । हृदयवान् । (शीतोष्णतृप्रेभ्यस्तन्न सहत इति आलुज् वक्तव्यः) शीतालुः । ऊष्णालुः । तृप्रालुः । ( हिमाच्चेलुः ) हिमेलुः । ( तन्नसहत इत्येतस्मिन्नर्थे बलाच्चोलः ) बलूलः । ( वातात्समूहे च ) तन्न सहत इत्येतस्मिन्नर्थे च । वातूलः । ( पर्वमरुद्भ्यां तप् ) । पर्वतः । मरुत्तः । ( ददाति वृत्तं वा ) ददाति वृत्तं वा पुनरेतद् भविष्यति । मरुद्भिर्दत्तो मरुत्तः । (अर्थाच्चदभावे इनिर्वक्तव्यः ) अर्थी । अन्यत्रार्थवानिति का० ।

## ऊर्णाया युस् । १२३ ।

ऊर्णा प्रा० म० युस् । सकारः पदसंज्ञार्थः । ऊर्णास्य वर्तते ऊर्णायुः ।

## वाचो ग्मिनिः । १२४ ।

वाक् प्रा० म० ग्मिनिः । वाग्मी ।

## आलजाटचौ बहुभाषिणि । १२५ ।

वाक् प्रा० म० आलजाटचौ बहुभाषिणि । वाचालः । वाचाटः ।

## स्वामिन्नैश्वर्ये। १२६।

ऐश्वर्येऽर्थे स्वामिन्निति निपात्यते। स्वशब्दादैश्वर्यवाचिनो मत्वर्थ आमिन् प्रत्ययो निपात्यते। स्वामी। ऐश्वर्य इति किम्। स्ववान्।

## अर्श आदिभ्योऽच्। १२७।

अर्श आदिभ्यः प्रा० भ्यो म० अच्। अर्शांस्यस्य विद्यन्ते। अर्शसः उरसः। आकृतिगणोऽयम्।

## द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः। १२८।

प्राणिस्थवाचिभ्यो द्वन्द्वोपतापगर्ह्यविषयेभ्यो म० इनिः। द्वन्द्वः कटकवलयिनी। उपतापो रोगः। गर्ह्यं निन्द्यम्। कुष्ठी। ककुदावर्ती। (प्राण्यङ्गान्न) पाणिपादवती। प्राणिस्थात्किम्। पुष्पफलवान् घटः। अत इत्येव। चित्रकललाटिकावती।

## वातातीसाराभ्यां कुक् च। १२९।

वातातीसाराभ्यां प्रा० भ्यां म० इनिः कुगागमश्च। वातकी। अतीसारकी (पिशाचाच्चेति वक्तव्यम्) पिशाचकी वैश्रवणः। रोगे चायमिष्यते। तेनेह न, वातवती गुहा।

## वयसि पूरणात्। १३०।

पूरणप्रत्ययान्तात्प्रा० म० इनिर्वयसि। मासः संवत्सरो वा पञ्चमोऽस्यास्तीति पञ्चमी उष्ट्रः। वयसि किम्। पञ्चमवान् ग्रामः। सिद्धे सति नियमार्थं वचनमितीनि रेव भवति न ठन्निति।

## सुखादिभ्यश्च। १३१।

सुखादिभ्यः प्रा० भ्यो म० इनिः। सुखी। दुःखी (मालाक्षेपे) ग० सू०। माली।

## धर्म्मशीलवर्णान्ताच्च । १३२ ।

धर्मान्ताच्छीलान्ताद्वर्णान्ताच्च म० इनिः । ब्राह्मणधर्मी । ब्राह्मणशीली । ब्राह्मणवर्णी वा ।

## हस्ताज्जातौ । १३३ ।

हस्तप्रा० म० इनिर्जातौ । हस्ती । जातौ किम् । हस्तवान् पुरुषः ।

## वर्णाद् ब्रह्मचारिणि[1] । १३४ ।

वर्णप्रा० म० इनिर्ब्रह्मचारिण्यभिधेये । ब्रह्मचारिणीति किम् । वर्णवान् वर्णी ।

## पुष्करादिभ्यो देशे । १३५ ।

पुष्करादिभ्यः प्रा० भ्यो म० इनिर्देशे । पुष्करी । पुष्करिणी । देशे इति किम् । पुष्करवान् हस्ती । ( इनिप्रकरणे बलाद्बाहूरुपूर्वपदादुपसंख्यानम् ) बाहुबली । ऊरुबली । ( सर्वादेश्च ) सर्वधनी । सर्वबीजी । ( अर्थाच्चासन्निहिते ) अर्थी । अन्यत्रार्थवान् । ( तदन्ताच्च ) धान्यार्थी ।

## बलादिभ्योमतुबन्यतरस्याम् । १३६ ।

बलादिभ्यो म० मतुब्वा पक्षे इनिः । बलवान् । बली ।

## संज्ञायां मन्माभ्याम् । १३७ ।

मन्नन्तात् प्रा० मशब्दाच्च म० इनिः संज्ञायाम् । प्रथिमिनी । दामिनी । होमिनी । सोमिनी । संज्ञायां किम् । सोमवान् ।

## कंशंभ्यां बभयुस्तितुतयसः । १३८ ।

---

( १ ) वर्णोऽत्र वेदाध्ययनार्थं ब्रह्मचर्यम् ।

कशंभ्यां प्रा० म० बादयः प्रत्ययाः स्युः । कम्बः । शम्बः । कम्भः । शम्भः । कंयुः । शंयुः । कन्तिः । शन्तिः । कन्तुः । शन्तुः । कन्तः । शन्तः । कंयः । शंयः ।

## तुन्दिबलिवटेर्भः । १३६ ।

तुन्दादिभ्यो म० भः । तुन्दिरितिवृद्धा नाभिरुच्यते । सास्यास्तीति तुन्दिभः । वलिभः । वटिभः । बलि शब्दस्य पामादिषु पाठात् वलिन इत्यपि ।

## अहं शुभमोर्युस् । १४० ।

अहंशुभंभ्यां म० युस् । अहंयुः अहङ्कारवान् । शुभंयुः कल्याणवान् । अहमित्यहंकारे, शुभमिति च शुभेऽर्थेऽव्ययम् । युसिति सकारः पद-संज्ञार्थः ।

इति पञ्चमाध्यायस्य द्वितीयः पादः ॥

# अथ पञ्चमाध्यायस्य तृतीयः पादः।

——:०:——

## प्राग् दिशो विभक्तिः। १।

'दिक्शब्देभ्यः सप्तमी पञ्चमी प्रथमाभ्यो दिग् देशकालेष्वस्तातिः' इति वक्ष्यति। प्रागेतस्माद् दिक्शब्दाद्विभक्तिरित्यधिक्रियते। वक्ष्यति 'पञ्चम्यास्तसिल्'। ततः। यतः। कुतः। तसिलादीनां विभक्तित्वे प्रयोजनं त्यदादिविधयः इदमो विभक्तिस्वरश्च। इह। ऊडिदमिति विभक्त्युदात्तत्वं सिद्धं भवति। अथ स्वार्थिकाः प्रत्ययाः। समर्थादित्यतो वेति केवलमनुवर्तते। तेन विकल्पेन तसिलादयो भवन्ति। कुतः। कस्मात्। क्व। कस्मिन्। सर्वनामत्वात्प्राप्ते ग्रहणे द्व्यादिपर्युदासः क्रियते। कुतः। क्व।

## किं सर्वनामबहुभ्योऽद्व्यादिभ्यः। २।

दिशः प्राग् ये प्रत्ययास्तेऽद्व्यादिभ्यः किं सर्वनामबहुभ्यः परे स्युः। (बहुग्रहणे संख्याग्रहणम्) तेनेह न। बहोः। बहोरिति। अद्व्यादिभ्यः किम्। द्वाभ्याम् द्वयोः। प्रकृति परिसंख्यानं किम्। वृक्षात्। प्राग्दिश इत्येव। वैयाकरणपाशः।

## इदम इश्।३।

इदमः स्थाने इश् प्रागदिशीये परे। शकारः सर्वादेशार्थः। अस्मिन्निति इह।

## एतेतौ रथोः। ४।

इदमः स्थाने एतेतौ रेफादौथकारादौ च प्राग्दिशीये परतः। इदमो र्हिल्। एतर्हि। इदमस्थमुः। इत्थम्।

## एतदोऽन् ।५।

एतदः स्थानेऽन् प्राग्दिशीये । एतस्मादिति अतः । एतस्मिन्निति अत्र । अत्र 'एतदः' इति योगो विभज्यते । अनेकाल्त्वाच्च सर्वादेशः ।

## सर्वस्य सोऽन्यतरस्यां दि ।६।

सर्वस्य स्थाने सो वा दकारादौ प्राग्दिशीये परे । सदा । सर्वदा । प्राग्दिशीय इत्येव । सर्वं ददातीति सर्वदा ब्राह्मणी ।

## पञ्चम्यास्तसिल् ।७।

पञ्चम्यन्तेभ्योऽद्वयादिभ्यः किं सर्वनामबहुभ्यस्तसिल् । कुतः । कुतिहोरिति कुः । सर्वतः । यतः । ततः । बहुतः ।

## तसेश्च ।८।

अद्वयादिभ्यः किंसर्वनामबहुभ्यः परो यस्तसिस्तस्य स्थाने तसिल् । तसेस्तसिल् वचनं विभक्त्यर्थं स्वार्थं च । ततः । यतः । कुतः ।

## पर्य्यभिभ्यां च ।९।

पर्य्यभिभ्यां तसिल् स च विभक्तिसंज्ञः । ( पर्य्यभिभ्याञ्च सर्वोभयार्थे ) परितः । सर्वत । अभितः । उभयतः ।

## सप्तम्यास्त्रल् ।१०।

सप्तम्यन्तेभ्योऽद्वयादिभ्यः किंसर्वनामबहुभ्यस्त्रल् स च विभक्तिसंज्ञः । कुत्र । तत्र । बहुत्र ।

## इदमो हः ।११।

सप्तम्यन्तादिदमः हः स च विभक्तिसंज्ञः । त्रलोऽपवादः । इह ।

## किमोऽत् ।१२।

सप्तम्यन्तात् किं शब्दादत् स च विभक्तिसंज्ञः । क्वाऽध्येष्यसे । क्वातीविकः । वाऽपकर्षेण त्रलपि । कुत्र ।

## वा ह चच्छन्दसि । १३ ।

सप्तम्यन्तात् किंशब्दाच् छन्दसि वा हः । चकाराद्यथाप्राप्तं स च विभक्तिः । कुह । क्व । कुत्र ।

## इतराभ्योऽपि दृश्यन्ते । १४ ।

इतरविभक्त्यन्तेभ्योऽद्ध यादिभ्यः किं सर्वनामबहुभ्यस्तसिलादयो दृश्यन्ते ते च विभक्तिसंज्ञाः । ( भवदादिभिर्योगे इति वक्तव्यम् ) भवान् । दीर्घायुः । देवानां प्रियः । आयुष्मानिति भवदादयः । स भवान् । ततो भवान् । तत्र भवान् । । तं भवन्तम् । ततो भवन्तम् । तत्र भवन्तम् । एवं सर्वासु विभक्तिषूदाहार्य्यम् । दीर्घायुरादियोगेऽपि ।

## सर्वैकान्यकिंयत्तदः काले दा । १५ ।

कालेऽर्थे वर्तमानेभ्यः सप्तमीसमर्थेभ्यः सर्वैकान्य किं यत् तद्भ्यो दा स च विभक्तिसंज्ञः । सर्वदा । एकदा । अन्यदा । कदा । तदा । काले किम् । सर्वत्र देशे ।

## इदमोर्हिल् । १६ ।

कालेऽर्थे वर्तमानात् सप्तमी समर्थात् इदम् शब्दात् र्हिल् स च विभक्तिः । दापवादः अस्मिन्काले एतर्हि । काले किम् । इह देशे ।

## अधुना । १७ ।

अधुना इति निपात्यते । इदं शब्दस्याऽश् धुना प्रत्ययश्च । अस्मिन्काले इति अधुना ।

## दानीञ्च । १८ ।

कालेऽर्थे सप्तमी समर्थात् इदं शब्दाद् दानीं स च विभक्तिः । अस्मिन् काले इदानीम् ।

## तदो दा च । १९ ।

कालेऽर्थे सप्तम्यन्तात्तच्छब्दाद् दा चादानीं स चविभक्तिः। दावचनमनर्थकं विहितत्वात्। तदा। तदानीम्।

## तयोर्दार्हिलौ चच्छन्दसि। २०।

कालेऽर्थे वर्तमानाभ्यां सप्तमीसमर्थाभ्यां इदंतद्भ्यां दार्हिलौ चकारा-द्यथाप्राप्तं छन्दसि विषये। इदावत्सरीयः। इदानीम्। तदा। तर्हि।

## अनद्यतने र्हिलन्यतरस्याम्। २१।

अनद्यतन कालेऽर्थे वर्तमानेभ्यः सप्तमीसमर्थेभ्योऽद्व्यादिभ्यः किं सर्वनाम बहुभ्यो र्हिल्वा। कर्हि। कदा। यर्हि। यदा। तर्हि। तदा।

## सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्यु-रन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्यु-रुत्तरेद्युः। २२।

एते शब्दा निपात्यन्ते। समानस्य सभावोद्यश्चाहनि। समानेऽहनि सद्यः। (पूर्वपूर्वतरयोः परः उदारी च प्रत्ययौ सम्वत्सरे) पूर्वस्मिन्वत्सरे, परुत्। पूर्वतरे वत्सरे, परारि। इदम इश् समसणप्रत्ययश्च सम्वत्सरे। अस्मिन्सम्वत्सरे, ऐषमः। परस्मादेद्यव्यहनि। परस्मिन्नहनि, परेद्यवि। इदमोऽश्भावश्च। अस्मिन्नहनि, अद्य। पूर्वादिभ्योऽष्टभ्योऽहन्येद्युस्। पूर्वस्मि-न्नहनि पूर्वेद्युः। अन्यस्मिन्नहनि अन्येद्युरित्यादि। उभयशब्दादुभयेद्युः। (द्युश्चोभयाद्वक्तव्यः) उभयद्युः।

## प्रकारवचने थाल्। २३।

प्रकारवचनेऽर्थे वर्तमानेभ्योऽद्व्यादिभ्यः किं सर्वनाम बहुभ्यस्थाल्। तेन प्रकारेण तथा। येन प्रकारेण यथा।

## इदमस्थमुः। २४।

प्रकारवचनेऽर्थे वर्तमानादिदम्शब्दात्थमुः। (एतदोऽवाच्यः) अनेन प्रकारेण इत्थम्। उकारो मकारपरित्राणार्थः।

## किमश्च । २५ ।

प्रकारवचने किंशब्दात्थमुः । केनप्रकारेण कथम् ।

## था हेतौ च च्छन्दसि । २६ ।

हेत्वर्थे चात्प्रकारवचने किंशब्दात् थाल् छन्दसि विषये । कथा ग्रामं न पृच्छसि । केन हेतुनेत्यर्थः । कथा देवा आसन् पुराविदः । केन प्रकारेणेत्यर्थः । विभक्तिसंज्ञायाः पूर्णोऽवधिः ।

## दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः । २७ ।

दिगादिषु वर्तमानेभ्यः सप्तम्यादिसमर्थेभ्यो दिक्शब्देभ्योऽस्तातिः । पुरस्ताद्वसति । पुरस्तादागतः । पुरस्ताद्रमणीयम् । अधस्ताद् रमणीयम् । अस्ताति चेति पुरादेशः । दिक् शब्देभ्य इति किम् । ऐन्द्र्यां दिशि वसति । सप्तम्यादीति किम् । पूर्वं ग्रामं गतः दिग्देशकालेष्विति किम् । पूर्वस्मिन् गुरौ वसति ।

## दक्षिणोत्तराभ्यामतसुच् । २८ ।

दिगादिषु वर्तमानाभ्यां सप्तमी समर्थाभ्यां दक्षिणोत्तराभ्यामतसुच् । अस्तातेरपवादः । दक्षिण शब्दः काले न संभवति इति दिग्देशवृत्तिः परिगृह्यते । दक्षिणतो व्रजति । दक्षिणत आव्रजति । दक्षिणतो रमणीयम् । एवमुत्तरतः ।

## विभाषा परावराभ्याम् । २९ ।

दिगादिषु वर्तमानाभ्यां सप्तमीसमर्थाभ्यां परावराभ्यां वा अतसुच् । परतो वसति । परत आगतः । परतो रमणीयम् । परस्ताद्वसति । परस्तादागतः । परस्ताद्रमणीयम् । एवमवरतो वसतीत्यादयः ।

## अञ्चेर्लुक् । ३० ।

दिगादिषु वर्तमानेभ्यः सप्तमीसमर्थेभ्योऽस्त्यन्तेभ्यो दिक्शब्देभ्योऽस्तातेर्लुक् । 'लुक्तद्धितलुकीति' स्त्रीप्रत्ययोऽपि-निवर्त्तते । प्राच्यां दिशि वसति प्राग्वसति । प्रागागतः । प्राग्रमणीयम् ।

## उपर्य्युपरिष्टात् । ३१ ।

ऊर्ध्वशब्दस्योपादेशः स्याद् रिल रिष्टातिलौ च प्रत्ययौ अस्तातेर्विषये । उपरि वसति । उपरिष्टाद्वसति । आगतो, रमणीयं वा ।

## पश्चात् । ३२ ।

अयं निपात्यतेऽस्तात्यर्थे । अपरस्य पश्चभावोऽस्तातेर्विषये आतिश्च प्रत्ययः । अपरस्यां दिशि वसति । पश्चाद्वसति । आगतः । रमणीयम्वा । ( दिक्पूर्वपदस्यापरस्य पश्चभावो वक्तव्यः, आतिःप्रत्ययश्च ) दक्षिणपश्चात् । उत्तरपश्चात् । ( अर्द्धोत्तरपदस्य च समासे ) दक्षिणपश्चार्द्धः । ( अर्धे च ) पश्चार्द्धः ।

## पश्च पश्चा च च्छन्दसि । ३३ ।

छन्दसि विषये एतौ निपात्येतेऽस्तात्यर्थे सकारात्पश्चादपि । ( अपरस्य ) पश्चभावोऽकाराकारौ च प्रत्ययौ ) पश्चसिंहः । पश्चासिंह । पश्चात्सिंहः ।

## उत्तराधरदक्षिणादातिः । ३४ ।

उत्तरादिभ्योऽस्तात्यर्थे आतिः । उत्तरादधराद्दक्षिणाद्वा वसति ।

## एनबन्यतरस्यामदूरेऽपञ्चम्याः । ३५ ।

सप्तमी प्रथमासमर्थेभ्य उत्तरादिभ्य एनब् वाऽदूरेऽर्थे । उत्तरेणाधरेण दक्षिणेन वा वसति रमणीयं वा । पक्षे यथास्वं प्रत्ययाः ।

## दक्षिणादाच् । ३६ ।

सप्तमीप्रथमासमर्थाद् दिक्शब्दाद्दक्षिणादाजस्ताति विषये । दक्षिणस्यां दिशि वसति, दक्षिणावसति । रमणीयम्वा । अपञ्चम्या इत्येव ।

## आहि च दूरे । ३७ ।

सप्तमीसमर्थाद् दिक्शब्दाद्दक्षिणादाहि प्रत्ययो दूरे चादाच् । दक्षिणाहि । दक्षिणा वा वसति । अपञ्चम्या इत्येव । दक्षिणत आगतः ।

## उत्तराच्च । ३८ ।

सप्तमीसमर्थाद् उत्तरशब्दादाजाही प्रत्ययौ दूरेऽभिधेये । उत्तरा । उत्तराहि वा वसति । दूरे इत्येव । उत्तरेण प्रयाति । अपञ्चम्या इत्येव । उत्तरादागतः ।

## पूर्वाधरावराणामसि पुरधवश्चैषाम् । ३९ ।

दिक्शब्देभ्यः पूर्वादिभ्योऽस्तात्यर्थेऽसिः स्यादेषां पुरादय आदेशाश्च । पुरो याति । पुर आयाति । पुरः शोभनीयम् । एवमन्यत्राप्युदाहर्तव्यम् ।

## अस्ताति च । ४० ।

अस्तातौ परतः पूर्वादीनां पुरादयः । पुरस्तात् । अधस्तात् । अवस्तात् । इदमेवादेशविधानं ज्ञापकम् । अस्तातिरेभ्योऽपि भवति, न चासिना बाध्यते ।

## विभाषाऽवरस्य । ४१ ।

अस्तातौ परतोऽवरस्य विभाषाऽव् । अवस्तादवरस्ताद्वा ।

## संख्याया विधार्थे धा । ४२ ।

विधार्थे वर्तमानात्संख्यावाचिनः प्रातिपदिकाद् धा । एकधा भुङ्क्ते । द्विधा गच्छति ।

## अधिकरणविचाले च । ४३ ।

द्रव्यस्य संख्यान्तरापादनेऽर्थे वर्तमानात्संख्यावाचिनः प्रातिपदिकात् स्वार्थे धा । एकं राशिं पञ्चधा कुरु । अनेकधा कुरु ।

## एकाद्धो ध्यमुञन्यतरस्याम् । ४४ ।

एकधा शब्दात्परस्य धाप्रत्ययस्य ध्यमुञ् वा । एकधा । ऐकध्यं वा कुरु ।

## द्वित्र्योश्च धमुञ् । ४५ ।

द्वित्र्योः सम्बन्धिनोर्धाप्रत्ययस्य धमुञ् वा । द्विधा । द्वैधम् । त्रिधा । त्रैधम् । ( धमुञन्तात्स्वार्थे डदर्शनम् ) पथि द्वैधानि संश्रयन्ते ।

## एधाच्च । ४६ ।

द्वित्र्योः सम्बन्धिनोर्धाप्रत्ययस्यैधाच् वा द्वेधा । द्वैधम् । द्विधा । त्रेधा । त्रैधम् । त्रिधा ।

## याप्ये पाशप् । ४७ ।

कुत्सितेऽर्थे वर्तमानात्प्रातिपदिकात् पाशप् । वैयाकरणपाशः ।

## पूरणाद्भागे तीयादन् । ४८ ।

भागेऽर्थे वर्तमानात्पूरणार्थक तीयप्रत्ययान्तादन् । द्वितीयो भागो द्वितीयः । तृतीयः । स्वरे विशेषः । ( तीयादीकक् स्वार्थे ) द्वैतीयीकः । द्वितीयः । न विद्यायाः । द्वितीया । तृतीया । विद्येत्येव ।

## प्रागेकादशभ्योऽच्छन्दसि । ४९ ।

भागेऽर्थे वर्तमानेभ्यः प्रागेकादशभ्यः पूरणार्थकेभ्योऽच्छन्दसि विषयेऽन । पञ्चमः । सप्तमः ।

## षष्ठाष्टमाभ्यां ञ च । ५० ।

षष्ठाष्टमाभ्यां भागेऽच्छन्दसि ञः । चादन् । नित्याविमौ । षष्ठोभागः षाष्ठः । आष्टमः । षष्ठोऽष्टमो वा ।

## मानपश्वङ्गयोः कन्लुकौ च । ५१ ।

मानपश्वङ्गयोर्भागयोरभिधेययोः षष्ठाष्टमाभ्यां कन्लुकौ चाद्यथाप्राप्तम् । षष्ठकः । मानं चेत् । अष्टमः । पश्वङ्गञ्चेत् । अस्य लुक्, अनो वा । षाष्ठः । षष्ठः । आष्टमः । अष्टमः ।

## एकादाकिनिच्चासहाये ।५२।

असहायेऽर्थे वर्तमानादेकशब्दादाकिनिच् । एकाकी । एककः । एकः । चाद्यथाप्राप्तम् ।

## भूतपूर्वे चरट् ।५३।

भूतपूर्व शब्दोऽतिक्रान्तकालवचनः । प्रकृति विशेषणं चैतत् । भूतपूर्वेऽर्थे वर्तमानात्प्रातिपदिकाच् चरट् । सुशीलो भूतपूर्वः, सुशीलचरः । टकारो ङीबर्थः । सुशीलचरी ।

## षष्ठ्या रूप्य च ।५४।

षष्ठ्यन्तात्प्रातिपदिकाद् भूतपूर्वेऽर्थे रूप्यः, चकाराच्चरट् । यज्ञदत्तस्य भूतपूर्वश्छात्रो यज्ञदत्तरूप्यः । यज्ञदत्ताचरः । शुभ्रारूप्यः । तसिलादिषु रूप्यस्यापरिगणितत्वात् न पुंवत् । शुभ्राया भूतपूर्वः ।

## अतिशायने तमबिष्ठनौ ।५५।

अतिशयनमतिशायन, प्रकर्षः । निपातनाद्दीर्घः । अतिशायनेऽर्थे वर्तमानात्प्रातिपदिकात् तमबिष्ठनौ । सर्वे इमे आढ्या अयमेषामतिशयेनाढ्यः, इति आढ्यतमः । पटिष्ठः । यदा च प्रकर्षवतां प्रकर्षो विवक्ष्यते तदातिशायिकान्तादपरः प्रत्ययो भवत्ये । । देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे ।

## तिङश्च ।५६।

अतिशायनेऽर्थे वर्तमानात् तिङन्तात् तमप् । अयमेषामतिशयेन पचतीति पचतितमाम् । इष्ठन्नोदाह्रियते, गुणवचने नियमितत्वात् ।

## द्विवचनविभज्योपपदे तरबीयसुनौ ।५७।

द्व्यर्थे विभज्ये चोपपदे प्रातिपदिकात् तिङन्ताच्चातिशायने तरबीयसुनौ । पूर्वापवादः । इमावाढ्यौ, अयमनयोरतिशयेनाढ्य इति आढ्यतरः । पचतितराम् । पटीयान् । उदीच्याः प्राच्येभ्यः पटुतराः पटीयांसः ।

## अजादी गुणवचनादेव। ५८।

गुणवचनादेव इष्ठन्नीयसुनौ। पटीयान्। लघीयान्। पटिष्ठः। लघिष्ठः। नेह। पाचकतरः।

## तुश्छन्दसि। ५९।

तृन्ताच्छन्दसि विषये इष्ठन्नीयसुनौ। आसुतिं करिष्ठः। दोहीयसी धेनुः। भस्याढे तद्धितेति पुंवद् भावे कृते 'तुरिष्ठेमेयस्सु' ६।४।१५४। इति तृचो लोपः। तुरितितृन् तृचोर्ग्रहणम्।

## प्रशस्यस्य श्रः। ६०।

प्रशस्यस्य श्र आदेशोऽजाद्योः प्रत्यययोः परतः। प्रकृत्यैकाजिति प्रकृतिभावः। श्रेष्ठः। श्रेयान्।

## ज्य च। ६१।

प्रशस्यस्य स्थाने ज्यआदेशः अजाद्योः प्रत्यययोः। ज्येष्ठः। ज्यायान्। 'ज्यादादीयसः' इत्याकारः।

## वृद्धस्य च। ६२।

वृद्धस्य स्थाने ज्य आदेशोऽजाद्योः परतः। ज्येष्ठः। ज्यायान्। 'प्रियस्थि' इत्यादिना वृद्ध शब्दस्य वर्षादेशो भवति। वचनसामर्थ्यात् पक्षे सोऽपि। वर्षिष्ठः। वर्षीयान्।

## अन्तिकबाढयोर्नेदसाधौ। ६३।

अन्तिकबाढयोः स्थाने नेदसाधौ अजाद्योः परतः। नेदिष्ठम्। नेदीयः। साधिष्ठः। साधीयोऽधीते।

## युवाल्पयोः कनन्यतरस्याम्। ६४।

युवाल्पयोः स्थाने कनादेशो वा अजाद्योः परतः। सर्वे इमे युवानः। अयमेषामतिशयेन युवा। कनिष्ठः। अनयोरयमतिशयेन युवा इति कनीयान्। यविष्ठः। यवीयान्। अयमेषा मति शयेन अल्पः अल्पिष्ठः। अल्पी-

यान् ।

## विन्मतोर्लुक् । ६५ ।

विन्मतो लुक् अजाद्योः परतः । अयमेषामतिशयेन स्रग्वी स्रजिष्ठः । स्रजीयान् । अयमेषामतिशयेन त्वग्वी । त्वचिष्ठः । त्वचीयान् ।

## प्रशंसायां रूपप् । ६६ ।

प्रशंसाविशिष्टेऽर्थे वर्तमानात्प्रा० तिङन्ताच्च रूपप् । स्वार्थिकाः प्रत्ययाः प्रकृत्यर्थविशेषस्य द्योतका भवन्ति । प्रशस्तो वैयाकरणो वैयाकरणरूपः । प्रशस्तं पचति पचतिरूपम् ।

## ईषदसमाप्तौ कल्पब्देश्यदेशीयरः । ६७ ।

ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकात् तिङन्ताच्च कल्पप्देश्यदेशीयरः प्रत्ययाः । ईषदसमाप्तो विद्वान् विद्वत्कल्पः । विद्वद्देश्यः । विद्वद्देशीयः । ईषदसमाप्तं पचति पचतिकल्पम् ।

## विभाषा सुपो बहुच् पुरस्तात्तु । ६८ ।

पदसमाप्तिविशिष्टेऽर्थे वर्तमानात् सुबन्तात् पुरस्तादेव बहुच् वा । सुपो ग्रहणं तिङ्निवृत्यर्थम् । ईषदसमाप्तः पटुः बहुपटुः । बहुगुडा द्राक्षा । वा वचनात्पक्षे कल्पबादयोऽपि । सुब् ग्रहणं तिङन्तान्मा भूदिति ।

## प्रकारवचने जातीयर् । ६९ ।

सामान्यस्य भेदको विशेषः प्रकारः । प्रकारवचनेऽर्थे वर्तमानात्सुबन्तात्जातीयर् । प्रकारवत्ययम् । थाल् पुनः प्रकारमात्र एव । पटुप्रकारः, पटुजातीयः ।

## प्रागिवात्कः । ७० ।

'इवे प्रतिकृतौ' इति वक्ष्यति तस्मात्प्राक् कोऽधिक्रियते । वक्ष्यति 'अज्ञाते' इति । अश्वकः । इत्यादि । तिङन्तादयं नेष्यते ।

## अव्ययसर्वनाम्नामकच् प्राक् टेः । ७१ ।

अव्ययसर्वनाम्नां तिङश्च टेः प्राक् अकच प्रागिवीयेष्वर्थेषु। कस्यापवादः। उच्चकैः। सर्वके। पचतकि। (अकच्प्रकरणे तूष्णीमः काम् प्रत्ययो वक्तव्यः) तूष्णीकामास्ते। (शीले को मलोपश्च वक्तव्यः) तूष्णीकः। प्रातिपदिकात् सुप इति द्वयमिहानुवर्तते। तत्राभिधानतो व्यवस्था भवति। क्वचित् प्रातिपदिकस्य प्राक्टेः प्रत्ययो भवति। युष्मकाभिः। अस्मकाभिः। क्वचित् सुबन्तस्य प्राक्। त्वयका। मयका।

## कस्य च दः। ७२।

अव्ययस्य ककारान्तस्य प्रातिपदिकस्य दः अकच्संयोगे। चकारः सन्नियोगार्थः। सामर्थ्याच्चाव्ययग्रहणमनुवर्तते न सर्वनामग्रहणम्। धिक्। धकित्। हिरुक्। हिरकुत्।

## अज्ञाते। ७३।

अज्ञातेऽर्थे वर्तमानात्प्रातिपदिकात् कः अव्ययसर्वनाम्नां तिङन्तस्य च टेः प्रागकच् स्वार्थे अकच् संयोगेन ककारान्तस्य च दः। कस्यायमश्व इति अज्ञाते। अश्वकः। उच्चकैः। सर्वके। पचतकि। (ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्) युष्मकयोः। युष्मकासु। युष्मकाभिः।

## कुत्सिते। ७४।

कुत्सितेऽर्थे वर्तमानात् प्रातिपदिकात् कः अव्ययसर्वनाम्नां तिङन्तस्य च टेः प्रागकच्। कुत्सितोऽश्वः, अश्वकः।

## संज्ञायां कन्। ७५।

कुत्सितेऽर्थे प्रातिपदिकात् कन् प्रत्ययान्तेन चेत्संज्ञा गम्यते। स्वार्थमिदम्। शूद्रकः। कापवादः।

## अनुकम्पायाम्। ७६।

सुबन्तात्तिङन्ताच्च प्रातिपदिकात् यथाविहितं प्रत्ययोऽनुकम्पायाम्। अनुकम्पितः पुत्रः। पुत्रकः। वत्सकः। त्रिश्वसितक।

## नीतौ च तद्युक्तात् । ७७ ।

अनुकम्पायुक्तात् प्रातिपदिकात् यथाविहितं प्रत्ययो नीतौ । हन्त ते(१) धानकाः । हन्त ते गुडकाः ।

## बह्वचो मनुष्यनाम्नष्ठज्वा । ७८ ।

अनुकम्पायुक्तान्मनुष्यनाम्नो बह्वच् प्रातिपदिकात् ठञ्वा नीतौ । अनुकम्पितो देवदत्तः देवदत्तकः । देविकः । बह्वच इति किम् । दत्तकः । गुप्तकः । मनुष्यनाम्न इति किम् । मद्रबाहुकः ।

## घनिलचौ च । ७९ ।

मनुष्यनाम्नो बह्वच् प्रातिपदिकात् घनिलचौ अनुकम्पायां नीतौ च । देवियः । देविलः । देविकः । देवदत्तकः ।

## प्राचामुपादेरडज्वुचौ च । ८० ।

उपादेर्बह्वचो मनुष्यनाम्नः प्रातिपदिकात् अडज्वुचौ चाद्घनिलचौ च ठच्च वा अनुकम्पायाम् नीतौ । अनुकम्पित उपेन्द्रदत्तः । उपडः । उपकः । उपियः । उपिलः । उपिकः । उपेन्द्रदत्तकः ।

## जातिनाम्नः कन् । ८१ ।

जातिशब्दान् मनुष्यनाम्नः प्रातिपदिकात् कन् अनुकम्पायां नीतौ च । व्याघ्रकः ।

## अजिनान्तस्योत्तरपदलोपश्च । ८२ ।

अजिनान्तान्मनुष्यनाम्नः प्रातिपदिकात् कन्वा अनुकम्पायाम् उत्तरपदस्य च लोपः । अनुकम्पितो व्याघ्राजिनः, व्याघ्रकः । सिंहकः । वृगकः ।

---

(१) अनेन परम्परासम्बन्धेऽपि प्रत्ययः । पुत्रादिद्वारा धानादीनामनुकम्पा । धानाशब्दः स्त्रीलिङ्गः । ततः कः । 'केऽणः', इति ह्रस्वः । कप्रत्ययाभावात् टाप् ।

## ठाजादावूर्ध्वं द्वितीयादचः। ८३।

प्रकृतेर्द्वितीयादच ऊर्ध्वं शब्दरूपं लुप्यते ठाजादौ परतः। अनुकम्पितो देवदत्तः। देविकः। देवियः। देविलः। (चतुर्थादिलोपो वक्तव्यः) अनुकम्पितो बृहस्पतिदत्तकः, बृहस्पतिकः। (अनजादौ च लोपो वक्तव्यः) देवदत्तको, देवकः। (अप्रत्यये तथैवेष्टः)। देवदत्तो, देवः, दत्तो वा (उवर्णादिलस्य च लोपो वक्तव्यः) भानुदत्तको, भानुलः। (ठग्रहणमुको द्वितीयत्वे कविधानार्थम्) वायुदत्तको, वायुकः। (द्वितीयादचो लोपे सन्ध्यक्षरस्य द्वितीये तदादेर्लोपो वक्तव्यः) लहोडः। लहिकः। कहोडः। कहिकः।

## शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात्। ८४।

शेवलादीनां तृतीयादच उर्ध्वं लुप्यते ठाजादौ परतः। अनुकम्पितः शेवलदत्तः, शेवलिकः। शेवलियः। शेवलिलः। सुपरिकः। विशालिकः। वरुणिकः। अर्यमिकः। (वरुणादीनाञ्च तृतीयात् सवाकृतसन्धीनाम्) सुपरिकः। (एकाक्षरपदानामुत्तरपदलोपो वक्तव्यः) अनुकम्पितो वागाशीः, इति वाचिकः। षडङ्गुलिदत्तः षडिक इति, षषष्ठाजादिवचनात्सिद्धम्।

## अल्पे। ८५।

अल्पत्वविशिष्टेऽर्थे वर्त्तमानात् प्रातिपदिकात् यथाविहितं प्रत्ययः। तैलकम्। सर्वकम्। उच्चकैरित्यादि।

## ह्रस्वे। ८६।

ह्रस्वत्वविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् यथाविहितं प्रत्ययः। ह्रस्वोवृक्षो, वृक्षकः।

## संज्ञायां कन्। ८७।

ह्रस्वत्वहेतुकायां संज्ञायां गम्यमानायां प्रातिपदिकात् कन् । वंशकः । वेणुकः ।

## कुटीशमीशुण्डाभ्यो रः । ८८ ।

ह्रस्वेऽर्थे कुटीशमीशुण्डाभ्यो रः । ह्रस्वा कुटी कुटीरः । शमीरः । शुण्डारः ।

## कुत्वा डुपच् । ८९ ।

ह्रस्वेऽर्थे कुतूप्रातिपदिकात् डुपच् । कुतुपः । चर्ममय स्नेहभाजनमुच्यते ।

## कासूगोणीभ्यां ष्टरच् । ९० ।

ह्रस्वेऽर्थे कासूगोणीभ्यां प्रातिपदिकाभ्यां ष्टरच् । कासूतरी । गोणीतरी । कासूरिति शक्तिरायुधविशेषः ।

## वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे । ९१ ।

वत्सादिभ्यष्टरच् तनुत्वे द्योत्ये । तनुत्वं न्यूनता । सा च प्रवृत्तिनिमित्तस्य प्रत्यासत्तेः । वत्सतरः । द्वितीयं वयः प्राप्तः । तरुण उक्षा । तस्य तनुत्वं तृतीयवयःप्राप्तिः । उक्षतरः । अश्वतरः । ऋषभतरः । क्वचित्तु तत्सहचरित धर्मान्तराणाम् । तत्र वत्सः प्रथमवयाः । वयसश्च प्रथमस्यन्यूनत्वं नाम वयोऽन्तरप्राप्तिः ।

## किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् । ९२ ।

द्वयोरेकस्य निर्धारणेऽर्थे वर्तमानेभ्यः किंयत्तद्भ्यो डतरच् जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक् करणं निर्धारणम् । युवयोः कतरो विद्यासागरः । यतरो विद्यासागरस्ततर आगच्छतु । महाविभाषया । कः । यः । सः ।

## वा बहूनां जातिपरिप्रश्ने डतमच् । ९३ ।

जातिपरिप्रश्नेऽर्थे वर्तमानेभ्यः किंयत्तद्भ्यो डतमच् वा बहूनामेकस्य निर्धारणे गम्यमाने । जातिपरिप्रश्न इति खण्डितम् । कतमो भवतां कठः । यतमः कठः ततम आगच्छतु । द्वयोरित्यस्य प्रत्याख्यानाड्डतरजपि । कतरः । वा वचनमकजर्थम् । को भवतां कठः । यकः कठः सक आगच्छतु । यः स इत्यपि ।

## एकाच्च प्राचाम् । ९४ ।

एकशब्दाड्डतरच्डतमचौ स्वस्मिन्विषये प्राचां मते । एकतरो भवतोर्यज्ञदत्तः । एकतमो भवतां यज्ञदत्तः । इति प्रागिवीयाः ।

## अवक्षेपणे कन् । ९५ ।

अवक्षिप्यते येन तदवक्षेपणम् । अवक्षेपणेऽर्थे वर्तमानात्प्रातिपदिकात् कन् । व्याकरणकेन नाम त्व गर्वितः । येनेतरः कुत्स्यते तदिहोदाहरणम् । स्वतः कुत्सिते तु 'कुत्सिते' इत्यस्य ।

## इवे प्रतिकृतौ । ९६ ।

इवार्थे वर्तमानात् प्रातिपदिकात् कन् । इवार्थः प्रतिकृतिश्चेत् । अश्व इव प्रतिकृतिरश्वकः । प्रतिकृतौ किम् । गौरिव गवयः । अप्रतिकृत्यर्थमारम्भः ।

## संज्ञायां च । ९७ ।

इवार्थे प्रातिपदिकात् कन संज्ञायाम् । अश्वसदृशस्यसंज्ञा अश्वकः । उष्ट्रकः ।

## लुम्मनुष्ये । ९८ ।

मनुष्येऽभिधेये संज्ञायां विहितस्य प्रत्ययस्य लुप् । चञ्चा तृणमयः पुमान् । चञ्चेव मनुष्यः, चञ्चा । वध्रिका इव वध्रिका ।

## जीविकार्थे चापण्ये । ९९ ।

विक्रीयते यत्तत् पण्यम् । अपण्ये जीविकार्थेऽभिधेये कनो लुप् ।

शिवः । स्कन्दः । युधिष्ठिरः । देवलकादीनां जीविकार्था देवप्रतिकृतय एव मुच्यन्ते । अपण्ये इति किम् । हस्तिकान् विक्रीणीते ।

## देवपथादिभ्यश्च । १०० ।

देवपथादिभ्यः परस्य कनो लुप् । देवपथ इव प्रतिकृतिः देवपथः । हंसपथः । आकृतिगणोऽयम् ।

## वस्तेर्ढञ् । १०१ ।

इवार्थे वर्तमानात् वस्तिशब्दाड्ढञ् । प्रतिकृताविति निवृत्तम् । वस्तिरिव वास्तेयः ।

## शिलाया ढः । १०२ ।

शिलाशब्दाड्ढः इवार्थे द्योत्ये । शिलेव, शिलेय दधि । योगविभागात्, ढञपीत्येके । शैलेयम् ।

## शाखादिभ्यो यत्[1] । १०३ ।

शाखादिभ्यो यत्, इवार्थे द्योत्ये । शाखेव शाख्यः । मुख्यः । जघन्यः । अग्र्यः ।

## द्रव्यं च भव्ये । १०४ ।

भव्येऽर्थे द्योत्ये द्रव्यमिति निपात्यते । भव्य आत्मवान् । द्रुशब्दादिवार्थे यत् निपात्यते । द्रव्यमयं ब्राह्मणः ।

## कुशाग्राच्छः । १०५ ।

कुशाग्रात्प्रातिपदिकात् इवार्थे छः । कुशाग्रमिव सूक्ष्मत्वात् । कुशाग्रीया बुद्धिः । कुशाग्रीयं वस्त्रम् ।

## समासाच्च तद्विषयात् । १०६ ।

---

(१) क्वचिद् 'यः' इति पाठः ।

इवार्थविषयात्समासाच्छः। काकतालीयो (१) वधः। अतर्कितोपनत इत्यर्थः।

## शर्करादिभ्योऽण्। १०७।

शर्करादिभ्य इवार्थे अण्। शर्करेव शार्करम्। कापालिकम्।

## अङ्गुल्यादिभ्यष्ठक्। १०८।

अङ्गुल्यादिभ्य इवार्थे ठक्। अङ्गुलीव आङ्गुलिकः। भरुजइव, भारुजिकः। भरुजः क्षुद्र शृगालः।

## एकशालायाष्ठजन्यतरस्याम्। १०९।

एकशाला प्रातिपदिकादिवार्थे ठञ्वा। पक्षे ठक्। एकशालिकः। ऐकशालिकः।

## कर्कलोहितादीकक्। ११०।

कर्कलोहिताभ्यामिवार्थे ईकक्। कर्कः शुक्लोऽश्वः, स इव, कार्कीकः। लौहितीकः।

## प्रत्नपूर्वविश्वेमात्थाल् छन्दसि। १११।

प्रत्नादिभ्य इवार्थे थाल् छन्दसि। तं प्रत्नथा पूर्वथा विश्वथेमथा।

## पूगाञ्ञ्योऽग्रामणीपूर्वात्। ११२।

नानाजातीया अनियत वृत्तयोऽर्थकामप्रधानाः संघाः पूगाः। अग्रामणीपूर्वात्पूगवाचिनः प्रातिपदिकात् ञ्यः। अनिर्दिष्टाऽर्थाः प्रत्ययाः स्वार्थे भवन्ति। लौहध्वज्यः। लौहध्वज्यौ। लोहध्वजाः। अग्रामणीपूर्वादिति किम्। देवदत्तो ग्रामणी रेषां त इमे देवदत्तकाः।

## व्रातच्फञोरस्त्रियाम्। ११३।

व्रातवाचिभ्यः, च्फञन्तेभ्यश्च स्वार्थे ञ्यः न तु स्त्रियाम्। व्राते-

(१) काकतालसमागमसदृशश्चौरसमागम इति समासार्थः। तत्प्रयुक्तः काकमरणसदृशस्तु प्रत्ययार्थः।

कापोतपाक्यः । रफणि—कौञ्जायन्यः ।

## आयुधजीविसङ्घाञ्ञ्यड् वाहीकेष्वब्राह्मणराजन्यात् । ११४ ।

वाहीकेषु य आयुधजीविनां सङ्घास्तद्वाचिनः प्रातिपदिकात् ञ्यट् नतु-ब्राह्मणराजन्यात् । क्षुद्रक एव क्षौद्रक्यः । मालव्यः ।

## वृकाट्टेण्यण् ॥ ११५ ॥

आयुधजीविसङ्घवाचकात् वृकप्रातिपदिकात् स्वार्थे टेण्यण् । वृक एव, वार्केण्यः । जातिशब्दात्तु न । कामक्रोधौ मनुष्याणां खादितारौ वृकाविव ।

## दामन्यादित्रिगर्तषष्ठाच्छः ॥ ११६ ॥

आयुधजीविवाचकेभ्यो दामन्यादिभ्यस्त्रिगर्तषष्ठेभ्यश्च स्वार्थे छः । दामनीयः । कौण्डोपरथीयः । कौण्डोपरथाः ।

## पर्श्वादियौधेयादिभ्यामणञौ ॥ ११७ ॥

आयुधजीविसंघवाचिभ्य पर्श्वादिभ्यो यौधेयादिभ्यश्च स्वार्थे अणञौ । पार्शवः । पार्शवौ । पर्शवः । यौधेयः ।

## अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ॥ ११८ ॥

अणन्तेभ्योऽभिजिदादिभ्यः स्वार्थे यञ् । अभिजितोऽपत्यमित्यणि कृते यञ् । आभिजित्यः । वैदभृत्यः । शालावत्यः । शैखावत्यः । शामीवत्यः । और्णावत्यः । श्रौमत्यः ।

## ञ्यादयस्तद्राजाः ॥ ११९ ॥

ञ्यादयस्तद्राजसञ्ज्ञकाः । तद्राजप्रदेशास्तद्राजस्य बहुष्वित्येवमादयः । बहुवचने लुक् । तथैवोदाहृताः । उदाहर्तव्याश्च ॥

इति पञ्चमाध्यायस्य तृतीयः पादः ॥

# अथ पञ्चमाध्यायस्य चतुर्थपादारम्भः ।



## पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च[1] । १ ।

संख्यादेः पादशतान्तात् प्रातिपदिकात् वीप्सायां वुन् पादान्तस्य च लोपः । द्वौ पादौ ददाति इति द्विपदिकां ददाति । द्वे शते ददातीति द्विशतिकां ददाति । तद्धितार्थ इति समासः । ततः प्रत्ययः । पादशतस्येति किम् । द्वौ द्वौ माषौ ददाति । संख्यादेरिति किम् । पादं पादं ददाति । वीप्सायामिति किम् । द्वौ पादौ ददाति ।

## दण्डव्यवसर्गयोश्च । २ ।

दण्डव्यवसर्गयोर्गम्यमानयोः संख्यादेः पादशतान्तात् प्रातिपदिकात् वुन पादशतान्तस्य च लोपः । द्वौ पादौ दण्डितः द्विपदिकां दण्डितः । द्विपदिकां व्यवसृजति ।

## स्थूलादिभ्यः प्रकारवचने कन् । ३ ।

प्रकारवचने द्योत्ये स्थूलादिभ्यः कन् । स्थूलप्रकारः स्थूलकः । ( कन्प्रकरणे चञ्चद्बृहतोरुपसंख्यानम् ) चञ्चतिश्चलनकर्मा । चञ्चत्प्रकारः चञ्चत्कः । बृहत्कः । ( सुराया अहौ ) सुरावर्णोऽहिः सुरकः । 'केऽणः' इति ह्रस्वः ।

## अनत्यन्तगतौ क्तात् । ४ ।

अनत्यन्तगतौ गम्यमानायां क्तान्तात् प्रातिपदिकात् कन् । अनत्यन्तो भिन्नः भिन्नकः । अनत्यन्तगताविति किम् । भिन्नम् । छिन्नम् ।

## न सामिवचने । ५ ।

---

१ पादशतग्रहणमनर्थकमन्यत्रापि वुनो दर्शनात् । द्विमोदकिकां ददाति ।

साम्विचने उपपदे क्तान्तात्कन् न । सामिकृतम्(१) । वचनग्रहणं पर्यायार्थम् । अर्द्धकृतम् । नेमकृतम् । अनत्यन्त गतेरिह प्रकृत्यैवाभिधानात् पूर्वेण कन् न प्राप्तः । इदमेव निषेध सूत्रमत्यन्त स्वार्थिकमपि कनं ज्ञापयति । बहुतरकम् ।

## बृहत्या आच्छादने ।६।

आच्छादनेऽर्थे वर्तमानात् बृहतीशब्दात्कन् । बृहतिका । आच्छादने किम् । बृहतीछन्दः ।

## अषडक्षाशितङ्ग्वलंकर्मालंपुरुषाध्युत्तरपदात् खः ।७।

अषडक्षादिभ्यः स्वार्थे खः । अषडक्षीणो मन्त्रः । अविद्यमानानि षडक्षीणि अस्येति बहुव्रीहिः । 'बहुव्रीहौ सक्थ्यक्ष्णो' रितिषच्प्रत्ययः । ततः खः । यो द्वाभ्यामेव क्रियते न बहुभिः । आशितङ्गवीनम् । निपातनात्पूर्वस्य मुम् । आशिता गावोऽस्मिन्नरण्ये इति विग्रहः । अलङ्कर्मणे इति अलङ्कर्मीणः । 'पर्यादयो ग्लानाद्यर्थे' इति समासः । अलंपुरुषीणः । राजनि अधिकृत इति राजाधीनः । 'सप्तमी शौण्ड' रिति समासः । नित्योऽयं योगः । उत्तरसूत्रे विभाषाग्रहणात् । अन्येऽपि केचित् स्वार्थिका नित्यमिष्यन्ते । तमबादयः प्राक्कनः । ञ्यादयः प्राग्वुनः । आमादयः प्राङ्मयटः । बृहतीजात्यन्ताः समासान्ताश्चेति भाष्यम् ।

## विभाषाञ्चेरदिक्स्त्रियाम् ।८।

अञ्चत्यन्तात् प्रातिपदिकात् स्वार्थे वा खः न तु दिक्स्त्रियाम् । प्राक् । प्राचीनम् । अवाक् । अर्वाचीनम् । अदिक्स्त्रियामिति किम् । प्राची दिक् । दिग्ग्रहणं किम् । प्राचीना ब्राह्मणी । अवाचीना शिखा स्त्रीग्रहणं किम् । प्राचीनं दिग्रमणीयम् ।

---

१ प्रकृत्याभिहितत्वात्कन्नेति । भा० ।

## जात्यन्ताच्छ बन्धुनि ।९।

बन्धुन्यर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे छः। ब्राह्मणजातीयः। बन्धुनीति किम्। ब्राह्मणजातिः शोभना। जातेर्व्यञ्जकं द्रव्य बन्धु।

## स्थानान्ताद्विभाषा सस्थानेनेति चेत् ।१०।

स्थानान्तात्प्रातिपदिकात् स्वार्थे वा छः। सस्थानेन तुल्येन चेत् स्थानान्तमर्थवत्। समानं स्थानमस्येति सस्थानः। पित्रा तुल्यः, पितृस्थानीयः। पितृस्थानः। सस्थानेनेति किम् ग.स्थानम्। अश्वस्थानम्।

## किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ।११।

किमादिभ्यः परो यः घसंज्ञकस्तदन्तादाम्: नतु द्रव्यप्रकर्षे। यद्यपि द्रव्यस्य स्वतः प्रकर्षोनास्ति तथापि गुणक्रियास्थः प्रकर्षो यदाद्रव्य उपचर्यते तदाऽस्य प्रतिषेधः। क्रियागुणयोरेवाय प्रकर्ष प्रत्यय। किन्तराम्। किन्तमाम्। पूर्वाह्णेतराम्। पूर्वाह्णेतमाम्। पचतितराम्। पचतितमाम्। उच्चैस्तराम्। उच्चैस्तमाम्। अद्रव्य प्रकर्ष इति किम्। उच्चैस्तरः। उच्चैस्तमः।

## अमु च च्छन्दसि ।१२।

किमादिभ्यः परोयो घ संज्ञकः तदन्ताद् अमुः, चादामु छन्दसि विषये। प्रतरं नयामः। प्रतरां वस्यः।

## अनुगादिनष्ठक् ।१३।

अनुगादिनः प्रातिपदिकात् स्वार्थे ठक्। अनुगदतीति अनुगादी। स एव। आनुगादिकः।

## णचःस्त्रियामञ् ।१४।

'कर्मव्यतिहारे णच् स्त्रियाम्' इति णजन्तात् स्त्रियां स्वार्थेऽञ्। व्यावक्रोशी। स्त्रीग्रहणं किमर्थं यावता णच् स्त्रियामेव विहितः। एवं तर्ह्येतज्ज्ञापयति स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते तेन गुडकल्पा द्राक्षा। देव एव देवता इत्याद्युपपन्नम्।

## अणिनुणः । १५ ।

इनुणन्तात्प्रातिपदिकात् स्वार्थेऽण् । सांराविणं वर्तते ।

## विसारिणो मत्स्ये । १६ ।

विसरतीति विसारी । विसारिणः प्रातिपदिकात् स्वार्थेऽण् मत्स्येऽभिधेये । वैसारिणो मत्स्यः । मत्स्य इति किम् । विसारी देवदत्तः ।

## संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् । १७।

क्रियाभ्यावृत्तिगणनेऽर्थे वर्तमानेभ्यः संख्यावाचिभ्यः स्वार्थे कृत्वसुच् । पञ्चवारान्भुङ्क्ते । पञ्चकृत्वो भुङ्क्ते ।

## द्वित्रिचतुर्भ्यः सुच् । १८ ।

क्रियाभ्यावृत्तिगणनेऽर्थे द्वित्रिचतुर्भ्यः स्वार्थे सुच् । द्विर्भुङ्क्ते । त्रिर्भुङ्क्ते । (१)चतुर्भुङ्क्ते ।

२

## एकस्य सकृच्च । १९ ।

एकशब्दस्य सकृदादेशः सुचप्रत्ययश्च । सकृद्भुङ्क्ते । सकृदधीते ।

## विभाषा बहोर्धाऽविप्रकृष्टकाले । २० ।

अविप्रकृष्टकाले क्रियाभ्यावृत्तिगणनेऽर्थे वर्तमानाद्बहु प्रातिपदिकात् वा धा । पक्षे कृत्वसुच् । बहुधा दिवसस्य भुङ्क्ते । बहुकृत्वो वा ।

## तत्प्रकृतवचने मयट् । २१ ।

प्रकृतवचनेऽर्थे वर्तमानात् प्रथमासमर्थात् स्वार्थे मयट् । प्रकृतमन्नमन्नमयम् । अपूपमयम् ।

## समूहवच्च बहुषु । २२ ।

---

१ रात्सस्येति सलोपः ।

२ कृदभिहिते भावे द्रव्यवदपि क्रियावदपि तेन एकः पाकः सकृद्भोक्तुमित्यादौ न भवति भवति च ।

बहुषु प्रकृतेषूच्यमानेषु समूहवत् प्रत्ययाः चान्मयट् । प्रकृता मोदकाः, मौदकिकम् । मोदकमयम् ।

## अनन्तावसथेतिहभेषजाञ्ञ्यः । २३ ।

अनन्तादिभ्यः स्वार्थे ञ्यः । अनन्त एव, आनन्त्यम् । आवसथ्यम् । ऐतिह्यम् । भैषज्यम् ।

## देवतान्तात्तादर्थ्ये यत् । २४ ।

चतुर्थीसमर्थाद्देवतान्तात्प्रातिपदिकात् तादर्थ्ये यत् । अग्निदेवत्यम् ।

## पादार्घाभ्यां च । २५ ।

चतुर्थीसमर्थाभ्यां पादार्घाभ्यां तादर्थ्ये यत् । पाद्यम् । अर्घ्यम् ।

## अतिथेर्ञ्यः । २६ ।

चतुर्थीसमर्थात् अतिथिप्रातिपदिकात् तादर्थ्ये ञ्यः । आतिथ्यम् ।

## देवात्तल् । २७ ।

देवशब्दात्स्वार्थे तल् । देव एव, देवता ।

## अवेः कः । २८ ।

अविशब्दात्स्वार्थे कः । अविकः ।

## यवादिभ्यः कन् । २९ ।

यवादिभ्यः स्वार्थे कन् । यवकः । मणिकः ।

## लोहितान्मणौ । ३० ।

मणावर्थे वर्तमानाल्लोहितप्रातिपदिकात् स्वार्थे कन् । लोहितकः । ( अक्षरसमूहे छन्दस उपसंख्यानम् ) एष वै सप्तदशाक्षरश्छन्दस्यः । ( लोहिताल्लिङ्गबाधनं वेति वक्तव्यम् ) लोहितिका । लोहिनिका । ( नवस्य नूत्नप्तनप्खाश्च ) नूत्नम् । नूतनम् । नवीनम् । ( नश्च पुराणे प्रात्वक्तव्यः ) ( त्नप्तनप्खाश्च प्रत्यया वक्तव्याः ) प्रणम् । प्रत्नम् । प्रतनम् । प्रीणम् ।

## वर्णे चानित्ये । ३१ ।

अनित्ये वर्णेऽर्थे वर्तमानाल्लोहितप्रातिपदिकात् कन् । लोहितकः(१) कोपेन ।

## रक्ते । २ ।

रक्तेऽर्थे वर्तमानाल्लोहित प्रातिपदिकात् कन् । लोहितकः कम्बलः ।

## कालाच्च । ३३ ।

अनित्ये वर्णे रक्ते चार्थे वर्तमानात्कालशब्दात् कन् । कालकं मुखम् । कालकः पटः । कालिका शाटी ।

## विनयादिभ्यष्ठक् । ३४ ।

विनयादिभ्यः स्वार्थे ठक् । विनय एव वैनयिकः । सामयिकः(२) ।

## वाचो व्याहृतार्थायाम् । ३५ ।

व्याहृतार्थायां वर्तमानाद्वाक्शब्दात्स्वार्थे ठक् । वाचिकं कथयति । वाचिकं(३) श्रद्दधे ।

## तद्युक्तात्कर्मणोऽण् । ३६ ।

व्याहृतार्थवाचा युक्तं यत्कर्म्म तद्वाचिनः प्रातिपदिकात् स्वार्थे अण् । कर्मैव, कार्म्मणम्(४) । ( अण् प्रकरणे कुलालवरुडनिषादकर्म्मारचण्डालमित्रेभ्यश्छन्दस्युपसंख्यानम् ) कुलाल एव, कौलालः । वारुडः । नैषादः । कार्मारः । चाण्डालः । आमित्रः । ( भागरूपनामभ्यो धेयो वक्तव्यः ) भागधेयम् । रूपधेयम् । नामधेयम् । ( मित्राच्छन्दसि ) मित्रधेये यतस्व । ( अण् मित्राच्च ) मैत्रमामित्रः । सान्नाय्यानुजावरानुषूकचातुष्प्राश्यराक्षोघ्नवैयातवैकृतवारिवस्कृताग्रायणाग्रहायणसांतप-

---

१ लोहितात्लिङ्गबाधनं वेति । लोहितिका । लोहिनिका ।
२ उपायोह्रस्वत्वञ्च । ग० । औपयिकः ।
३ सन्देशवागित्यर्थः ।
४ वाचिकं श्रुत्वा क्रियमाणं कर्मेत्यर्थः ।

नानि निपात्यन्ते । ( आग्नीध्रसाधारणादञ् ) आग्नीध्रम् । साधारणम् । ( अपवसमरुद्भ्यां छन्दसि ) आपवसे वर्द्धन्ते मारुतं शब्दः । ( नवसूरमर्त्तयविष्ठेभ्यो यत् ) नव्यः । सूर्यः । मर्त्यः । यविष्ठ्यः । ( क्षेमाद्यः ) क्षेम्यस्तिष्ठन् ।

## ओषधेरजातौ । ३७ ।

अजात्यर्थे वर्तमानादोषधिशब्दात्स्वार्थेऽण् । ओषधिरेवौषधम् ।

## प्रज्ञादिभ्यश्च । ३८ ।

प्रज्ञादिभ्यः स्वार्थेऽण् । प्राज्ञः । वाणिजः ।

## मृदस्तिकन् । ३९ ।

मृच्छब्दात्स्वार्थे तिकन् । मृदेव मृत्तिका ।

## सस्नौ प्रशंसायाम् । ४० ।

प्रशंसायामर्थे वर्तमानान्मृत्शब्दात्सस्नौ । मृत्सा । मृत्स्ना ।

## वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि । ४१ ।

प्रशंसायां वृकज्येष्ठाभ्यां तिलतातिलौ छन्दसि । प्रशस्तो वृको वृकतिः । ज्येष्ठतातिः ।

## बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् । ४२ ।

बह्वर्थादल्पार्थाच्च कारकवाचिनः शब्दाद्वा शस् । बहूनि बहुभिर्बहुभ्यो वा ददाति, बहुशो ददाति । अल्पमल्पेनाल्पाय वा ददाति, अल्पशो ददाति । ( बह्वल्पार्थान्मङ्गलामङ्गलवचनम् ) तेनेह न, बहूनि ददात्यनिष्टेषु ।

## संख्यैकवचनाच्च वीप्सायाम् । ४३ ।

संख्यावाचिभ्यः प्रातिपदिकेभ्य एकवचनान्ताच्च शस् वीप्सायाम् । द्वौ द्वौ ददाति द्विशो ददाति । कार्षापणं कार्षापणं ददाति, कार्षापणशः ददाति । संख्यैकवचनादिति किम् । घटं घटं ददाति । वीप्सायामिति किम् ।

द्वौ ददाति । कारकादित्येव द्वयोर्द्वयोः स्वामी ।

## प्रतियोगे पञ्चम्यास्तसिः । ४४ ।

प्रतियोगे या पञ्चमी तदन्तात्तसिः । अभिमन्युरर्जुनतः प्रति । वा वचनाद्वाक्यमपि । ( तसिप्रकरणे आद्यादिभ्य(१) उपसंख्यानम् ) आदितः । मध्यतः । अन्ततः । पृष्ठतः । पार्श्वतः ।

## अपादाने चाहीयरुहोः । ४५ ।

अपादाने या पञ्चमी तदन्तात्तसिर्वा तच्चेद्धीयरुहोः सम्बन्धि न भवेत् । ग्रामत आगच्छति । ग्रामात् । चौरतो बिभेति । चौरात् । अहीयरुहोरिति किम् । सार्थाद्धीयते । पर्वतादवरोहति ।

## अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः । ४६ ।

अतिग्रहादिष्वर्थेषु या तृतीया तदन्तात्तसिर्वा सा कर्तरि न चेत् । अतिक्रम्य ग्रहोऽतिग्रहः । अचलनमव्यथनम् । क्षेपो निन्दा । वृत्तेन वृत्ततो वाऽति(२) गृह्यते । सुष्ठुवृत्तवानन्यानतिक्रम्य वृत्तेन गृह्यत इत्यर्थः । अव्यथने वृत्तेन वृत्ततो वा न व्यथते । वृत्तेन न चलतीत्यर्थः । क्षेपे वृत्तेन वृत्ततो वा क्षिप्तः । वृत्तेन निन्दित इत्यर्थः । अकर्तरीति किम् । देवदत्तेन क्षिप्तः ।

## हीयमानपापयोगाच्च । ४७ ।

हीयमानपापाभ्यां योगो यस्य तद्वाचिनस्तृतीयान्तात्प्रातिपदिकात् तसिर्वा सा तृतीया कर्तरि न चेत् । वृत्तेन वृत्ततो वा हीयते । वृत्तेन वृत्ततो वा पापः । अकर्त्तरीत्येव । देवदत्तेन हीयते ।

## षष्ठ्या व्याश्रये । ४८ ।

नानापक्षसमाश्रयो व्याश्रयः । व्याश्रये गम्यमाने षष्ठ्यन्ताद्वा तसिः । देवा अर्जुनतोऽभवन् । आदित्याः कर्णतोऽभवन् । षष्ठीचात्र पक्षापेक्षैव ।

( १ )—आकृतिगणत्वात्स्वरेण, स्वरतः, वर्णेन, वर्णतः ।

( २ )—अक्षेपार्थोऽयं क्षेपे तु पूर्वेणसिद्धम् ।

अर्जुनस्य पक्षे कर्णस्येत्यर्थः । व्याश्रय इति किम् । वृक्षस्य शाखा ।

## रोगाच्चापनयने ।४९।

षष्ठ्यन्ताद्रोगवाचिनः प्रातिपदिकात् वा तसिरपनयने गम्यमाने । रोगो व्याधिः अपनयनं प्रतिकारः । प्रवाहिकातः कुरु । प्रतीकार मस्याः कुर्वित्यर्थः । कासतः कुरु । अपनयन इति किम् । प्रवाहिकायाः प्रकोपनं कुरु ।

## कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः ।५०।

( अभूततद्भावग्रहणं कर्तव्यम् ) । सम्पद्यकर्तर्यर्थे वर्तमानात्प्रातिपदिकात् कृभ्वस्तियोगे च्विरभूततद्भावे गम्यमाने । कारणस्य विकाररूपेण भूतस्य तदात्मना भावः अभूततद्भावः । संपद्यतेः कर्ता संपद्यकर्ता । अशुक्लः शुक्लः सपद्यते तं करोति । शुक्लीकरोति । शुक्लीभवति । शुक्लीस्यात् । अभूततद्भाव इति किम् । शुक्लं करोति । नात्र प्रकृति र्विवक्षिता । कृभ्वस्तियोग इति किम् । अशुक्लः शुक्लो जायते । संपद्यकर्त्तरीति किम् । कारकान्तरसम्पत्तौ मा भूत् । अदेवगृहे देवगृहे संपद्यते । देवगृहस्य आधेय विशेषसम्बन्धेनाभूततद्भावः सत्त्वाधिकरणस्य न कर्तुरिति ।

## अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ।५१।

च्विसंयोगेनैषां लोपः च्विप्रत्ययश्च । अरूकरोति । अरूभवति । अरूस्यात् । उन्मनीकरोति । उच्चक्षूकरोति । विचेतीकरोति । विरहीकरोति । विरजीकरोति ।

## विभाषा साति कार्त्स्न्ये ।५२।

च्विविषये साति र्वा स्यात् कार्त्स्न्ये गम्यमाने । अग्निसाद्भवति, अग्नीभवति । महाविभाषया वाक्यमपि । कार्त्स्न्य इति किम् । एकदेशेन पटः शुक्लीभवति ।

## अभिविधौ सम्पदा च ।५३।

अभिविधिरभिव्याप्तिः । सम्पदाकृभ्वस्तिभिश्च योगे साति र्वा स्याद् व्याप्तौ । पक्षे कृभ्वस्तियोगे च्विः । सम्पदातु वाक्यमेव । अग्निसात् सम्पद्यते । अग्निसाद्भवति शस्त्रम् । अग्नीभवति । जलसात्सम्पद्यते जली-

भवति लवणम् । एकस्या व्यक्तेः सर्वावयवावच्छेदे नान्यथाभाव कात्स्न्यम् । बहूनां व्यक्तीनां किंचिदवयवावच्छेदेन अन्यथा त्वन्त्वभिविधिः ।

## तदधीनवचने । ५४ ।

कृभ्वस्तियोगे सम्पदा च योगे सातिस्तदधीनवचने गम्यमाने । राजाधीनं करोति राजसात्करोति । राजसाद्भवति । राजसात्स्यात् । राजसात् सम्पद्यते वा ।

## देये त्रा च । ५५ ।

तदधीने देये पूर्वविषये त्रा, चात्सातिः । ब्राह्मणाधीनं देयं करोति । ब्राह्मणत्राकरोति । ब्राह्मणत्राभवति । ब्राह्मणत्रास्यात् । ब्राह्मणत्रा सम्पद्यते वा । ब्राह्मणसात्करोति । देय इति किम् राजसाद्भवति राष्ट्रम् ।

## देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् । ५६ ।

साति निवृत्तः त्रा प्रत्ययो ऽनुवर्तते । कृभ्वस्तिभि रिति नात्र संबध्यते । द्वितीयासप्तमीसमर्थेभ्यो देवादिभ्यो बहुलं त्रा । देवान् देवेषु वा गच्छति वसति वा, देवत्रागच्छति । देवत्रावसति । मनुष्यत्रागच्छति । मनुष्यत्रा वसति । एवमन्येऽप्युदाहार्याः । बहुलग्रहणादन्यत्रापि । बहुत्रा जीवतो मनः ।

## अव्यक्तानुकरणाद् द्व्यजवरार्द्धादनितौ डाच् । ५७ ।

द्व्यच् अवरं न्यूनं न तु ततो न्यूनमनेकाजिति यावत् । तादृशमर्धं यस्य तस्मादनितिपराड् डाच् स्यात् कृभ्वस्तिभियोगे । ( डाचि विवक्षिते द्वे बहुलम् ) ( नित्यमाम्रेडिते डाचीति वक्तव्यम् ) डाच् परं यदाम्रेडितं तस्मिन् परे पूर्वपरयोर्वर्णयोः पररूपं स्यात् । इति तकारपकारयोः पकारः । पटपटाकरोति । पटपटाभवति । पटपटास्यात् । अव्यक्तानुकरणात्किम् ।

दृषत्करोति। द्व्यजन्तरार्धात् किम्। श्रत्करोति। अवरेति किम्। खरट-खरटाकरोति। अनितौ किम्। पटितिकरोति।

## कृञो द्वितीयतृतीयशम्बबीजात्कृषौ ।५८।

द्वितीयादिभ्यः कृञ् योगे डाच् कृषौ गम्यमानायाम्। द्वितीयाकरोति। तृतीयाकरोति। द्वितीयं तृतीयं वा कर्षणम्। (१ शम्बाकरोति। बीजेन सह कर्षति बीजाकरोति। कृषाविति किम्। द्वितीयं करोति पदम्।

## संख्यायाश्च गुणान्तायाः ।५९।

संख्याया गुणान्तायाः कृञ् योगे डाच् कृषौ। द्विगुणाकरोति क्षेत्रम्। क्षेत्रकर्मकं द्विगुणं कर्षणं करोतीत्यर्थः। कृषाविति किम्। द्विगुणां करोति रज्जुम्।

## समयाच्च यापनायाम् ।६०।

कृषाविति निवृत्तम्। कर्तव्यस्यावसरप्राप्तिः समयस्तस्यातिक्रमणं यापना। समयशब्दात्कृञोयोगे डाच् यापनायां गम्यमानायाम्। समया-करोति। कालं यापयतीत्यर्थः। यापनायामिति किम्। समयं करोति।

## सपत्रनिष्पत्रादतिव्यथने ।६१।

सपत्रनिष्पत्राभ्यां कृञ् योगे डाच् अतिव्यथने गम्यमाने। अतिव्यथन-मतिपीडनम्। सपत्राकरोति। सपत्रं शर मस्य शरीरे प्रवेशयति इत्यर्थः। निष्पत्राकरोति। शरीरात् शरमपरपार्श्वे निष्क्रामयतीत्यर्थः। अतिव्यथने किम्। सपत्रं वृक्षं करोति जलसेचकः।

## निष्कुलान्निष्कोषणे ।६२।

निष्कुलात्प्रातिपदिकात् कृञ् योगे डाच् निष्कोषणे गम्यमाने। (२)निष्कुलाकरोति दाडिमम्। निष्कोषण इति किम्। निष्कुलान् करोति रिपून्।

---

१ शम्बशब्दः प्रतिलोमे, अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षतीत्यर्थः।
२ निर्गतं कुलमन्तरवयवानां समूहो यस्मादिति बहुव्रीहेर्डाच्।

## सुखप्रियादानुलोम्ये । ६३ ।

सुखप्रियाभ्यां कृञोयोगे डाजानुलोम्ये गम्यमाने । सुखाकरोति । प्रियाकरोति । स्वाम्यादेश्चित्तमाराधयतीत्यर्थः । आनुलोम्य इति किम् । सुखं करोति प्रियं करोति औषधपानम् ।

## दुःखात्प्रातिलोम्ये । ६४ ।

दुःखप्रातिपदिकात् कृञ् योगे डाच् प्रातिलोम्ये गम्यमाने । प्रातिलोम्यं प्रतिकूलता । दुःखाकरोति स्वामिनम् पीडयतीत्यर्थः । प्रातिलोम्य इति किम् । दुःख करोति कदन्नम् ।

## शूलात्पाके । ६५ ।

शूलप्रातिपदिकात् कृञोयोगे डाच् पाके गम्यमाने । शूले पचति, शूलाकरोति द्राक्षाम् । पाक इति किम् । शूलं करोति कदन्नम् ।

## सत्यादशपथे । ६६ ।

सत्यप्रातिपदिकात् कृञोयोगे डाच् न तु शपथे । (१) सत्याकरोति वणिग्भाण्डम् । मयैतत्क्रेतव्यमिति तथ्यं करोति । अशपथ इति किम् । सत्यं करोति ब्राह्मणः ।

## मद्रात्परिवापणे । ६७ ।

मद्रशब्दात्कृञोयोगे डाच् परिवापणे गम्यमाने। परिवापणं मुण्डनम् । मद्रशब्दो मङ्गलार्थः । मद्राकरोति । ( भद्राच्चेति वक्तव्यम् ) भद्राकरोति नापितः कुमारम् ।

## समासान्ताः । ६८ ।

अधिकारोऽयमापञ्चमाध्यायपरिसमाप्तेः ।

## न पूजनात् । ६९ ।

पूजनात्परे ये, तदन्तेभ्यः समासान्ता न । सुष्ठु राजा, सुराजा । अतिगौः । ( पूजायां स्वतिग्रहणं कर्तव्यम् ) तेनेह न । परमश्चासौ राजा च,

१ मयैवैतद्ग्राह्यमितिबुद्ध्या परीक्षादिना सत्यङ्कारद्रव्यप्रदानेन दृढंकरोतीत्यर्थः ।

परमराजः । ( प्राग्बहुव्रीहिग्रहणञ्च ) तेनात्र निषेधो न । स्वक्षः ।

## किमः क्षेपे ।७०।

क्षेपे यः किंशब्दस्ततः परः समासान्तो न । कुत्सितो राजा, किंराजा । यो न रक्षति । किंगौ र्यो न वहति । 'किं क्षेपे' इति समासः । क्षेप इति किम् । कस्य राजा किंराजः । किंगवः ।

## नञस्तत्पुरुषात् ।७१।

नञः परो यस्तदन्तात्तत्पुरुषात्समासान्तो न । न राजा, अराजा, असखा । तत्पुरुषादिति किम् । अनृचो माणवकः ।

## पथो विभाषा ।७२।

नञः परो यः पथिन्शब्दस्तदन्तात् तत्पुरुषात् समासान्तो वा । न पन्था इत्यपथम् । अपन्था वा । तत्पुरुषादित्येव । अपथो देशः ।

## बहुव्रीहौ संख्येये डजबहुगणात् ।७३।

संख्येये यो बहुव्रीहिस्तस्माड्डच् न तु बहुगणान्तात् । दशानां समीपे ये, त उपदशाः ( डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं निस्त्रिंशाद्यर्थम् ) निस्त्रिंशानि वर्षाणि देवदत्तस्य । अबहुगणात् किम् । उपबहवः । उपगणाः । अत्र स्वरे विशेषः ।

## ऋक्पूरब्धूःपथामानक्षे ।७४।

अ अनक्षे, इतिच्छेदः । ऋगाद्यन्तात्समासान्तः अः, अक्षे या धूस्तदन्तस्य तु न । अनृचः । नान्दीपुरम् । द्वीपम् । राजधुरा । सुपथो देशः । परमपथम् ।

## अच्प्रत्यन्ववपूर्वात्सामलोम्नः ।७५।

प्रत्यन्ववपूर्वात्सामान्ताल्लोमान्ताच्च प्रातिपदिकात् समासान्तोऽच् । प्रतिसाममित्यादि । प्रतिलोममित्यादि । प्रतिगतानि लोमानि यस्येति विग्रहः । ( [१]कृष्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः । गोदावर्य्याश्च नद्याश्च

१ एतदजिति योगविभागाल्लब्धमिति वृत्तिः ।

संख्याया उत्तरे यदि ) कृष्णभूमः । उदग्भूमः । पाण्डुभूमः । सप्तगोदावरम् । पञ्चनदम् । भूमेरपि संख्यापूर्वाया अजिष्यते ) द्विभूमः प्रासादः । ( अन्यत्रापि दृश्यते ) पद्मनाभः ।

## अक्ष्णोऽदर्शनात् । ७६ ।

अदर्शनविषयो योऽक्षिशब्दस्तदन्तात् समासान्तोऽच् । गवामक्षीव, गवाक्षः । 'उपमितं व्याघ्रादिभिः' इति समासः । अदर्शनादिति किम् ब्राह्मणाक्षि ।

## अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिश्श्रेयसपुरुषायुषद्व्यायुषत्र्यायुषग्र्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः । ७७ ।

एते पञ्चविंशतिशब्दा अच्प्रत्ययान्ता निपात्यन्ते । आद्यास्त्रयो बहुव्रीहयः । ततः परे एकादश द्वन्द्वाः । ततोऽव्ययीभावः । ततस्तत्पुरुषः । ततः षष्ठीसमासः । ततो द्विगुः । ततो द्वन्द्वः । जातादय उक्षान्तास्त्रयः कर्म्मधारयाः । ततोऽव्ययीभावः । ततः सप्तमीसमासः । अदृश्यान्यविद्यमानानि वा चत्वारि यस्य सोऽचतुरः । विगतानि चत्वारि यस्य स विचतुरः । शोभनानि चत्वारि यस्य स सुचतुरः । स्त्री च पुमांश्च स्त्रीपुंसौ । धेनुश्च अनड्वांश्च धेन्वनडुहौ । ऋक् च साम च ऋक्सामे । वाक् च मनश्च वाङ्मनसे । अक्षिणी च भ्रुवौ च अक्षिभ्रुवम् । दाराश्च गावश्च दारगवम् । ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवम् । निपातनाट्टिलोपः । पादौ च अष्ठीवन्तौ च पदष्ठीवम् । पादस्य पद्भावो निपातनात् । नक्तं च दिवा च नक्तन्दिवम् । रात्रौ च दिवा च रात्रिंदिवम् । रात्रेर्मान्तत्वं निपात्यते । अहनि च दिवा च अहर्दिवम् । वीप्सायां द्वन्द्वो निपात्यते । अहन्यहनीत्यर्थः । सरजसम् । साकल्येऽव्ययीभावः । बहुव्रीहौ तु सरजः पङ्कजम् । निश्चितं श्रेयो निःश्रेयसम् । तत्पुरुष

एव । नेह । निःश्रेयान् पुरुषः । पुरुषस्यायुः पुरुषायुषम् । द्वे आयुषी समाहृते द्व्यायुषम् । ऋक् च यजुश्च ऋग्यजुषम् । जातश्चासावुक्षा जातोक्षः । महोक्षः । वृद्धोक्षः । शुनः समीपमुपशुनम् । टिलोपाभावः सम्प्रसारणं च निपातनात् । गोष्ठे श्वा गोष्ठश्वः । सप्तमीसमासः । ( त्र्युपाभ्यां चतुरोऽजिष्यते ) त्रिचतुराः । उपचतुराः ।

## ब्रह्महस्तिभ्यां वर्चसः । ७८ ।

ब्रह्महस्तिभ्यां परो यो वर्चशब्दस्तदन्तात्समासान्तोऽच् । ब्रह्मणो वर्चः ब्रह्मवर्चसम् । हस्तिवर्चसम् । ( पल्यराजभ्यां च ) 'पलं मांस मर्हति' इति पल्यो मांसभोजी तदीयं वर्चः । पल्यवर्चसम् । राजवर्चसम् ।

## अवसमन्धेभ्यस्तमसः । ७९ ।

अवादिभ्यः परो यस्तमस्शब्दस्तदन्तात्समासान्तोऽच् । अवहीनं तमः । अवतमसम् । सन्ततं तमः । सन्तमसम् । अन्धयतीति अन्धं पचाद्यच् । अन्धतमसम् । गाढमित्यर्थः ।

## श्वसो वसीयःश्रेयसः । ८० ।

श्वसः परौ यौ वसीयःश्रेयश्शब्दौ तदन्तात्समासान्तोऽच् । श्वःश्रेयसं ते भूयात्(१) । श्वोवसीयसम् ।

## अन्ववतप्ताद्रहसः । ८१ ।

अन्ववतप्तात्परो योरहश्शब्दस्तदन्तात्समासान्तोऽच् । अनुरहसम् । अवरहसम् । तप्तरहसम् । रह इत्यप्रकाशमुच्यते । अनुगत मवहीनं च रह इति प्रादिसमासः । तप्तं च तद्रहश्च इति कर्मधारयः । परेणानधिगम्यमित्यर्थ ।

## प्रतेरुरसः सप्तमीस्थात् । ८२ ।

प्रतेः परो यः सप्तमीस्थ उरश्शब्दस्तदन्तात्समासान्तोऽच् । उरसि प्रति, प्रत्युरसम् विभक्त्यर्थेऽव्ययीभावः ।

---

१ शोभनं श्रेयस्ते भूयादित्यर्थः श्वोवसीयसमित्यस्यैव पर्यायः ।

## अनुगवमायामे ।८३।

अनुगवमिति, अच्प्रत्ययान्तो निपात्यते, आयामे द्योत्ये । अनुगवम्, यानम् । 'यस्य चायामः' इति समासः । आयाम इति किम् । गवां पश्चादनुगु ।

## द्विस्तावा त्रिस्तावा वेदिः ।८४।

द्विस्तावा त्रिस्तावेति अच्प्रत्ययान्तौ निपात्येते वेदिश्चेत् । अच् प्रत्ययष्टिलोपः समासश्च निपात्यते । यावती प्रकृतौ वेदिः ततो द्विगुणा त्रिगुणा वा विकृतौ तत्रेदं निपातनम् । वेदिरिति किम् । द्विस्तावती त्रिस्तावती रज्जुः ।

## उपसर्गादध्वनः ।८५।

उपसर्गात्परो योऽध्वन्शब्दस्तदन्तात्समासान्तोऽच् । प्रगतोऽध्वानं, प्राध्वो रथः । उपसर्गादिति किम् । परमाध्वा ।

## तत्पुरुषस्याङ्गुलेः संख्याऽव्ययादेः ।८६।

संख्याव्ययादेरङ्गुल्यन्तात्तत्पुरुषात्समासान्तोऽच् । द्व्यङ्गुलम् (१) काष्ठम् । निरङ्गुलम् ।

## अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ।८७।

अहरादिभ्यश्चात्संख्याव्ययादेः परो यो रात्रिशब्दस्तदन्तात्समासान्तोऽच् । अहोरात्रः । सर्वरात्रः । पूर्वरात्रः । संख्यातरात्रः । पुण्यरात्रः । द्वे रात्री समाहृते, द्विरात्रः । अतिक्रान्तो रात्रिम्, अतिरात्रः ।

## अह्नोऽह्न एतेभ्यः ।८८।

संख्याऽव्ययादिभ्यः परस्याहन्शब्दस्याऽह्नादेशः समासान्ते परतः । द्वयोरह्नोर्भवो द्व्यह्नः । अहरतिक्रान्तः अत्यह्नः । सर्वाह्नः । पूर्वाह्नः । संख्याताह्नः ।

---

१ द्वे अङ्गुली प्रमाणमस्येति विग्रहः । मात्रचो लोपः । 'प्रमाणेलो, द्विगोर्नित्य' मिति वार्तिकेन । 'तद्धितार्थे' ति समासः ।

## न संख्यादेः समाहारे।८९।

समाहारे वर्तमानस्य संख्यादेरहन्शब्दस्याह्नादेशो न। द्वे अहनी समाहृते इति द्व्यहः। समाहार इति किम्। द्वयोरह्नो र्भवो द्व्यह्नः। तद्धितार्थ इति समासेकृतेऽण आगतस्य द्विगोरिति लुक्।

## उत्तमैकाभ्यां च।९०।

उत्तमैकाभ्यां परस्य अहन् शब्दस्याऽह्नादेशो न। उत्तमशब्दोऽत्र पुण्यवचनः। पुण्यमहः, पुण्याहः। एकमहः, एकाहः।

## राजाहस्सखिभ्यष्टच्।९१।

राजाद्यन्तात् समासान्तष्टच्। महांश्चासौ राजा च, महाराजः। परमाहः। इन्द्रसखः।

## गोरतद्धितलुकि।९२।

गोन्तात् तत्पुरुषाट्टच् समासान्तो न तु तद्धितलुकि। परमगवः। पञ्चगवम्। अतद्धितलुकीति किम्। पञ्चभिर्गोभिः क्रीतः पञ्चगुः। तेन क्रीत मित्यागतस्यार्हीयस्य ठकोऽध्यर्ध पूर्वद्विगोरिति लुक्।

## अग्राख्यायामुरसः।९३।

उरश्शब्दान्तात् तत्पुरुषात् समासान्तष्टच् अग्राख्यायाम्। अश्वोरसम्। हस्त्युरसम्। प्रधानमित्यर्थः। अश्वानामुरः। आख्यायामिति किम्। देवदत्तस्योरः देवदत्तोरः।

## अनोऽश्मायस्सरसां जातिसंज्ञयोः।९४।

अनस्, अश्मन्, अयस्, सरस्, एतदन्तात् तत्पुरुषात् समासान्तष्टच् जातिसंज्ञयोर्गम्यमानयोः। उपानसम्, जातिः। महानसम्, संज्ञा। अमृताश्मः, जातिः। पिण्डाश्म, संज्ञा। कालायसं, जातिः। लोहितायसं, संज्ञा। मण्डूकसरसं, जातिः। जलसरसं, संज्ञा। जातिसंज्ञयोरिति किम्। सदनः।

## ग्रामकौटाभ्यां च तक्ष्णः।९५।

ग्रामकौटाभ्यां परो यस्तक्षन् शब्दस्तदन्तात्समासान्तष्टच । ग्रामस्य तक्षा ग्रामतक्षः । बहूनां साधारण इत्यर्थः । कुट्यां भवः कौटः, सचासौ तक्षा च, कौटतक्षः । स्वतन्त्र इत्यर्थः । ग्रामकौटाभ्यामिति किम् । राज्ञस्तक्षा ।

## अतेः शुनः । ९६ ।

अतिशब्दात्परो यः शुन्शब्दस्तदन्तात्तपुरुषात्समासान्तष्टच् । अतिश्वः कर्म्मकरः । स्वामिभक्त इत्यर्थः ।

## उपमानादप्राणिषु । ९७ ।

अप्राणिषूपमानवाची यः श्वन्शब्दस्तदन्तात्तत्पुरुषात्समासान्तष्टच् । आकर्षः श्वेव, आकर्षश्वः । 'उपमितं व्याघ्रादिभिः' इति समासः । उपमानादिति किम् । न श्वा अश्वा लोष्टः । अप्राणिष्विति किम् । वानरः श्वेव वा नरश्वा।

## उत्तरमृगपूर्वाच्च सक्थ्नः । ९८ ।

उत्तरमृगपूर्वाच्चादुपमानात्परो यः सक्थिन् शब्दस्तस्मात् समासान्तष्टच् । उत्तरसक्थम् । मृगसक्थम् । पूर्वसक्थम् । फलकमिव सक्थि, फलकसक्थम् ।

## नावो द्विगोः । ९९ ।

नौशब्दान्तात् द्विगोस्समासान्तष्टच् नतु तद्धितलुकि । द्वे नावौ समाहृते द्विनावम् । पञ्चनावप्रियः । द्विगोरिति किम् । राजानौ । अतद्धितलुकीत्येव । पञ्चभिर्नौभिः क्रीतः । पञ्चनौः ।

## अर्द्धाच्च । १०० ।

अर्द्धात्परो यो नौशब्दस्तदन्ताद्द्विगोः समासान्तष्टच् । अर्द्धनावः, अर्द्धनावम् ।

## खार्य्याः प्राचाम् । १०१

अर्द्धात्परो यः खारीशब्दस्तदन्ताद्द्विगोश्च समासान्तष्टच् प्राचां मते ।

अर्द्धं खार्याः। अर्द्धखारम्। अर्द्धखारी वा। द्वे खार्यौ समाहृते, द्विखारम्। द्विखारि।

## द्वित्रिभ्यामञ्जलेः। १०२।

द्वित्रिभ्यां परो योऽञ्जलिशब्दस्तदन्ताद्द्विगोः समासान्तष्टज्वा नतु तद्धितलुकि। द्वावञ्जली समाहृतौ। द्व्यञ्जलम्। द्व्यञ्जलि। द्विगोरित्येव। द्वयोरञ्जलिः द्व्यञ्जलिः।

## अनसन्तान्नपुंसकाच्छन्दसि। १०३।

अन्नन्तमसन्तञ्च यन्नपुंसकं तदन्तात्तत्पुरुषात्समासान्तष्टच् छन्दसि। हस्तिचर्मे जुहोति। मनुष्यच्छन्दसानि। (अनसन्तान्नपुंसकाद्वा) ब्रह्मसामम्। ब्रह्मसाम। देवच्छन्दः। देवच्छन्दसम्। अनसन्तादिति किम्। बिल्वदारु जुहोति।

## ब्रह्मणो जानपदाख्यायाम्। १०४।

ब्रह्मन्शब्दान्तात् तत्पुरुषात्समासान्तष्टज्जानपदाख्यायाम्। जनपदेषु भवो जानपदः। सुराष्ट्रे ब्रह्मा, सुराष्ट्रब्रह्मः। जानपदाख्यायामिति किम्। देव ब्रह्मा नारदः।

## कुमहद्भ्यामन्यतरस्याम्। १०५।

कुमहद्भ्यां परो यो ब्रह्मन् शब्दस्तदन्तात् तत्पुरुषात्समासान्तष्टज्वा। कुब्रह्मः। कुब्रह्मा। महाब्रह्मः। महाब्रह्मा। ब्राह्मणपर्यायोऽयम्।

## द्वन्द्वाच्चुदषहान्तात्समाहारे। १०६।

चवर्गान्ताद्दषहान्ताच्च द्वन्द्वात् समासान्तष्टच् समाहारे। वाक्त्वचम्। समिद्दृषदम्। वाग्विप्रुषम्। छत्रोपानहम्। द्वन्द्वादिति किम्। पञ्चवाचः समाहृताः। पञ्चवाक्। समाहार इति किम्। प्रावृट्शरदौ।

## अव्ययीभावे शरत्प्रभृतिभ्यः। १०७।

शरत्प्रभृतिभ्यः प्रातिपदिकेभ्यष्टच्, अव्ययीभावे। उपशरदम्। प्रति-

विपाशम् । अव्ययीभाव इति किम् । परम शरत् । प्रतिपरसमनुभ्योऽक्ष्णः प्रत्यक्षम् । परोक्षम् । समक्षम् । अन्वक्षम् ।

## अनश्च । १०८ ।

अन्नन्तादव्ययीभावात्समासान्तष्टच् । अध्यात्मम् । प्रत्यात्मम् ।

## नपुंसकादन्यतरस्याम् । १०९ ।

अन्नन्तं यन्नपुंसकं तदन्तादव्ययीभावात्समासान्तष्टज्वा । अधिसामम् । अधिसाम । प्रतिचर्मम् । प्रतिचर्म ।

## नदीपौर्णमास्याग्रहायणीभ्यः । ११० ।

नद्याद्यन्तादव्ययीभावात्समासान्तष्टज्वा । नद्याः समीपमुपनदम् । उपनदि वा । उपपौर्णमासम् । उपपौर्णमासि वा । उपाग्रहायणम् । उपाग्रहायणि वा ।

## झयः । १११ ।

झयन्तादव्ययीभावात्समासान्तष्टज्वा । उपसमिधम् । उपसमित् ।

## गिरेश्च सेनकस्य । ११२ ।

गिरिशब्दान्तादव्ययीभावात्समासान्तष्टज्वा सेनकस्य मते । गिरावित्यन्तर्गिरम् । अन्तर्गिरि वा ।

## बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् । ११३ ।

स्वाङ्गवाचिनौ यौ सक्थ्यक्षिशब्दौ तदन्ताद्बहुव्रीहेः षच् । दीर्घं सक्थि यस्य, दीर्घसक्थः । कल्याणाक्षः । बहुव्रीहाविति किम् । परमसक्थि । स्वाङ्गादिति किम् । दीर्घसक्थि शकटम् । स्थूलाक्षिरिक्षुः ।

## अङ्गुलेर्दारुणि । ११४ ।

अङ्गुल्यन्ताद्बहुव्रीहेः समासान्तष्टच् दारुणि गम्यमाने । द्व्यङ्गुलं काष्ठम् । त्र्यङ्गुलम् । दारुणीति किम् । पञ्चाङ्गुलिर्हस्तः ।

## द्वित्रिभ्यां ष मूर्ध्नः ।११५।

द्वित्रिभ्यां परो यो मूर्धन्शब्दस्तदन्ताद्बहुव्रीहेः समासान्तः षः। द्विमूर्धः। त्रिमूर्धः। द्वित्रिभ्यामिति किम्। उच्चैर्मूर्धा।

## अप्पूरणीप्रमाण्योः ।११६।

पूरण्यन्तात्प्रमाण्यन्ताच्च बहुव्रीहेः समासान्तोऽप्। कल्याणी पञ्चमी रात्रिरासांताः कल्याणो पञ्चमा रात्रयः। स्त्री प्रमाणी एषां ते स्त्रीप्रमाणाः कुटुम्बिनः। (अपि प्रधानपूरणीग्रहणं कर्तव्यम्) तेनेह न। कल्याणी पञ्चमी अस्मिन् सः कल्याणपञ्चमीकः पक्षः। (नेतुर्नक्षत्रे उपसंख्यानम्) पुष्यो नेता आसां ता पुष्यनेत्रा रात्रयः। (छन्दसि च) बृहस्पतिनेत्रा देवाः। (मासाद्भृतिप्रत्ययपूर्वपदाट्ठञ्विधिः) पञ्चकमासिकः (१) कर्मकरः। षाण्मासिकः।

## अन्तर्बहिर्भ्यां च लोम्नः ।११७।

अन्तर्बहिर्भ्यां परो यो लोमन्शब्दस्तदन्ताद्बहुव्रीहेः समासान्तोऽप्। अन्तर्गतानि लोमान्यस्य अन्तर्लोमः प्रावारः। बहिर्लोमः पटः।

## अच् नासिकायाः संज्ञायां नसं चास्थूलात्।११८।

नासिकान्ताद्बहुव्रीहेः समासान्तोऽच् नासिकाशब्दस्य नसादेशश्च स चेत्स्थूलात्परो न, संज्ञायाम्। द्रुरिव नासिका यस्य (पूर्वपदादिति णत्वम्) द्रुणसः। गोनसः। (खुरखराभ्यां नस्वक्तव्यः) खुरणाः। खरणाः। संज्ञायामिति किम्। तुङ्गनासिकः। अस्थूलादिति किम्। स्थूल नासिको वराहः।

## उपसर्गाच्च।११९।

उपसर्गात्परो यो नासिकाशब्दस्तदन्ताद्बहुव्रीहेरच् नासिकाशब्दस्य नसादेशः। उन्नसः। प्रणसः। उपसर्गाद्बहुलम्। इतिणत्वम्। (वेर्ग्रो वक्तव्यः) विगता नासिका यस्य सः विग्रः। (ख्यश्च वक्तव्यः)

---

१ पञ्चको मासोऽस्येति वि०। 'सोऽस्यांशवस्नभृतयः' इति संख्याया अतिशदन्तायाः कन्।

विद्यः ।

## सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः । १२० ।

एतेऽच्प्रत्ययान्ता निपात्यन्ते । शोभनं प्रातरस्य सुप्रातः । शोभनं श्वोऽस्य सुश्वः । शोभनं दिवाऽस्य सुदिवः । शारेरिव कुक्षिरस्य शारिकुक्षः । चतस्रोऽश्रयो यस्य चतुरश्रः । एण्या इव पादा अस्य एणीपदः । अजस्येव पादावस्य अजपदः । प्रोष्ठो गौ स्तस्येव पादावस्य प्रोष्ठपदः ।

## नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् । १२१

नञ्दुःसुभ्यः परौ यौ हलिसक्थिशब्दौ तदन्ताद्बहुव्रीहेः समासान्तोऽच्वा । अविद्यमाना हलिरस्य अहलः । दुर्हलः । सुहलः । अविद्यमानं सक्थ्यस्य असक्थः । दुःसक्थः । सुसक्थः । पक्षे-अहलिरित्यादि । हलिशक्त्योरिति केचित् । तन्मते अशक्त इत्यादि ।

## नित्यमसिच्प्रजामेधयोः । १२२ ।

नञ्दुःसुभ्यः परौ यौ प्रजामेधाशब्दौ तदन्ताद्बहुव्रीहेः समासान्तो नित्यमसिच् । अविद्यमाना प्रजाऽस्य अप्रजाः । दुष्प्रजाः । सुप्रजाः । अविद्यमाना मेधाऽस्य अमेधाः । दुर्मेधाः । सुमेधाः । पूर्वसूत्रेऽन्यतरस्यां ग्रहणं नैव स्वर्यते नेनात्र नित्यग्रहणमन्यत्रापि भवतीति सूचनार्थम् । तेन 'मन्दकस्याल्प मेधसः' इत्याद्यपि सूपपन्नम् ।

## बहुप्रजाश्छन्दसि । १२३ ।

बहुप्रजा इति निपात्यते छन्दसि विषये । बहुप्रजा निर्ऋतिमाविवेश । छन्दसीति किम् । बहुप्रजो ब्राह्मणः ।

## धर्म्मादनिच् केवलात् । १२४ ।

केवलात्परो यो धर्म्मशब्दस्तदन्ताद्बहुव्रीहेः समासान्तोऽनिच् । कल्याणो धर्मोऽस्य कल्याणधर्म्मा । केवलादिति किम् । परमः स्वोधर्मोऽस्य परमस्वधर्मः इत्यादौ त्रिपदे बहुव्रीहौ माभूत् । संदिग्धसाध्यधर्मेत्यादौ त

कर्मधारयपूर्वपदो बहुव्रीहिः।

## जम्भा सुहरिततृणसोमेभ्यः। १२५।

स्वादिभ्यः परः कृतसमासान्तो जम्भाशब्दो निपात्यते। शोभनो जम्भोऽस्य, । सुजम्भा। हरितजम्भेत्यादि। शोभनाभ्यवहार्य्यः शोभनदन्तो वा। सुहरित तृणसोमेभ्य इति किम्। पतितजम्भः।

## दक्षिणेर्मा लुब्धयोगे। १२६।

लुब्धयोगे दक्षिणेर्माकृतसमासान्तो निपात्यते। लुब्धो व्याधः। ईर्मं व्रणम्। दक्षिणे ईर्मं व्रणमस्य दक्षिणेर्म्मा मृगः। व्याधेन कृतव्रण इत्यर्थः। 'वाली हेमाब्जमाली गुणनिधिरिपुणा निर्मितो दक्षिणेर्मा' इत्यादि प्रयोगास्त्वौपचारिका इति कथं चिन्नेयाः।

## इच् कर्म्मव्यतिहारे। १२७।

कर्म्मव्यतिहारे यो बहुव्रीहिस्तस्मात् समासान्त इच्। केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि। कचाकचि। मुसलैश्च मुसलैश्च प्रहृत्य इदं युद्धं प्रवृत्तं मुसलामुसलि। तिष्ठद्गु प्रभृतिष्वयमिच् प्रत्ययः पठ्यते, तेनाव्ययोभावत्वादव्ययत्वम्।

## द्विदण्ड्यादिभ्यश्च। १२८।

द्विदण्ड्यादीनां सिद्ध्यर्थं समासान्त इच्। द्वौ दण्डौ यस्मिन् तद् द्विदण्डि, प्रहरणम्। द्विमुसलि, प्रहरणम्। उभयाहस्ति। उभाहस्ति। अत्र निपातना दयचः पाक्षिकत्वम्।

## प्रसंभ्यां जानुनोर्ज्ञुः। १२९।

प्रसंभ्यां परस्य जानुशब्दस्य ज्ञुरादेशो बहुव्रीहौ। प्रकृष्टे जानुनी अस्य प्रज्ञुः। संज्ञुः।

## ऊर्ध्वाद्विभाषा। १३०।

ऊर्ध्वात्परस्य जानुशब्दस्य ज्ञुरादेशो वा बहुव्रीहौ। ऊर्ध्वे जानुनी अस्य ऊर्ध्वज्ञुः। ऊर्ध्वजानुः।

## ऊधसोऽनङ् ।१३१।

ऊधश्शब्दान्तस्य बहुव्रीहेः समासान्तोऽनङ् आदेशः । कुण्डमिवोधोऽस्याः कुण्डोध्नी । ( ऊधसोऽनङि स्त्रीग्रहणं कर्तव्यम् ) तेनेह न । महोधाः पर्जन्यः ।

## धनुषश्च ।१३२।

धनुश्शब्दान्तस्य बहुव्रीहेः समासान्तोऽनङ् । गाण्डीवं धनुरस्य गाण्डीवधन्वा । शार्ङ्गं धनुरस्य शार्ङ्गधन्वा ।

## वा संज्ञायाम् ।१३३।

धनुश्शब्दान्तस्य बहुव्रीहेः समासान्तोऽनङ् वा संज्ञायाम् । शतधनुः । शतधन्वा ।

## जायाया निङ् ।१३४।

जायान्तस्य बहुव्रीहेः समासान्तो निङ् । जानकी जाया यस्य जानकीजानिः । युवतिर्जाया यस्य युवजानिः । 'लोपो व्योर्वलि' इति यकार लोपः ।

## गन्धस्येदुत्पूतिसुसुरभिभ्यः ।१३५।

उदादिभ्यः परस्य गन्धशब्दस्य समासान्त इदादेशो बहुव्रीहौ । उद्गतो गन्धोऽस्य उद्गन्धिः । पूतिगन्धिः । सुगन्धिः । सुरभिगन्धिः । ( गन्धस्येत्वे तदेकान्तग्रहणं(१) कर्तव्यम् ) सुगन्धि पुष्पं सलिलञ्च । नेह । शोभनो गन्धोऽस्य सुगन्ध आपणिकः । एतेभ्य इति किम् । तीव्रगन्धो वातः ।

## अल्पाख्यायाम् ।१३६।

अल्पाख्यायां गम्यमानायां यो गन्धशब्दस्तस्य समासान्त इदादेशो बहुव्रीहौ । सूपोऽल्पोऽस्मिन् सूपगन्धि भोजनम् । घृतगन्धि भोजनम् ।

## उपमानाच्च ।१३७।

१ एकान्त एकदेश इवाविभागेन लक्ष्यमाण इत्यर्थः ।

उपमानात्परो यो गन्धशब्दस्तस्य समासान्त इदादेशो बहुव्रीहौ । पद्मस्येव गन्धोऽस्य पद्मगन्धिः । उत्पलगन्धिः ।

## पादस्य लोपोऽहस्त्यादिभ्यः । १३८ ।

हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य समासान्तो लोपो बहुव्रीहौ । व्याघ्रस्येव पादावस्य व्याघ्रपात् । अहस्त्यादिभ्य इति किम् । हस्तिपादः । स्थानिद्वारेणायं समासान्तः ।

## कुम्भपदीषु च । १३९ ।

कुम्भपद्यादयश्शब्दाः कृतसमासान्तलोपा निपात्यन्ते । 'पादः पत्' कुम्भपदी । शतपदी । स्त्रियां किम् । कुम्भपादः ।

## संख्यासुपूर्वस्य । १४० ।

संख्यासुपूर्वस्य पादशब्दान्तस्य बहुव्रीहेः समासान्तो लोपः । द्वौ पादौ यस्य स द्विपात् । शोभनौपादौ यस्य स सुपाद् ।

## वयसि दन्तस्य दतृ । १४१ ।

संख्यासुपूर्वस्य दन्ताशब्दस्य दतृ आदेशो वयसि गम्यमाने बहुव्रीहौ । द्वौ दन्ता यस्य द्विदन् शोभना दन्ता अस्य, सुदन् । वयसीति किम् । द्विदन्तः कुञ्जरः ।

## छन्दसि च । १४२ ।

छन्दसि विषये दन्तस्य दतृ बहुव्रीहौ । उभयदत आलभते ।

## स्त्रियां संज्ञायाम् । १४३ ।

दन्तस्य दतृ स्त्रियामन्यपदार्थे संज्ञायां विषये । अयोदती । फालदती । संज्ञायां किम् । समदन्ती ।

## विभाषा श्यावारोकाभ्याम् । १४४ ।

श्यावारोकाभ्यां परस्य दन्तस्य दतृआदेश समासान्तो वा बहुव्रीहौ संज्ञायाम् । 'श्यावः स्यात् कपिशः' इत्यमरः । श्यावादन्ता अस्य श्यावदन् । श्यावदन्तः । अरोका अच्छिद्रा दन्ता अस्य अरोकदन् । अरोकदन्तः ।

## अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च । १४५ ।

अग्रान्तादिभ्यः परस्य दन्तस्य दतृ वा बहुव्रीहौ । कुड्मलाग्रदन् । कुड्मलाग्रदन्तः । शुद्धदन् । शुद्धदन्त इत्यादि ।

## ककुदस्यावस्थायां लोपः । १४६ ।

ककुदशब्दान्तस्य बहुव्रीहेः समासान्तो लोपोऽवस्थायां गम्यमानायाम् । असंजातं ककुदं यस्य असंजातककुद् । बाल इत्यर्थः । पूर्णककुद् । मध्यमवया इत्यर्थः ।

## त्रिककुत्पर्वते । १४७ ।

त्रिककुदिति निपात्यते पर्वतेऽभिधेये बहुव्रीहौ । त्रीणिककुदान्यस्य ।

## उद्विभ्यां काकुदस्य । १४८ ।

उद्विभ्यां परस्य काकुदशब्दस्य समासान्तो लोपो बहुव्रीहौ । उद्गतं काकुदं यस्य उत्काकुत् । विकाकुत् । काकुदं तालु ।

## पूर्णाद्विभाषा । १४९ ।

पूर्णात्परस्य काकुदशब्दस्य समासान्तो वा लोपः । पूर्णकाकुद् । पूर्णकाकुदः ।

## सुहृद्दुर्हृदौ मित्रामित्रयोः । १५० ।

सुहृद्दुर्हृदौ निपात्येते मित्रामित्रयोरभिधेययोः । शोभनं हृदयमस्य सुहृन्मित्रम् । दुष्टं हृदयमस्य दुर्हृदमित्रः । मित्रामित्रयोरिति किम् । सुहृदयः कारुणिकः । दुर्हृदय श्चौरः ।

## उरःप्रभृतिभ्यः कप् । १५१ ।

उरः प्रभृत्यन्ताद्बहुव्रीहेः समासान्तः कप् । व्यूढमुरो यस्य व्यूढोरस्कः । प्रियं सर्पिर्यस्य प्रियसर्पिष्कः । इह पुमान्, अनड्वान् पयः, नौः लक्ष्मीरित्येकवचनान्तानि पठ्यन्ते । द्विवचन बहुवचनान्तेभ्यस्तु 'शेषाद् विभाषा' इति विकल्पेन कप् । ( अर्थान्नञः ) अनर्थकम् । द्विपुमान् । द्विपुंस्कः ।

## इनः स्त्रियाम् । १५२ ।

इन्नन्ताद्बहुव्रीहेः समासान्तः कप् स्त्रियाम् । बहुदण्डिका शाला । बहुवाग्मिका शाला । स्त्रियामिति किम् । बहुदण्डीराजा । बहुदण्डिकः ।

## नद्यृतश्च । १५३ ।

नद्यन्तादृकारान्ताच्च बहुव्रीहेः समासान्तः कप् । बह्व्यो ब्रह्मबन्ध्वो यत्र स बहुब्रह्मबन्धूकः । बहवः कर्तारो यस्य स बहुकर्तृकः ।

## शेषाद्विभाषा । १५४ ।

अनुक्तसमासान्ताद्बहुव्रीहेः कब्वा । बह्व्यः खट्वा अस्य । बहुखट्वकः । बहुखट्वः । शेषादिति किम् । प्रियपथः ।

## न संज्ञायाम् । १५५ ।

संज्ञायां विषये बहुव्रीहौ समासे समासान्तः कप् न । विश्वे देवा अस्य विश्वदेवः ।

## ईयसश्च । १५६ ।

ईयसन्ताद्बहुव्रीहेः कब् न । बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी । बहवः श्रेयांसो यस्य बहुश्रेयान् ।

## वन्दिते भ्रातुः । १५७ ।

वन्दितेऽर्थे यो भ्रातृशब्दस्तदन्ताद्बहुव्रीहेः कप् न । शोभनो भ्राताऽस्य सुभ्राता । वन्दित इति किम् । मूर्खभ्रातृकः ।

## ऋतश्छन्दसि । १५८ ।

ऋकारान्ताद्बहुव्रीहेश्छन्दसि विषये कप् न । हतास्वसाऽस्याः सा हतस्वसा । सुहोता ।

## नाडीतन्त्र्योः स्वाङ्गे । १५९ ।

स्वाङ्गेऽर्थे यौ नाडीतन्त्रीशब्दौ तदन्ताद्बहुव्रीहेः कप् न । बह्व्यो

नाड्यो यस्य बहुनाडिः कायः। बहुतन्त्रीः ग्रीवा। धमनीवचनस्तन्त्री शब्दः। स्वाङ्ग इति किम्। बहुनाडीकः स्तम्भः। बहुतन्त्रीका वीणा।

## निष्प्रवाणिश्च । १६०।

निष्प्रवाणिरित्यत्र कप् निषेधो निपात्यते। प्रोयतेऽस्यामिति प्रवाणी। तन्तुवायशलाका। निर्गता प्रवाणी अस्य, निष्प्रवाणिः पटः। नव इत्यर्थः।

इति पञ्चमाध्यायस्य चतुर्थः पादः।

———:o:———

ओ३म्

# अथ षष्ठाध्यायस्य प्रथमः पादः

---:o:---

## एकाचो द्वे प्रथमस्य । १ ।

प्राक् सम्प्रसारणविधेरेकाचो, द्वे, प्रथमस्य इति त्रितयमधिक्रियते । जजागार । पपाच ।

## अजादेर्द्वितीयस्य । २ ।

अयमपि पूर्ववत् । अटिटिषति । अशिशिषति । अरिरिषति ।

## नन्द्राः संयोगादयः । ३ ।

आदिभूतादचः परे संयोगादयो नदरा द्विर्न । उन्दिदिषति । अड्डिडिषति । अर्चिचिषति । ( ईर्ष्यतेस्तृतीयस्य द्वे भवत इति वक्तव्यम् ) केचिदाहुः-तृतीयस्यैकाच इति । अपर आह व्यञ्जनस्येति । ईर्ष्यिषिषति । ईर्ष्यियिषति । ( कण्ड्वादीनाञ्च ) कण्डूयियिषति । ( वा नामधातूनां तृतीयस्य द्वे भवत इति वक्तव्यम् ) अश्वीयियिषति । अशिश्वीयिषति वा । अपर आह ( यथेष्टं नामधातूनाम् ) पुपुत्रीयिषति । पुतित्रीयिषति । पुत्रीयियिषति-इत्यादि ।

## पूर्वोऽभ्यासः । ४ ।

अस्मिन् द्वित्वप्रकरणे पूर्वोऽभ्याससंज्ञः । पपाच । पिपक्षति । पापच्यते ।

## उभे[१] अभ्यस्तम् । ५ ।

---

१ उभे इति किम् । नेनिजतीत्यत्राभ्यस्तानामादिरिति समुदाये यथा स्यात् ।

अस्मिन् द्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदितेऽभ्यस्तसंज्ञे। ददति। ददतु।

## जक्षित्यादयः षट् ।६।[1]

जक्षधातुस्तत्समीपवर्तिनः षडन्ये धातवश्चाभ्यस्तसंज्ञकाः। जक्षति। जाग्रति। दरिद्रति इत्यादि।

## तुजादीनां दीर्घोऽभ्यासस्य ।७।[2]

तुजसदृशानामभ्यासस्य दीर्घः। तूतुजानः। मामहानः।

## लिटि धातोरनभ्यासस्य ।८।

लिटि परेऽनभ्यासस्य धात्ववयवस्य प्रथमस्यैकाचो द्वे, आदिभूतादचः परस्य तु द्वितीयस्य। जगाद। ननाद। ऊर्णुनाव। (छन्दसि वा वचनम्) यो जागार तमृचः कामयन्ते। आदित्यान् याचिषामहे। जजागार। ययाचिषामहे। इति प्राप्ते। लिटीति किम्। कर्ता। हर्ता।

## सन्यङोः ।९।

सन्नन्तस्य यङन्तस्य चानभ्यासस्य धात्ववयवस्य प्रथमस्यैकाचो द्वे, आदिभूतादचः परस्य तु द्वितीयस्य। पिपक्षति। पापच्यते। वाव्रज्यते। अटाट्यते। अनभ्यासस्येत्येव। जुगुप्सिषते।

## श्लौ ।१०।

अनभ्यासस्य धात्ववयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः श्लौ। जुहोति।

## चङि ।११।

---

वाक्यपरिसमाप्तिन्यायात् प्रत्येकं माभूत्।

१ जक्ष् इति पृथक् पदम्। इतिरानन्तर्ये। आदिः समीपेर्थे। अतद्गुण संविज्ञानो बहुव्रीहिः।

२ अयं योगः शक्योऽवक्तुम। पूरुष इत्यादिस्थले इव 'अन्येषामपि' इत्यनेनैव दीर्घसिद्धेः।

पूर्ववत् चङि परे। अपीपचत्।(१) आटिटत्। पचादीनां ण्यन्तानां चङि कृते णिलोप उपधाह्रस्वत्वं द्विर्वचन मित्येषां कार्याणां प्रवृत्तिक्रमः।

## दाश्वान्साह्वान् मीढ्वांश्च। १२।

एते निपात्यन्ते (द्विर्वचन प्रकरणे कृञादीनां के उपसंख्यानम्) चक्रम्(२)। चिक्लिदम्। (कादिष्विति वक्तव्यम्) बभ्रुः। ययुः। (चरिचलिपतिवदीनामचि द्वे भवत आक् चाभ्यासस्य)। चराचरः(३)। चलाचलः। पतापतः। वदावदः। (हन्तेर्घश्च) घनाघनः। (पाटेर्णिलुक् च दीर्घश्चाभ्यासस्योक् च) पाटूपटः।

## ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे। १३।

ष्यङन्तस्य सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे(४)। कारीषगन्धीपुत्रः। कारीषगन्धीपतिः। ष्यङ इति किम्। इभ्यापुत्रः। पुत्रपत्योरिति किम्। कारीषगन्ध्याकुलम्।

## बन्धुनि बहुव्रीहौ। १४।

ष्यङः सम्प्रसारणं बन्धुन्युत्तरपदे बहुव्रीहौ। (कारीषगन्धीबन्धुः। (मातज्मातृकमातृषु(५) ष्यङः सम्प्रसारणं वा) कारीषगन्धीमातः। कारीषगन्ध्यामातः, इत्यादि। बहुव्रीहाविति किम्। कारीषगन्ध्याया बन्धुः, कारीषगन्ध्याबन्धुः।

---

१ ण्यन्तानां चङि कृते णिलोपः। उपधाह्रस्वत्वं द्विर्वचनम् इति कार्य्यप्रवृत्तिक्रमः। आटिटदित्यत्र स्थानिवद्भावाद् द्वित्वम्।

२ घञर्थे कविधानमिति करणे कः।

३ अभ्यासस्याक्चेति वचनाद्धलादिशेषाभावः। वेति वक्तव्यमिति वृत्तिः। तेन चरः। चल इत्याद्यपि।

४ करीषस्येव गन्धोऽस्येतिबहुव्रीहिः, उपमानाच्चेति इदादेशः। ततोऽपत्येऽर्थेऽण् तदन्तात्स्त्रियामणिञोरिति ष्यङ् ततश्चाप् षष्ठीसमासस्सम्प्रसारणस्येति दीर्घः। तत्पुरुषे किम्। कारीषगन्ध्या पतिरस्य ग्रामस्ये त्यादौ मा भूत्। स्त्रीप्रत्यये चानुपसर्जनेनेति परिभाषणात्परमकारीषगन्धीपुत्र इत्याद्यपि।

५ बहुव्रीहौ कृतेऽस्मादेवोपसंख्यानान्मातृशब्दस्य मातजादेशः।

## वचिस्वपियजादीनां किति । १५ ।

एषां सम्प्रसारणं किति । उक्तवान । सुप्तः । इष्टवान् । इज्यात् ।

## ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च । १६ ।

ग्रहादीनां सम्प्रसारणं ङिति किति च । गृह्णाति । गृह्यात् । जिनाति । जीयात् । ऊयतुः । ऊयुः । विध्यति । विध्यात् । उशितः । उश्यात् । विचति । विच्यात् । वृश्चति । वृश्च्यात् । पृच्छति । पृच्छ्यात् । भृज्जति । भृज्ज्यात् ।

## लिट्यभ्यासस्योभयेषाम् । १७ ।

वच्यादीनां ग्रहादीनां चाभ्यासस्य सम्प्रसारणं लिटि । उवाच(१) । सुष्वाप । इयाज । जग्राह ।

## स्वापेश्चङि । १८ ।

स्वापेः सम्प्रसारणं चङि । असूषुपत् । चङीति किम् । स्वाप्यते । स्वापितः ।

## स्वपिस्यमिव्येञां यङि । १९ ।

एषां सम्प्रसारणं यङि । सोषुप्यते । सेसिम्यते । वेवीयते । यङीति किम् । स्वप्नक् ।

## न वशः । २० ।

वशेः सम्प्रसारणं न यङि । वावश्यते । यङीति किम् । उष्टः । उशन्ति ।

## चायः की । २१ ।

---

१ किति तु परत्वात्सम्प्रसारणे पुनः प्रसङ्गविज्ञानाद् द्विर्वचनम् । ऊचतुः । अधिकारादेवोभयेषामितिलब्धे पुनर्वचनं, परमपि हलादिशेषं बाधित्वा यस्य संप्रसारणार्थम् । विवयाध ।

चाय. की यङि । चेकीयते । चेकीतः ।

## स्फायः स्फी निष्ठायाम् । २२ ।

स्फायः स्फी निष्ठायाम् । स्फीतः । स्फीतवान् । निष्ठायामिति किम् । स्फातिः ।

## स्त्यः प्रपूर्वस्य । २३ ।

प्रपूर्वस्य स्त्यायतेः सम्प्रसारणं निपात्यते । प्रस्तीतः(१) । प्रस्तीतवान् ।

## द्रवमूर्तिस्पर्शयोः श्यः । २४ ।

द्रवस्य काठिन्ये स्पर्शे च वर्तमानस्य श्यैङः सम्प्रसारणं निपात्यते । शीनं घृतम् । काठिन्यङ्गतमित्यर्थः । 'श्योऽस्पर्शे' इति नत्वम् । शीतमस्ति । शीतो वायुः । शीतमुदकम् । द्रवमूर्तिस्पर्शयोः किम् । संश्यानो वृश्चिकः ।

## प्रतेश्च । २५ ।

प्रतिपूर्वस्य श्यैङः सम्प्रसारणं निपात्यते । प्रतिशीनः । प्रतिशीनवान् ।

## विभाषाऽभ्यवपूर्वस्य । २६ ।

अभ्यवपूर्वस्य श्यैङो वा सम्प्रसारणं निपात्यते । अभिशीनं घृतम् । अवशीनं घृतम् । अभिश्यानम् । अवश्यानम् ।

## शृतं पाके । २७ ।

श्राश्रप्योः क्तप्रत्यये शृभावो निपात्यते पाकेऽभिधेये । ( क्षीरहविषोरिति वक्तव्यम् ) शृतं क्षीरं हविर्वा । नेह - श्राणा यवागूः । श्रपिता यवागूः । ( श्रपेः शृतमन्यत्र हेतोरिति वक्तव्यम् ) तेन श्रपितं क्षीरं देवदत्तेन यज्ञदत्तेनेह न ।

## प्यायः पी । २८ ।

---

१ प्रेति किम् । संस्त्यानः । प्रस्त्योन्यतरस्यामिति मत्वपक्षे प्रस्तीम इत्यादि रूपम् । प्रस्त्य इत्येव सिद्धे पूर्वग्रहणं प्रसंस्तीत इत्याद्यर्थम् ।

प्यायः पी, वा निपात्यते(१)। पीनं मुखम्। पीनौ बाहू। ( आङ्पूर्वादन्धूधसोः ) आपीनोऽन्धुः । आपीनमूधः । उभयत्र नियमः । आङ्पूर्वादेव अन्धूधसोः । अन्धूसोरेव आङ्पूर्वात् । नेह प्रप्यानोऽन्धुः। प्रप्यानमूधः ।

## लिड्यङोश्च । २९ ।

प्यायः पी लिड्यङोः । पिप्ये । पिप्याते । पेपीयते । पेपीयेते ।

## विभाषा श्वेः । ३० ।

लिड्यङोः परतः श्वयतेःसम्प्रसारणं वा । उभयत्रविभाषेयम्। शुशाव। शुशुवतुः । शिश्वाय । शिश्वियतुः । शोशूयते । शेश्वीयते ।

## णौ च संश्चङोः । ३१ ।

सन्परे चङ्परे च णौ श्वयतेः सम्प्रसारणं वा । शुशावयिषति(२)। शिश्वाययिषति । अशूशवत् । अशिश्वयत् ।

## ह्वः सम्प्रसारणम् । ३२ ।

सँश्चङ्परे णौ ह्वः सम्प्रसारणम् । जुहावयिषति । अजूहवत्।

## अभ्यस्तस्य च । ३३ ।

अभ्यस्तस्य ह्वयतेः सम्प्रसारणं स्यात् । जुहाव । जोहूयते जुहूषति ।

## बहुलं छन्दसि । ३४ ।

छन्दसि विषये ह्वयतेः सम्प्रसारणं स्यात् बहुलम् । इन्द्राग्नी हुवे। क्वचिन्न, ह्वयामि विश्वान् देवान् ।

## चायः की । ३५ ।

छन्दसि विषये चायः की बहुलम् । नान्यं चिक्युः । न भवति।

---

१ व्यवस्थितविभाषेयं, तेनानुपसर्गस्य नित्यं सोपसर्गस्य न, प्रप्यानः ।

२ वृद्ध्यादेः पूर्वं संप्रसारणं सम्प्रसारणं तदाश्रयं च कार्यं बलवदित्युक्तेः। तदा 'णावच आदेशो न द्वित्त्वे कार्ये' इति शुशब्दस्य द्वित्वम् ।

अग्निर्ज्योतिर्निचाय्यः ।

## अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताश्रितमाशीराशीर्ताः । ३६ ।

एते छन्दसि निपात्यन्ते ।

## न सम्प्रसारणे सम्प्रसारणम् । ३७ ।

सम्प्रसारणे परतः पूर्वस्य सम्प्रसारणं न । विचितः । सम्वीतः । ( ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि ) तिस्रऋचो यस्मिंस्तत्, तृचं सूक्तम् । ऋक् पूरब्धूरिति समासान्तः । ( रयेर्मतौ बहुलम् ) छन्दसीति किम् । त्र्यृचं कर्म । आरेवानेतु नोविशः न च भवति । रयिमान् पुष्टिवर्द्धनः ।

## लिटि वयो यः । ३८ ।

लिटि वयो यस्य सम्प्रसारणं न । उवाय । ऊयतुः । ऊयुः ।

## वश्चास्यान्यतरस्यां किति । ३९ ।

किति लिटि वयो यस्य वो वा । ऊवतुः । ऊवुः । ऊयतुः । ऊयुः ॥ कितीति किम् । उवाय ।

## वेञः । ४० ।

वेञो लिटि सम्प्रसारणं न । ववतुः । ववुः ।

## ल्यपि च । ४१ ।

वेञो ल्यपि सम्प्रसारणं न । निर्वाय । प्रवाय ।

## ज्यश्च । ४२ ।

जिनातेर्ल्यपि सम्प्रसारणं न । प्रज्याय । विज्याय ।

## व्यश्च । ४३ ।

व्येञो ल्यपि सम्प्रसारणं न । प्रव्याय ।

## विभाषा परेः । ४४ ।

परिपूर्वस्य व्येञः सम्प्रसारणं वा ल्यपि । परिवीय । परिव्याय ।

## आदेच उपदेशेऽशिति ।४५।

उपदेशे एजन्तस्य धातोरात्वं नतु शिति(१) । जग्लौ । ग्लाता । इत्यादि । एच इति किम् । कर्ता । उपदेश इति किम् । चेता । अशितीति किम् । ग्लायति ।

## न व्यो लिटि ।४६।

व्येञ आत्वन्न लिटि । विव्याय । विव्ययतुः । 'लिट्यभ्यासस्योभयेषाम्' इत्यभ्यासस्य सम्प्रसारणम् ।

## स्फुरतिस्फुलत्योर्घञि ।४७।

स्फुरतिस्फुलत्योरेच् आत्वं घञि । विस्फारः । विष्फारः । विस्फालः । 'स्फुरतिस्फुलत्यो र्निर्निविभ्यः' इति वा षत्वम् ।

## क्रीङ्जीनां णौ ।४८।

क्रीङ्जीनामेषामात्वं णौ । 'डुक्रीञ् द्रव्य विनिमये' क्रापयति । 'इङ् अध्ययने' अध्यापयति । 'जि जये' जापयति । आत्वेकृते 'अर्तिह्री' इत्यादिना पुक् ।

## सिद्धयतेरपारलौकिके ।४९।

अपारलौकिकविषयस्य सिद्ध्यतेरेच् आत्वं णौ । अन्नं साधयति । अन्यत्र सेधयति । तत्त्वं निश्चिन्वन्तं प्रेरयतीत्यर्थः ।

## मीनातिमिनोतिदीङां ल्यपि च ।५०।

मिञ् हिंसायाम्, डुमिञ् प्रक्षेपणे, दीङ् क्षये एषां ल्यपि चादशित्येज्विषये आत्वम्(२) । निर्माय । उपदाय । एज्विषये । उपमातुम् । प्रदात-

---

१ श इत्, शित् इति विग्रहः । 'यस्मिन् विधि' रितिपरिभाषया शिदादौ प्रत्यये नेत्यर्थस्तेन जग्ले इत्यादि सिध्यति ।

२ उपदेशेआत्त्वविधानादुपदायइत्यादाविवर्णान्तलक्षणः प्रत्ययो न ।

व्यम्। 'लीङ् श्लेषणे' इति दिवादिः, ली श्लेषणे, इति क्र्यादिस्तयो रुभयो रपियकानिर्देशः।

## विभाषा लीयतः।५१।[1]

लीयतेर्ल्यपि एचश्च विषये आत्वं वा। विलाय। विलीय। विलाता। विलेता। (निमिमीलियां खलचोः[2] प्रतिषेधो वक्तव्यः) ईषन्निमयः। सुनिमयः। ईषत्प्रमयः। सुप्रमयः। ईषद्विलयः। सुविलयः। विलयः।

## खिदेश्छन्दसि।५२।

छन्दसि विषये खिदेरेच आत्वं वा। चित्तं चिखाद। चिखेद वा। छन्दसीति किम्। चित्तं खेदयति।

## अपगुरो णमुलि।५३।

अपपूर्वस्य गुरतेरेच आत्वं वा णमुलि। 'गुरी उद्यमने' अपगारमपगारम्। अपगोरमपगोरम्। अस्यपगारम्। अस्यपगोरं वा युध्यते। 'आभीण्ये णमुल्च' इति णमुल्।

## चिस्फुरोर्णौ।५४।

चिनोतेस्फुरतेश्च च आत्वं वा णौ। चाययति। चापयति। स्फारयति। स्फोरयति।

## प्रजने वीयतेः।५५।

प्रजने वर्तमानस्य वीयतेरेच आत्वं वा णौ। 'वी' गतिप्रजनकान्त्यसनखादनेषु। पुरोवातो गाः प्रवापयति प्रवाययति वा।

## बिभेतेर्हेतुभये।५६।

---

१ दैवादिकक्रैयादिकयोरुभयोर्ग्रहणम् व्यवस्थितविभाषया। कस्त्वामुल्लापयते। इत्यादौनित्यमात्वम्।

२ पचाद्यच एरचश्च सामान्येन ग्रहणम्।

हेतुभयेऽर्थे (१) वर्तमानस्य बिभेतेरात्वं वा णौ। बालो बिभेति मुण्डो भापयते भीषयते वा

# नित्यं स्मयतेः ।५७।

हेतुभये(२) स्मयतेरेचोनित्यमात्वं णौ। जटिलो विस्मापयते। भय इति किम्। कुञ्चिकयैनं विस्मापयति।

# सृजिदृशोर्झल्यमकिति ।५८।

सृजिदृशोरम् झलादावकिति। अस्राक्षीत्। अद्राक्षीत्। स्रष्टुम्। द्रष्टुम्। झलीति किम्। सर्जनम्। दर्शनम्। अकितीति किम्। सृष्टः। दृष्टः। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानादिह न भवति। रज्जुसृड्भ्याम्। देवदृग्भ्याम्।

# अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ।५९।

उपदेशेऽनुदात्तस्य ऋदुपधस्य धातोरम् वा झलादावकिति। त्रप्ता(३) तर्प्ता। तर्पिता। अनुदात्तस्येति किम्। वर्ढा। 'वृहू उद्यमने' इत्यस्य रूपम्। ऊदित्वा दिड विकल्पः। ऋदुपधस्येति किम्। भेत्ता। झलीत्येव। तर्पण अकितीत्येव। तृप्तः।

# शीर्षश्छन्दसि ।६०।

शिरःशब्दसमानार्थकः शीर्षन्निति निपात्यते। शीर्ष्णाहि तत्र। छन्दसीति किम्। शिरः।

# ये च तद्धिते ॥६१॥

यादौ तद्धिते, शिरःशब्दस्य(४) शीर्षन्नादेशः। शिरसि भवः शीर्षण्यः।

१ कर्तुःप्रयोजकोऽत्र हेतुः। उदाहरणे 'भीस्म्योः' रित्यात्मनेपदम्। एकदेशविकृतन्यायेन प्राप्तो 'भियोहेतुभये' इति षुक्, पूर्वत्र 'लीलोनु गि' ति लुक् च न भवति उभयत्र कारप्रश्लेषात्। हेतुभय इति किम्। कुञ्चिकयैनं भाययति।

२ भयमत्र स्मयः।

३ रधादिभ्यश्चेतीड्विकल्पः।

४ शब्दतोऽर्थतश्चान्तरतमा शिरः शब्दरूपा प्रकृतिरेवाऽऽक्षिप्यते। एवमुत्तरत्रापि

'शरीरावयवाद्यत् । इति यत् । 'येचाभावकर्मणोः । इति प्रकृतिभावः । तद्धित इति किम् । शिर इच्छति शिरस्यति । मुख्यो भवति । ( वा केशेषु ) शीर्षण्यः । शिरस्यो वा केशः । ( अचिशीर्षः ) हस्तिशिरसोऽपत्यं हास्ति-शीर्षिः । पैलुशीर्षिः । ( छन्दसि च ) द्वे शीर्षे ।

## पद्दन्नोमासहृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु । ६२ ।

पाद, दन्त, नासिका, मास, हृदय, निशा, असृज्, यूष, दोष, यकृत, शकृत, उदक, आस्य, एषां यथा संख्यं पद्, दत्, नस्, मास्, हृत्, निश, असन्, यूषन्, दोषन्। यकन्, शकन्। उदन्, आसन् एते आदेशाः स्युश्शस् प्रभृतिषु विभक्तिषु परतः छन्दसि । पदः । पदाः दतः । दता । नसः । नसा । मासः । मासा । हृदः । हृदा । निशः । निशा । अस्नः । अस्ना । यूष्णः । यूष्णा । दोष्णः । दोष्णा । यक्नः । यक्ना । शक्नः । शक्ना । उद्नः । उद्ना । आस्नः । आस्ना इत्यादि । आदेशानुगुणाः पादादयः प्रकृतय आक्षिप्यन्ते । शसप्रभृतिष्वित्युच्यते । अशसप्रभृतिष्वपि दृश्यते । ककुद्दोषणी याचते । भाषायामपि भवति। 'पद्भ्यामुद्वर्तितस्य च' इत्यादि । ( पदादिषु मांस्पृत्स्नूनामुपसंख्यानम् ) यन्नीक्षणं मांस्पचन्याः । मांस(२) पचन्या इति प्राप्ते । पृत्सु मर्त्यम् । पृतनास्विति प्राप्ते । न ते दिवो न पृथिव्याऽधिस्नुषु । अधिसानुषु इति प्राप्ते । ( नस्नासिकाया यत्तस्क्षुद्रेषु ) नस्यम् । नस्तः (३) । नःक्षुद्रः ( अवर्ण नगरयोरिति वक्तव्यम् ) तेनेह न । नासिक्यो वर्णः । नासिक्यं नगरम् । हितार्थे यत् ।

## धात्वादेः षः सः । ६३ ।

धात्वादेः षस्य सः । स्तोता । सहते । सेक्, सृप्, स्तृ, सृज्, स्त,

---

१ छन्दस्येवेदं, पदङ्घ्रिश्चरणोऽस्त्रियामित्यादौ पदादयस्तु प्रकृत्यन्तराणि । प्रभृति शब्दः प्रकारार्थः ।

२ ङसोलुकालुप्तत्वेन प्रत्ययलक्षणाभावान्नादेशः प्राप्तः । शब्दत्वेन सादृश्यं ग्राह्यमितिकेचित् । वस्तुतस्तु सुप्त्वेन सादृश्यं नलुमतेत्यस्यानित्यत्वमित्याद्यन्यत्र विस्तरः ।

३ शरीरावयवाद्यत्, अपादानेचे' ति तसिः, तृतीयासमासश्चेति यथाक्रमं बोध्यम् ।

स्त्यान्ये दन्त्याजन्तसादयः । एकाचः षोपदेशाः ष्वस्क्, स्विद्, स्वद्, स्वञ्ज, स्वप, स्मिङः । दन्त्यः केवलदन्त्यो न तु दन्त्योष्ठजोऽपि ष्वष्कादीनां पृथग्ग्रहणाद् ज्ञापकात् । दन्त्यश्च अच्च, दन्त्याचौ तौ अन्तौ अव्यवहितपरौ यस्य स दन्त्याजन्तः, दन्त्याजन्तश्चासौ सश्च दन्त्याजन्तसः, स आदिर्येषां धातूनां ते दन्त्याजन्तसादयोऽजन्तसादयश्च एकाचः षोपदेशा बोध्याः । ( सादेशे सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्यः ) षण्डीयति । ष्ठीवति । ष्वष्कते । आदेरिति किम् । कृषति । धातुग्रहणं किम् । षोडश ।

## णो नः । ६४ ।

धात्वादेर्णस्य नः । नमति । सर्वे णादयो णोपदेशाः । नृति, नन्दि, नर्दि, नक्क, नाटि, नाथृ, नाधृ, नॄ, वर्जम् । धात्वादे रित्येव । अणति ।

## लोपो व्योर्वलि । ६५ ।

व्योर्लोपो वलि । दिदिवान् । दिवेः क्वसुः । क्नूतम् ऊतम् । वलीति किम् । ऊय्यते । 'ऊयी तन्तुसन्ताने' इत्यस्य यकि रूपम् ।

## वेरपृक्तस्य । ६६ ।

अपृक्तस्य वस्य लोपः । घृतस्पृग् । स्पृशोऽनुदके क्विन्' इति क्विन् । ब्रह्महा । भ्रूणहा । ब्रह्मभ्रूणवृत्रेषु क्विप्, इति क्विप् । अपृक्तस्येति किम् । दृहभ्यां क्विन् । दर्विः ।

## हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् । ६७ ।

हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल्लुप्यते । राजा(१) । खट्वा । कुमारी । अलेट् । अबिभेः हल्ङ्याब्भ्य इति किम् । ग्रामणीः । दीर्घादिति किम् । निष्कौशाम्बिः । अपृक्तमिति किम् । भिनत्ति । सुतिसीति किम् । अभैत्सीत् ।

## एङ्ह्रस्वात्संबुद्धेः । ६८ ।

एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत् । हे अग्ने । हे वायो ।

---

१ संयोगान्तलोपेन तु न सिध्यति, तस्या सिद्धत्वेन नलोपाप्रसक्तेः ।

हे देवदत्त(१) ।

## शेश्छन्दसि बहुलम् । ६९ ।

छन्दसि शेर्बहुलं लोपः(२) । या क्षेत्रा । यानि क्षेत्राणीति प्राप्ते ।

## ह्रस्वस्य पिति कृति तुक् । ७० ।

ह्रस्वस्य तुक् पिति कृति । अग्निचित् । प्रकृत्य । ह्रस्वस्येति किम् । आलूय । पितीति किम् । कृतम् । कृतीति किम् । पटुतरः ।

## संहितायाम् । ७१ ।

अधिकारोऽयम् । अनुदात्तं पदमेकवर्जमिति यावत् । वक्ष्यति 'इकोयणचि' दध्यत्र । संहितायामिति किम् । दधि अत्र ।

## छे च । ७२ ।

ह्रस्वस्य तुक् छे परे संहितायां विषये । इच्छति । गच्छति । चिच्छेद ।

## आङ्माङोश्च । ७३ ।

आङ् माङो स्तुक् छे परे संहितायाम् । आच्छादयति । मा च्छिदत् । ङिद्विशिष्टग्रहणं किम् । आछाया । आच्छाया । प्रमाछन्द । प्रमाच्छन्दः ।

## दीर्घात् । ७४ ।

दीर्घस्य तुक् छे परे संहितायाम् । ह्रीच्छति । दीर्घस्यैवायं तुक्, न तु ह्रस्य ।

## पदान्ताद्वा । ७५ ।

पदान्तस्य दीर्घस्य तुग्वा छे परे संहितायाम् । कुटीच्छाया । कुटीछाया ( विश्वजनादीनां छन्दस्युपसंख्यानम् ) विश्वजनच्छत्रम् विश्वजनछत्रम् ।

---

१ हे कुण्डेत्यप्युदाहरणम् । हे कतरदित्यत्र तु ह्रस्वान्तत्वाभावान्न लोपः । परत्वान्नित्यत्वाच्च सम्बुद्धिगुणे कृतेऽह्रस्वान्तत्वान्न भवेदत एङ्ग्रहणम् ।

२ डादेशादिना सिद्धत्वादयं वक्तुमशक्यः ।

## इको यणचि ७६ ।

इकः स्थाने यणचि संहितायाम् । गौर्य्यौ । मध्वत्र । पित्रोः । ल
बन्धः ।

## एचोऽयवायावः । ७७ ।

एचः अय्, अव्, आय्, आव्, एतेऽचि संहितायाम् । जयनम्
लवनम् । चायकः । लावकः ।

## वान्तोयि प्रत्यये । ७८ ।

एचो वान्तादेशो यादौ प्रत्यये संहितायाम् । ( ओकारौकारयोरिति
क्तव्यम् ) शङ्कव्यम् । नाव्यम् । वान्त इति किम् । रायमिच्छति रैयति
यीति किम् । गोभ्याम् । प्रत्यय इति किम् । गोयानम् । ( गोयूतौ छन्द
स्युपसंख्यानम् ) अनो मित्रावरुणा घृतैर्गव्यूतिमुक्षितम् । ( अध्वपरिमाणे
च ) गव्यूति मध्वानं गतः । क्रोशयुग्मं गव्यूतिः । अन्यत्र गोयूतिः ।

## धातोस्तन्निमित्तस्यैव । ७९ ।

धातोरेचश्चेद्वान्तादेशस्तर्हि यकारादिप्रत्ययनिमित्तस्यैव । लव्यम्(१)
अवश्यलाव्यम् । तन्निमित्तस्येति किम् । अतन्निमित्तस्य मा भूत् । ओयते
औयत ।

## क्षय्यजय्यौ शक्यार्थे । ८० ।

यति क्षिज्योरेचोऽय निपात्यते शक्यार्थे गम्यमाने । क्षेतुं शक्यः
क्षय्यः । जय्यः । शक्यार्थ इति किम् । क्षेय पापम् । जेयो वृषलः ।

## क्रय्यस्तदर्थे । ८१ ।

यति क्रीणातेरेचोऽय् निपात्यते, क्रयाय यत् तस्मिन् गम्ये । क्रयार्थ
प्रसारितः क्रय्यः कम्बलः । क्रेयमन्यत्, क्रयणार्हमित्यर्थः । तदर्थ इति किम्
क्रेयन्ते धान्यम् । न चास्ति क्रय्यम् ।

---

१ अचोयदिति यत् । 'ओरावश्यके' इति ण्यत् । मयूरव्यंसकादित्वात्समासः, "लुम्पेद
वश्यमः कृत्ये" इति मलोपः । व्यर्थमिदमिति तु न शङ्क्यम् । ओयते । औयतेति
सिद्ध्यर्थमावश्यकत्वात् ।

## भय्यप्रवय्ये च च्छन्दसि ।८२।

बिभेतेः प्रपूर्वस्य वयतेश्चैवोऽय् यति छन्दसि विषये । भय्यं किलासीत्(१) । वत्सतरी प्रवय्या ( भय्यादिप्रकरणे हृदय्या उपसंख्यानं कर्तव्यम् ) हृदय्या(२) आपः ।

## एकः पूर्वपरयोः ।८३।

“ख्यत्यात्परस्य” इत्यतः प्राक् एकः पूर्वपरयोरित्यधिक्रियते । वक्ष्यति ‘आद् गुणः’ खट्वेन्द्रः । मालेन्द्रः । पूर्व परग्रहणं द्वयोरपि युगपदादेशप्रतिपत्त्यर्थम् ।

## अन्तादिवच्च ।८४।

एक इति वर्तते, पूर्वपरयोरिति च । एकः पूर्वपरयो रिति योऽयमेकादेशो विधीयते स पूर्वस्यान्तवद् भवति, परस्यादिवद्(१) भवति । यथा तस्यान्त आदि र्वा तदन्तभूत स्तद् ग्रहणेन गृह्यते तद्वदेकदेशोऽपि तद् ग्रहणेन गृह्यत इत्येषोऽतिदेशार्थः । उदाहरणम्—ब्रह्मबन्धूः । ब्रह्मबन्धूरित्यत्र ब्रह्मबन्धु इति प्रातिपदिकम्, ऊङित्यप्रातिपदिकम्, तयोः प्रातिपदिकाप्रातिपदिक यो र्य एकादेशः स प्रातिपदिकस्यान्तवद् भवति । यथा शक्यते कर्तुं ‘ङ्याप् प्रातिपदिकात्’ इति स्वादिविधिः । उदाहरणम्—वृक्षौ । वृक्षावित्यत्र सुबौकारः, असुबकारः, तयोः सुबसुपोरेकादेशः सुप आदिवद् भवति । यथा शक्यते वक्तुं सुबन्तं पदमिति ।

## षत्वतुकोरसिद्धः ।८५।

षत्वतुकोः कर्तव्ययोरेकादेशोऽसिद्धः । कोऽस्य । योऽस्य । अधीत्य । प्रेत्य । ( सम्प्रसारणङीट्सु सिद्धः ) ब्रह्महूषु । वृक्षेच्छत्रम् । वृक्षेछत्रम् । अपचे छत्रम् । अपचेच्छत्रम् ।

## आद् गुणः ।८६।

---

१ बाहुलकादपादाने यत् ।
२ हृदय्याइत्यत्र हृदे भवा इति विग्रहः । अकारस्यायादेशः ।
३ वर्णाश्रये नायं प्रवर्तते, तेन खट्वाभिरित्यादौ भिस ऐसादिकं न ।

अवर्णादचि पूर्वपरयोर्गुणादेशः । परमेशः । गङ्गोदकम् । ब्रह्मर्षिः । तवल्कारः ।

## वृद्धिरेचि । ८७ ।

अवर्णादेचि पूर्वपरयो र्वृद्धिरेकादेशः । गुणापवादः । खट्वैडका । ब्रह्मैतिकायनः । स्रुपौदनः । ब्रह्मौपगवः ।

## एत्येधत्यूठ्सु । ८८ ।

अवर्णादिजाद्योरेत्येधत्योरूठि च परे पूर्वपरयो र्वृद्धिरेकादेशः । पररूपगुणापवादः । उपैति । उपैधते । प्रष्ठौहः ( अक्षादूहिन्याम् ) अक्षौहिणी ( प्रादूहोढोढ्येषैष्येषु ) प्रौहः । प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः । ( स्वादीरेरिणोः ) स्वैरम्(१) । स्वैरी । ( ऋते च तृतीयासमासे ) सुखेन ऋतः सुखार्तः । दुःखार्तः । तृतीयेति किम् ? परमर्तः । समास इति किम् । सुखेनर्तः । ( प्रवत्सतरकम्बलवसनार्णदशानामृणे ) प्रार्णमित्यादि ।

## आटश्च[२] । ८९ ।

आटोऽचि पूर्वपरयो र्वृद्धिरेकादेशः स्यात् । ऐधत । ऐक्षिष्ट ।

## उपसर्गादृति धातौ[३] । ९० ।

उपसर्गावयवादवर्णाद्धात्ववयवे ऋकारे पूर्वपरयोर्वृद्धिरेकादेशः । गुणापवादः । प्रार्च्छति(४) । उपार्ध्नोति ।

---

१ ईरन्ग्रहणं शक्यमकर्तुम् कथं स्वैरीति । इनिनैतन्मत्वर्थीयेन सिद्धमिति भाष्यं स्पष्टम् ।

२ उस्योमाङ्ोश्च पररूपबाधनार्थश्चकारस्तेन, औस्रीयत् । ओङ्कारीयत् । आ ऊढा ओढा । तामैच्छत् । औढीयत् ।

३ उपसर्गादितिकिम् प्रगता ऋच्छका अस्माद्देशात्प्रर्च्छको देशः इत्यत्र वृद्धिर्मा भूत् । यत्क्रियायुक्ताः प्रादयस्तंप्रति गत्युपसर्गसंज्ञका इति । उपसर्गग्रहणादेव धातोराक्षेपाद्धातुग्रहणे सिद्धे पुनर्धातुग्रहणं पुनर्वृद्धिविधानार्थन्तेन "ऋत्यकः" इति शाकलनिवृत्तिः ।

४ आपिशलिग्रहणं पूजार्थं, तपरत्वाद्दीर्घे न । उपॠकारीयति । उपर्कारीयति ।

## वा सुप्यापिशलेः । ९१ ।

उपसर्गावयवादवर्णात्सुब्धात्ववयवे ऋकारे परे वा वृद्धिः । उपार्षभीयति । उपर्षभीयति । ऋकारऌकारयोः सावर्ण्यात् । उपाऌकारीयति । उपल्कारीयति ।

## ओतोऽम् शसोः[1] । ९२ ।

ओतोऽम्शसोरचि पूर्वपरयोः आ, एकादेशः । गां पश्य । गाः पश्य । द्यां, पश्य । द्याः पश्य ।

## एङि पररूपम् । ९३ ।

अवर्णान्तादुपसर्गादेङादौ धातौ परे पूर्वपरयोः पररूपमेकादेशः । वृद्धिरेचीत्यस्याऽपवादः । उपेलयति । प्रेलयति । उपोषति । प्रोषति । (एवे चानियोगे) क्वेव । अनियोगेकिम् । इहैव । नियोगो नियमः (शकन्ध्वादिषु पररूपं वक्तव्यम्) शकन्धुः । कर्कन्धुः । कुलटा । सीमन्तः केशेषु । सीमान्तोऽन्यः (ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम्) स्थूलोतुः । स्थूलौतुः । बिम्बोष्ठी । बिम्बौष्ठी । (एमन्नादिषु छन्दसि पररूपं वक्तव्यम्) अपां त्वेमन्सादयाम्यपां त्वोद्मन्सादयामि ।

## ओमाङोश्च । ९४ ।

अवर्णादोमाङोः पूर्वपरयोः पररूपमेकादेशः । अद्योम् । आ ऊढा ओढा, अद्योढा ।

## उस्यपदान्तात् । ९५ ।

अपदान्तादवर्णादुसि पूर्वपरयोः पररूपमेकादेशः । अयुः । अदुः । अपदान्तात् किम् का उस्रा । कोस्रा । का उषिता, कोषिता । आदित्येव । चक्रुः ।

## अतो गुणे । ९६ ।

१ अमितिद्वितीयैकवचनमेव । सुपीत्यधिकारात् । तेनाचिनवमित्यत्र न ।

अपदान्तात् अतो गुणे परतः पूर्वपरयोः पररूपमेकादेशः। पचन्ति। यजन्ति। पचे। यजे। अत इति किम्। यान्ति। गुण इति किम्। अपदान्तात् किम्। दण्डाग्रम्।

## अव्यक्तानुकरणस्यात इतौ ।९७।

अव्यक्ताऽनुकरणस्य योऽच्छब्दस्तत इतौ पूर्वपरयोः पररूपमेकादेशः। पटत् इति पटिति। ( इतावनेकाज्ग्रहणं श्रदर्थं कर्तव्यम् ) तेनेह न, श्रदिति। अव्यक्तानुकरणेति किम्। जगत् इति जगदिति। अत इति किम्। गरः इति गरडिति इताविति किम्। पटत् अत्र, पटदत्र।

## नाम्रेडितस्यान्त्यस्य तु वा ।९८।

आम्रेडितस्याव्यक्ताऽनुकरणस्य योऽच्छब्दस्तत इतौ पूर्वपरयोः न पररूपं तकारमात्रस्य तु वा। पटत् पटदिति। पटत् पटेति। ( नित्यमाम्रेडिते डाचि पररूपं कर्तव्यम् ) पटपटायति (१)।

## अकः सवर्णे दीर्घः ।९९।

अकः सवर्णेऽचि पूर्वपरयो दीर्घ एकादेशः। दण्डाग्रम्। कपीशः। भानूदयः। होतॄष्टिः। ( ऋति ऋ वा(२) वचनम् ) होतृ ऋकारः। होतॄकारः। होतृकारः ( लृति लृ वा वचनम् ) होतृलृकारः। होतॢकारः। होतृकारः। अक इति किम्। अग्नये। सवर्ण इति किम्। दध्यत्र।

## प्रथमयोः पूर्वसवर्णः ।१००।

अकः प्रथमाद्वितीययोरचि पूर्वपरयोः पूर्वसवर्णदीर्घ एकादेशः। अग्नीन्। वृक्षान। अचीत्येव-वृक्षः। अक इत्येव। नावौ। दीर्घ ग्रहणं किम्। त्रिमात्रे स्थानिनि त्रिमात्रादेश निवृत्त्यर्थम्।

## तस्माच्छसो नः पुंसि ।१०१।

---

१ 'अव्यक्तानुकरणा'द' ति डाचि, डाचिबहुलमिति द्वित्वम्। पूर्वत्रापि बहुलवचनाद् द्वित्वम्। अव्यक्तशब्दार्थो ध्वनिस्तदनुकरणं परिस्फुटाकारादि वर्णरूपम्।

२ अत्र विधेयं वर्णद्वयं द्विमात्रं विलक्षणमेव। पक्षे-'ऋत्यकः' इति प्रकृतिभावोऽपि।

पूर्वसवर्णदीर्घाच्छसो नः पुंसि। वृक्षान्।

## नादिचि।१०२।

अवर्णादिचि न पूर्वसवर्णदीर्घः। पुरुषौ। माले। कुण्डे।

## दीर्घाज्जसि च।१०३।

दीर्घाज्जसि इचि च न पूर्वसवर्णदीर्घः। गौर्य्यौ। गौर्य्यः।

## वा छन्दसि।१०४।

दीर्घाज्जसि छन्दसि विषये वा पूर्वसवर्णदीर्घः। मारुतीश्चतस्रः। मारुत्यश्चतस्रः।

## अमि पूर्वः।१०५।

अकोऽम्यचि पूर्वपरयोः पूर्वरूप एकादेशः। देवम्। अमिति पूर्वग्रहणं किम्। पूर्व एवयथा स्यात्। पूर्व सवर्णोऽन्तरतमो मा भूदिति। कुमारीमित्यत्र हि त्रिमात्रः स्यात् (वा छन्दसीत्येव) शर्मी च। शर्म्यं च।

## सम्प्रसारणाच्च।१०६।

सम्प्रसारणादचि पूर्वपरयोः पूर्वरूप एकादेशः। उक्तम्। इष्टम्। वा छन्दसीत्येव। मित्रावरुणौ यज्यमानः। इज्यमानो वा (सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणं कर्तव्यम्) तेनेह न। शकृदर्थम्। परिव्यर्थम्।

## एङः पदान्तादति।१०७।

पदान्तादेङोऽति पूर्वपरयोः पूर्वरूप एकादेशः। अग्नेऽत्र। वायोऽत्र। एङ इति किम्। वायो इति। दध्यत्र। पदान्तादिति किम्। चयनम्।

## ङसिङसोश्च।१०८।

एङो ङसिङसोरति पूर्वपरयोः पूर्वरूप एकादेशः। अग्नेः। वायोः।

## ऋतउत्।१०९।

ऋतो ङसिङसोः पूर्वपरयोरुदादेशः। होतुरागच्छति(१)।

१ द्वयोः षष्ठीनिर्दिष्टयोः स्थाने यः, स लभतेऽन्यतरतो व्यपदेशमिति रपरत्वं, रात्सस्येति लोपः।

## ख्यत्यात्परस्य । ११० ।

कृतयणादेशाभ्यां खिति शब्दाभ्यां खीती शब्दाभ्यांच(१) ङसिङसो: अत उदादेश: । सख्युरागच्छति । सख्युः स्वम् । एवं पत्युः ।

## अतो रोरप्लुतादप्लुते । १११ ।

अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । मनोऽर्थय । शिवोऽर्च्यः । अत इति किम् । अग्निरत्र । तपरकरणं किम् । वृक्षा अत्र । अतीत्येत्र । वृक्ष इह । अप्लुतादिति किम् । सुस्रोता ३ अत्रन्वसि । अप्लुत इति किम् । तिष्ठतु पय आ ३ श्विन् ।

## हशि च । ११२ ।

अप्लुतादतः परस्य रोरुः स्याद् हशि । पुरुषो हसति ।

## प्रकृत्यान्तः पादमव्यपरे । ११३ ।

अव्यपरेऽति अन्तः(२) पादमेङ् प्रकृत्या स्यात् । ते अग्ने अश्वमा युञ्जन् ते अस्मिन् जवमादधुः ।

## अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च । ११४ ।

अव्यादादिषु परतोऽन्तः । अग्निःप्रथमो वसुभिर्नो अव्यात् । मित्रमहो अवद्यात् । मा शिवासो अवक्रमुः । तेनो अव्रताः । शतधारो अयं मणिः तेनो अवन्तु पितरः । कुशिकासो अवस्यवः ।

## यजुष्युरः । ११५ ।

---

१ सूत्रे, पञ्चमीनिर्देशादेव परत्वे लब्धेऽपि परस्येति ग्रहणम् 'एकः पूर्वपरयोरिति' निवृत्तमिति ध्वननार्थम् । कृतयणोः खिखीशब्दयोस्तितीशब्दयोरनुकरणं, समाहारद्वन्द्वः । दीर्घयोरुदाहरणं-सखीयतीति सखीः । सुतीयतीति सुतीः । 'ङसिङसोः' सुख्युः सुत्युरित्यादि ।

२ तौ तन्निमित्तकार्यिणौ प्रकृत्या पादमध्ये भवत इत्यर्थः । भाष्ये तु नान्तः पादमित्येव सूत्रम्' अयवोश्च प्रतिषेध' इति वार्तिकं चोपलभ्यते । संहितायां यदुक्तं तन्नेत्यर्थः ।

एङन्त उरःशब्दोऽति प्रकृत्या स्याद्यजुषि । उरो अन्तरिक्षम् । अनन्तः पादार्थं वचनम् ।

## आपोजुषाणोवृष्णोवर्षिष्ठेऽम्बेऽम्बालेऽम्बिके पूर्वे । ११६ ।

आपो इत्यादय एङन्ताअम्बिके पूर्वे, अम्बे अम्बाले चाति प्रकृत्या यजुषि । आपो अस्मान्मातरः शुन्धयन्तु । जुषाणो अग्निर्वेतु स्वाहा । वृष्णो अंशुभ्यां गभस्तिभिः । वर्षिष्ठे अधिनाके । अम्बे अम्बाले अम्बिके । ईदृश एव पाठो यजुषि । अस्मादेव निपातनाद्ध्रस्वाभाव. सम्बुद्धौ ।

## अङ्ग इत्यादौ च । ११७ ।

अङ्ग य एङ् तदादौ चाकारे य एङ् स प्रकृत्या यजुषि । ऐन्द्रः अङ्गे अङ्गे अदीध्यत् ।

## अनुदात्ते च कुधपरे । ११८ ।

कवर्गधकारपरेऽनुदात्तेऽति एङ् प्रकृत्या यजुषि । अयं सो अग्निः । अयं सो अध्वरः । अनुदात्ते किम् ? अधोग्रे । अग्रशब्द आद्युदात्तो निपातनात् ।

## अवपथासि च । ११९ ।

अनुदात्तेऽकारादौ अवपथाश्शब्दे परत एङ् प्रकृत्या यजुषि । त्रिरुद्रेभ्यो अवपथाः(१) ।

## सर्वत्र विभाषा गोः । १२० ।

पदान्ते य एङ् तदन्तो गोशब्दोऽति प्रकृत्या वा लोकवेदयोः । गोअग्रम् । गोऽग्रम् । छन्दसि । अपशवो वा अन्ये गो अश्वेभ्यः ।

## अवङ् स्फोटायनस्य । १२१ ।

---

१ अनुदात्त इत्येव, यद्रुद्रेभ्योऽवपथाः । 'निपातैर्यद्यदी' ति निपातो न ।

पदान्त एङन्तस्य गो शब्दस्याऽवङ् वाऽचि(१)। गोऽग्रम्। गवाग्रम्। सन्निपातपरिभाषाया अनित्यत्वाद्दीर्घः। स्फोटायनग्रहणं पूजार्थम्। विभाषेत्यनुवर्तते एव। व्यवस्थितविभाषा चेयं तेन गवाक्ष इत्यत्र नित्यमवङ्।

## इन्द्रे च ।१२२।

पदान्त इन्द्रशब्दावयवेऽचि गोशब्दस्यावङ्। सामर्थ्यान्नित्यमिदम्। गवेन्द्रः।

## प्लुतप्रगृह्या अचि नित्यम्[२] ।१२३।

प्लुताः प्रगृह्याश्चाचि नित्यं प्रकृत्या। देवदत्त(३) ३ अत्र आयाहि। हरी एतौ।

## आङोऽनुनासिकश्छन्दसि ।१२४।

छन्दसि विषये आङोऽनुनासिकः स च प्रकृत्याऽचि। अभ्र आँ अपः।

## इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च[४] ।१२५।

पदान्ता इकोऽसवर्णेऽचि ह्रस्वा वा। दण्डि अत्र दण्ड्यत्र। इक इति किम्। खट्वेन्द्रः। असवर्ण इति किम्। कुमारीन्द्रः। ( सिन्नित्यसमासयोः शाकल प्रतिषेधो वक्तव्यः )। अयं ते योनि ऋत्वियः। व्याकरणम्। अग्रिमसूत्रं तु समासेऽपि प्रवर्तते। सप्तर्षीणामित्यादौ। ( ईषा अक्षादिषु छन्दसि प्रकृतिभावमात्रम् ) ईषा अक्षा। का ईमिरे पिशङ्गिला।

## ऋत्यकः ।१२६।

१ व्यवस्थितविभाषेयं, तेन गवाक्ष इत्यत्र नित्यम्। अयमादेश आद्युदात्तो निपात्यते।

२ अचीत्यनु वर्तमाने पुनरज् ग्रहणं प्रत्यासत्या यत्राचि अनयोः प्रकृति भाव स्तदज्नैमित्तकार्यस्यैव तेनाभाव इत्यर्थं लाभार्थं तेन जानु उ अस्य, जान्वस्येत्यादौ सवर्णदीर्घो भवत्येव।

३ दूराद्धूतेचेतिप्लुतः। हरीएतावित्यत्रायमेवस्यान्नोत्तर इति नित्यमिति।

४ ह्रस्वविधानसामर्थ्यादेव प्रकृतिभावे सिद्धे तदनुकर्षणार्थश्चकारो न कार्य इति प्रकृतसूत्रे भाष्ये। दण्डी अत्रेति तु संहिताया अविवक्षायाम्।

ऋति पदान्ता अकः प्राग्वत्। खट्व ऋश्यः। होतृ ऋश्यः। पक्षे होतृश्यः। सवर्णार्थमनिगर्थञ्चेदम्। ऋतीति किम्। खट्वेन्द्रः।

## अप्लुतवदुपस्थिते। १२७।

अनार्ष इतिशब्दे प्लुतोऽप्लुतवत्स्यात्। सुश्लोक ३ इति। सुश्लोकेति। वत्करणं किम्। अश्लोक इत्युच्यमाने प्लुतएव प्रतिषिध्यते। तत्र को दोषः प्रगृह्य श्रवणं न स्यात्। अग्नी ३ इति।

## ई चाक्रवर्म्मणस्य। १२८।

प्लुत ई ३ अप्लुतवद्वाऽचि (१)। चिनुही ३ इदम्। चिनुहीदम्।

## दिव उत्। १२९।

प्रातिपदिकस्य पदसंज्ञकस्य दिव उत्। दिवं कामयते, द्युकामः। पदस्येति किम्। दिवौ। दिवः।

## एतत्तदोः सुलोपोऽकोरनञ्समासे हलि। १३०।

ककाररहितयोरेतत्तदोः सोर्लोपः स्याद्धलि न तु नञ्समासे। एष गच्छति। स पठति। एतत्तदोरिति किम्। यो भुङ्क्ते। सुग्रहणं किम्। एतौ गावौ चरतः। अकोरिति किम्। एषको ददाति। अनञिति किम्। अनेषो ददाति। सको गच्छति।

## स्यश्छन्दसि बहुलम्। १३१।

स्य इत्येतस्य सोर्लोपो बहुलं छन्दसि हलि। एषस्य वाजी क्षिपणिं तुरण्यति। कचिन्न। यत्र स्यो निपतेत्।

## सोऽचि लोपे चेत्पादपूरणम्। १३२।

स इत्यस्य सोर्लोपो लोपे सति पादश्चेत्पूर्य्येत। सेदु राजा क्षयति चर्षणीनाम्। सौषधीरनुरुध्यसे। सैष दाशरथी रामः। लोपे चेत् पादपूरणमिति किम्। स इव व्याघ्रो भवेत्।

---

१ ईकारग्रहणेन नार्थः। अविशेषेण चाक्रवर्म्मणस्याचार्य्यस्य प्लुतवद् भवतीत्येव। इदमपि सिद्धं भवति-वशा इयम्-वशेयम्।

## सुट् कात्पूर्वः । १३३ ।

अधिकारोऽयम् । पारस्करप्रभृतीनि चेति यावत् । इत उत्तरं यद्वक्ष्याम स्तत्र सुडिति कात्पूर्व इतिं चाधिकृतं वेदितव्यम् । संस्कर्त्ता इत्यादि ( अड्व्यवाये उपसंख्यानं कर्तव्यम् ) समस्कार्षीत् । ( अभ्यासव्यवाये चोपसंख्यानं कर्तव्यम् ) सञ्चस्करतुः । सञ्चस्करुः ।

## संपर्युपेभ्यः करोतौ भूषणे । १३४ ।

भूषणे सम्पर्युपेभ्यः करोतेः कात्पूर्वः सुट् । संस्कर्ता(१) । परिष्कर्ता उपस्कर्तुम् । भूषण इति किम् । उपकरोति । सम्पूर्वस्य क्वचिद् भूषणेऽपि सुडिष्यते । संस्कृत मन्नमिति ।

## समवाये च । १३५ ।

समवायेऽपि सं० । तत्र नः संस्कृतम् । परिष्कृतम् । उपस्कृतम्वा समुदितमित्यर्थः ।

## उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु । १३६ ।

प्रतियत्नादिषु(२) उपात्करोतेः कात्पूर्वः सुट् । एधोदकस्योपस्कुरुते(३) उपस्कृतं भुङ्क्ते । उपस्कृतं जल्पति । एतेष्विति किम् । उपकरोति ।

## किरतौ लवने । १३७ ।

लवने उपात्किरतेः कात्पूर्वः सुट् । णमुलत्र वक्तव्यः उपस्कारं मद्रका लुनन्ति । विक्षिप्य लुनन्तीत्यर्थः । लवन इति किम् । उपकिरति देवदत्तः ।

## हिंसायां प्रतेश्च । १३८ ।

हिंसायामुपप्रतिभ्यां किरतेः कात्पूर्वः सुट् । उपस्कीर्णं हन्त ते वृषल भूयात् । प्रतिस्कीर्णम्वा । हिंसानुबन्धी विक्षेपो भूयादित्यर्थः । हिंसायां

---

१ 'संपुंकानां सत्व' मिति समो मस्य सः, पूर्वस्य चानुनासिकः । परिष्कतेर्त्यत्र सुट्स्त्वज्ञामितिषत्वम् ।

२ सतो गुणान्तराधानं प्रतियत्नः । विकृतमेव वैकृतम् । गम्यार्थ वाक्यस्य स्वरूपेणोपादानं वाक्यस्याध्याहारः ।

३ एध इतिसान्तं, दिकं जलम् ।

मिति किम् प्रतिकीर्णम् ।

## अपाच्चतुष्पाच्छकुनिष्वालेखने । १३६ ।

चतुष्पाच्छकुनिष्वालेखन विषयेऽपात् किरतेः कात्पूर्वः सुट् । अपस्किरते वृषभो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते श्वा आश्रयार्थी । आलिख्य विक्षिपतीत्यर्थः । ( हर्षजीविकाकुलायकरणेष्विति वाच्यम् ) नेह । अपकिरति श्वा । ( हर्षजीविकाकुलायकरणेष्वेव किरते रात्मने पदस्योपसंख्यानम् ) ।

## कुस्तुम्बुरूणि जातिः । १४० ।

कुस्तुम्बुरूणीति सुण्निपात्यते जातिश्चेद्वाच्या । कुस्तुम्बुरुर्नामौषधिजातिः । धान्याकम् । तत्फलानि कुस्तुम्बुरूणि । क्लीवत्वमतन्त्रम् । जातिरिति किम् । कुत्सितानितुम्बुरूणि कुतुम्बुरूणि । तुम्बुरुशब्देनात्र तिन्दुकीफलान्युच्यन्ते । अमासेन तेषां कुत्सा ।

## अपरस्पराः क्रियासातत्ये । १४१ ।

क्रियासातत्ये गम्येऽपरस्परा इत्यत्र सुण् निपात्यते । अपरस्पराः सार्था गच्छन्ति । सततमविच्छेदेन गच्छन्तीत्यर्थः । क्रिया सातत्य इति किम् । अपरपराः सार्था गच्छन्ति । अपरे च परे च सकृदेव गच्छन्तीत्यर्थः । नात्र सातत्यं प्रबन्धो वा विवक्षितः । सततस्य भावः सातत्यम् । समस्तते विकल्पेन मलोपो विधीयते । समो वाहिततयोरिति ।

## गोष्पदं सेवितासेवितप्रमाणेषु । २४२ ।

सेवितादिषु गोष्पदमित्यत्र सुण्निपात्यते षत्वञ्च । गोष्पदोदेशः । गोभिः सेवितो देशोगोष्पद इत्युच्यते । अगोष्पदान्यरण्यानि(१) । गोष्पदमात्रं क्षेत्रम् । सेवितासेवित प्रमाणेष्विति किम् । गोः पदम् । गोपदम् ।

## आस्पदं प्रतिष्ठायाम् । १४३ ।

१ यान्यरण्यानीषु गवामत्यन्तासम्भवस्तान्येवमुच्यन्ते । क्षेत्रस्येयत्तां परिच्छेत्तुं गोष्पदमित्युपादीयते ।

प्रतिष्ठायामास्पदमित्यत्र सुट् निनिपात्यते। आस्पदमनेन लब्धम्। आपदादित्यापदमन्यत्र।

## आश्चर्यमनित्ये। १४४।

अनित्ये आश्चर्यमिति सुट् निनिपात्यते। आश्चर्यं यदि स भुञ्जीत। आश्चर्यं यदि सोऽधीयीत। चिमत्कृद्भुतमित्यर्थः। अनित्य इति किम् आच कर्म शोभनम्।

## वर्चस्केऽवस्करः। १४५।

अन्नमलेऽवस्कर इति सुट् निपात्यते। कर्मणि अप्। वर्चस्क इति कि अवकरः।

## अपस्करो रथाङ्गम्। १४६।

रथाङ्गे अपस्कर इति सुट् निपात्यते। अपस्करो रथावयवः। अन्य अपकरः।

## विष्किरः[1] शकुनिर्विकिरो वा। १४७।

विष्किर इति सुट् निपात्यते शकुनौ वा। पक्षे विकिरः। भाष्ये–विष्कि इत्येव सूत्रम्।

## ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे। १४८।

ह्रस्वाच्चन्द्रोत्तरपदस्य सुट् मन्त्रविषये। सुश्चन्द्रो युष्मान्। ह्रस्वादि किम्। सूर्याचन्द्रमसाविता। मन्त्र इति किम्। सुचन्द्रा पौर्णमासी।

## प्रतिष्कशश्च कशेः। १४९।

कशेः प्रतिष्कश इति निपात्यते। वार्तापुरुषः सहायः पुरोयायी वा प्रतिष्कशः। 'ग्राममद्य प्रवेक्ष्यामि भव मेत्वं प्रतिष्कशः'। कशेरिति किम् प्रतिगतः कशा प्रतिकशोऽश्वः।

## प्रस्कण्वहरिश्चन्द्रावृषी। १५०।

१ 'सर्वे शकुनयो भक्ष्या विष्किराः कुक्कुटाहते'।

प्रस्कण्वहरिश्चन्द्रावित्यत्र सुट् निपात्यते ऋषौ । प्रस्कण्व ऋषिः । हरिश्चन्द्र ऋषिः । ऋषौ इति किम् । प्रकण्वो देशः । हरिचन्द्रो माणवकः ।

## मस्करमस्करिणौ वेणुपरिव्राजकयोः । १५१ ।

मस्करमस्करिणाविति सुट् निपात्यते वेणौ परिव्राजके च । मकरेत्यव्युत्पन्नं प्रातिपदिकम् । मस्करो वेणुः । मस्करी परिव्राजकः । वेणुपरिव्राजकयोः किम् । मकरो ग्राहः । मकरी समुद्रः ।

## कास्तीराजस्तुन्दे नगरे । १५२ ।

कास्तीर अजस्तुन्द एतौ निपात्येते नगरे । ईषत्तीरमस्य कास्तीरं नाम नगरम् । अजस्य तुन्दम् अजस्तुन्दं नाम नगरम् । नगर इति किम् । कातीरम् । अजतुन्दम् ।

## कारस्करो वृक्षः । १५३ ।

कारस्कर इति निपात्यते वृक्षे । कारंकरोतीति 'दिवा विभा' इति टः । कारस्करो वृक्षः । नेदंसूत्रमिति केचित् ।

## पारस्करप्रभृतीनि च संज्ञायाम्[१] । १५४ ।

पारस्करप्रभृतीनि निपात्यन्ते संज्ञायाम् । पारस्करो देशः । कारस्करो वृक्षः ।

## अनुदात्तं पदमेकवर्जम् । १५५ ।

परिभाषेयम् । यस्मिन्पदे यस्य उदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं तत् पदमनुदात्ताच्कं स्यात् । आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च । पृथक्स्वरनिवृत्त्यर्थमेकवर्जपदस्वरः ॥ १ ॥ चत्वारः(२) । अनड्वाहः । अस्थ्ना । दध्ना । गोपायति । धूपायति ।

१ अयमाकृतिगणः । तद्बृहतो श्चोर देवतयोः सुट् तलोपश्च । प्रात्तुम्पतौ गवि कर्त्तरिचेति च गणसूत्रम् । तस्करः । बृहस्पतिः । प्रस्तुम्पतिगौरित्युदाहरणानि ।

२ चतेरुरन्निति चतुःशब्द आद्युदात्तः । आमुदात्तस्तत्र विरोधाभावादुदात्तद्वय प्रसङ्गः । अनो वहतीति अनसि वहेः क्विप् । रश्च अनस इति क्विप् । अन्तः शब्दोऽसुन्प्रत्य

कर्त्तव्यम् । तैत्तिरीयः । ( सति शिष्टस्वर बलीयस्त्वमन्यत्र विकरणेभ्य इ
वक्तव्यम् ) औपगवः । राजपुरुषः ।

## कर्षात्वतो घञोन्त उदात्तः । १५६ ।

घञन्तस्य भौवादिकस्य कर्षतेरात्वतश्चान्त उदात्तः । कर्षः । पाकः
ञ्नित्यादिर्नित्यमित्यस्यापवादः ।

## उञ्छादीनाञ्च । १५७ ।

उञ्छादीनामन्त उदात्तः । उञ्छः । म्लेच्छः । घञन्तत्वाद् ञित्स्वरः
प्राप्तः । अधिकमन्यत्र ।

## अनुदात्तस्य च यत्रोदात्तलोपः । १५८ ।

यस्मिन्ननुदात्ते परत उदात्तो लुप्यते तस्योदात्तः । कुमार ई
कुमारी । कुमारशब्दोऽन्तोदात्तस्तस्य ङीप्यनुदात्ते उदात्तो लुप्यते । अनु
दात्तो ङीप् उदात्तः ।

## धातोः । १५९ ।

धातोरन्त उदात्तः । पचति । पठति ।

## चितः । १६० ।

चित अन्त उदात्तः । भञ्जभासमिदो घुरच् । भङ्गुरम् । भासुरम् ।
मेदुरम्(१) ।

## तद्धितस्य । १६१ ।

चितस्तद्धितस्यान्त उदात्तः । कौञ्जायनाः । गोत्रेकुञ्जादिभ्य
श्चफञ् । परमपि ञित्स्वरं बाधित्वाऽन्तोदात्तमेव यथास्यादित्येतदर्थ
मिदम् ।

---

यान्त आद्युदात्तः । गतिकारकोपपदात् कृदिति उत्तरपदप्रकृति स्वरेण धातुरन्तोदात्तः
असिसञ्जिभ्यां क्थिन्नित्याद्युदात्तोऽस्थि शब्दः । दीघशब्दोनविषयस्यानिसन्तत्वे
त्याद्युदात्तः ।

१ ( चितः सप्रकृतेर्बह्वकजर्थम् ) चिति प्रत्ययेसति प्रकृतिप्रत्ययसमुदायस्यान्तउदात्तः इत्यर्थं
नभन्नामन्यकेसमे ।

## कितः। १६२।

कितस्तद्धितस्यान्त उदात्तः। नडादिभ्यःफक्। नाडायनः।

## तिसृभ्यो जसः। १६३।

तिसृभ्यो जस अन्तोदात्तः। तिस्रो द्यावः सवितुः।

## चतुरः शसि। १६४।

शसिचतुर अन्तोदात्तः। चतुरः पश्य।

## सावेकाचस्तृतीयादिर्विभक्तिः। १६५।

सौ य एकाच्ततः परातृतीयादिर्विभक्तिरुदात्ता। वाचा। वाग्भ्याम्। वाग्भिरित्यादि। साविति सप्तमी बहुबचनं गृह्यते।

## अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे। १६६।

अनित्यसमासे यदुत्तरपदमन्तोदात्तमेकाच्च ततः परा तृतीया वा उदात्ता। परमवाचा। परतवाचे। परमत्वचा। परमत्वचे। पक्षे समासान्तोदात्तत्वम्।

## अञ्चेश्छन्दस्य सर्वनामस्थानम्। १६७।

अञ्चेःपरा असर्वनामस्थानविभक्ति रुदात्ता छन्दसि। इन्द्रोदधीचोऽस्थिभिः। चावितिपूर्वपदान्तोदात्तत्वं प्राप्तम्।

## ऊडिदंपदाद्यप्पुम्रैद्युभ्यः। १६८।

ऊडादिभ्यः परा असर्वनामविभक्ति रुदात्ता। प्रष्ठौहः। प्रष्ठोहा। ऊठ् युपधा ग्रहणम्। अन्त्यप्रतिषेधार्थम्। अक्षद्युवे। एभिर्नृभिः। अन्वादेशेन। अन्तोदात्तादित्यनुवृत्तेः। "पद्दन्नो" इतिसूत्रोक्ताः पद्पदादयः। पद्भ्यांभूमिरित्यादि। अपांफेनेन। अभ्रातेवपुंसः। रायावयम्। दिवे दिवे।

## अष्टनोदीर्घात् । १६९ ।

दीर्घान्तादष्टनः परा असर्वनाम विभक्ति रुदात्ता(१) । अष्टाभिरित्यादि

## शतुरनुमोनद्यजादी । १७० ।

अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिश्चास र्वनामस्थानविभक्तिरुदात्ता । तुदती । नुदती । तुदता । नुदता । ( घजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानं कर्त्तव्यम् ) बृहती । बृहता । महती महता ।

## उदात्तयणो हल्पूर्वात् । १७१ ।

हल्पूर्व उदात्तस्थाने यो यण् ततः परा नदी अजादिश्चा सर्वनाम स्था विभक्ति रुदात्ता । कर्त्री । हर्त्री । कर्त्रा । हर्त्रा । ( नकारग्रहणञ्च कर्तव्यम् वाक् पत्नीयं कन्या ।

## नोङ् धात्वोः । १७२ ।

ऊङोधात्वोश्च यो हल्पूर्व उदात्तयण् ततःपरा नदी अजादिश्चासर्वना स्थान विभक्ति र्नोदात्ता । दात्ता । ब्रह्मबन्ध्वा । ब्रह्मबन्ध्वे ।

## ह्रस्वनुड्भ्यां मतुप् । १७३ ।

अन्तोदात्ताद्ध्रस्वान्तान्नुटश्च परो मतुबुदात्तः । अग्निमान् वायुमान् । अक्षण्वता । ( मतुब्युदात्तत्वे, रे ग्रहणं कर्तव्यम् ) आ वाने तु नो विशः । ( त्रेश्चप्रतिषेधो वक्तव्यः ) त्रिवतीर्याज्या नुवाक्य भवन्ति ।

## नामन्यतरस्याम् । १७४ ।

मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तात्परो नाम् वोदात्तः । अग्नीनाम् वायूनाम् ।

## ङ्याश्छन्दसि बहुलम् । १७५ ।

१ घृतादिपाठादष्टन् शब्दोऽन्तोदात्त स्तत्र 'झल्युपोत्तम' मित्यस्यापवादो विभक्ते रेवोदात्त विधीयते ।

ङ्यन्तानाम् बहुलमुदात्तश्छन्दसि । देवसेनानामभिभञ्जतीनाम् । बह्वीनांपिता । नेह बहुलग्रहणात् । जयन्तीनांमरुतः ।

## षट्त्रिचतुर्भ्यो हलादिः । १७६ ।

षट् सज्ञकात्त्रिचतुर्भ्याञ्च परा हलादिर्विभक्तिरुदात्ता । षड्भिः । षड्भ्यः । पञ्चानाम् । सप्तानाम् । त्रिभिः । चतुर्भिः ।

## झल्युपोत्तमम् । १७७ ।

षट् संज्ञकात् त्रिचतुर्भ्यां च परा या झलादिर्विभक्तिस् तदन्तेपदे उपोत्तमुदात्तम् । पञ्चभिस्तपस्तपति । सप्तभिः पराञ्जयति । तिसृभिः । चतुर्भिः ।

## विभाषा भाषायाम् । १७८ ।

षट् त्रिचतुर्भ्यः परा या झलादि विभक्ति स्तदन्ते पदे उपोत्तमं भाषायाम्वोदात्तम् । पञ्चभिः २ । सप्तभिः २ । तिसृभिः २ । चतसृभिः २ ।

## न गोश्वन्त्साववर्णराडङ्क्रुङ्कृद्भ्यः । १७९ ।

गवादिभ्य१ उक्तन्न । गवा । गवे । गोभ्यामि ।

## दिवो झल् । १८० ।

दिवः परा झलादि विभक्ति नोदात्ता । द्युभ्याम् । द्युभिः 'ऊडिदमि' तिप्राप्तिः ।

## नृचान्यतरस्याम् । १८१ ।

नुः परा झलादि विभक्ति नोदात्ता । नृभ्याम् । नृभिः । नृभ्यः ।

## तित्स्वरितम् । १८२ ।

स्पष्टम् । चिकीर्ष्यम् । कार्य्यम् । प्रत्ययाद्युदात्तस्यापवादः ।

---

१ गवा, शुना, तेभ्यः, इत्यत्र च "सावेकाच" इति प्राप्तिर्निषिध्यते । सावर्णोति सौ-प्रथमैकवचनेयदवर्णान्तं तस्मादित्यर्थः । राजतिः, अञ्चतिश्चक्विबन्तः । सनकार ग्रहणं विषयावधारणार्थं, न लोपाभावे एवप्रतिषेधोऽयथास्यादिति । राट् । प्राङ्। क्रुङ् क्विन्नन्तः । कृत । क्विबन्तः ।

## तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः । १८३ ।

तासेरनुदात्तेतो ङिददुपदेशाददन्तात्पदेशाच्च परं लसार्वधातुकमनुदात्तं ह्न्विङौ वर्जयित्वा । प्रत्ययस्वरापवादोऽयम् । कर्त्ता । आस्ते । सूते । शेते । तुदतः । पचमानः(१) ।

## आदिः सिचोऽन्यतरस्याम् । १८४ ।

सिजन्तस्यादिरुदात्तो वा । माहिकार्ष्टाम्२ (सिच आद्युदात्तत्वेऽनिटः पित उपसंख्यानं कर्तव्यम् ) माहिलाविषम् ।

## स्वपादिहिंसामच्यनिटि । १८५ ।

स्वपादीनां हिंसेश्चादिरुदात्तो वा । अनिटयजादौ लसार्वधातुके स्वपन्ति । स्वपन्ति । श्वसन्ति । श्वसन्ति । हिंसन्ति । हिंसन्ति(२) ।

## अभ्यस्तानामादिः । १८६ ।

अभ्यस्तानामादिरुदात्तः अनिटयजादौ लसार्वधातुके । ददति । ददतु

## अनुदात्ते च । १८७ ।

अभ्यस्तानामादिरुदात्तः अविद्यमानोदात्ते लसार्वधातुके । अनजादार्थोऽयम् । ददाति । दधाति । जिहीते । मिमीते । अनुदात्ते चेति बहुव्रीहिनिर्देशो लोपयणादेशार्थः । माहिस्मदधात् । दधात्यत्र ।

## सर्वस्य सुपि । १८८ ।

सर्वस्यादि रुदात्तः सुपि । सर्वः । सर्वौ । सर्वे । ( सर्वस्वरो ऽनकच्कस्येति वक्तव्यम् ) नेह सर्वके ।

## भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति । १८९ ।

---

१ चित्स्वरोप्यनेन परत्वाद्बाध्यते ।

२ ङित्यजादावेवेष्यते, नेह स्वपानि ।

अभ्यस्तानां भ्यादीनां पिति लसार्वधातुके प्रत्ययात्पूर्वमुदात्तम्। बिभेति। जिह्रेति बिभर्ति। जुहोति। ममत्तु नः परिज्मा। जजनदिन्द्रम्। दधनत्। दरिद्राति। जागर्षि त्वम्।

## लिति। १९०।

लिति प्रत्ययात् पूर्वमुदात्तम्। चिकीर्षकः। जिहीर्षकः। भौरिकिविधम्। भौलिकिविधम्।

## आदिर्णमुल्यन्यतरस्याम्। १९१।

णमुल्यादिरुदात्तो वा। लोलूयम् लोलूयम्(१)।

## अचः कर्तृयकि। १९२।

उपदेशे(२) ऽजन्तस्यादिरुदात्तो वा कर्त्रर्थे यकि। लूयते केदारः स्वयमेव(३)।

## थलि च सेटीडन्तो वा। १९३।

सेटि थलन्तोऽदेरिडुदात्तोऽन्तो वाऽऽदिर्वा। लुलविथ। यदानैते त्रय स्तदा "लिति" इति प्रत्ययात् पूर्वमुदात्तम्। अत्र चत्वारोऽपि पर्याये णोदात्ताः।

## ञ्नित्यादिर्नित्यम्। १९४।

ञिदन्तस्य निदन्तस्यचादिर्नित्यमुदात्तः। गार्ग्यः। वात्स्यः। वासुदेवकः। अर्जुनकः(४)।

## आमन्त्रितस्य च। १९५।

आमन्त्रितस्यादिरुदात्तः। देवदत्त ! देवदत्तौ। देवदत्ताः।

---

१ आम्रेडितानुदात्तत्वे कृते पूर्वो लोलूयं शब्द एकत्राद्युदात्तः। अपरत्र लित्स्वरेण मध्योदात्तः।
२ तास्यनुदात्तेदितिसूत्रे समासैकदेशोऽप्युपदेश शब्द इहानुवर्तते।
३ पक्षे लसार्वधातुकेतिनिघाते कृते यक एव स्वरः। ये विभाषा इत्यत्र च विषयसप्तमी, तेन जायते स्वयमेव।
४ वासुदेवार्जुनाभ्यांवुन्निति वुन्।

## पथिमथोः सर्वनामस्थाने । १९६ ।

पथिमथोरादिरुदात्तः(१) सर्वनामस्थाने । पन्थाः । मन्थाः ।

## अन्तश्च तवै युगपत् । १९७ ।

तवै प्रत्ययान्तस्यादिरन्तश्च युगपदुदात्तौ । कर्त्तवै । हर्तवै । प्रत्यय स्वरस्याद्युदात्तत्वापवादः ।

## क्षयो निवासे । १९८ ।

निवासे क्षय आद्युदात्तः । क्षयन्ति निवसन्त्यस्मिन्निति क्षयः(२) क्षये जागृहि प्रपश्यन् ।

## जयः करणम् । १९९ ।

करणवाचि जय आद्युदात्तः । जयन्ति तेनेति जयः जयोऽश्वः(३) ।

## वृषादीनाञ्च । २०० ।

वृषादीनामादिरुदात्तः । वृषः । जनः । आकृतिगणोऽयम् ।

## संज्ञायामुपमानम् । २०१ ।

उपमानवाच्याद्युदात्तः संज्ञायाम् । चञ्चा । वद्ध्रिका । 'इवे प्रतिकृताविति कन् । लुम्मनुष्ये इति लुप्(४) ।

## निष्ठा च द्व्यजनात् । २०२ ।

निष्ठान्तं द्व्यजाद्युदात्तान्त्वाकारादि, संज्ञायाम् । गुप्तः । बुद्धः । प्रत्ययस्वरो न ।

## शुष्कधृष्टौ । २०३ ।

एतावाद्युदात्तौ । शुष्कः । धृष्टः । असंज्ञार्थमिदम् ।

---

१ औणादिकेन्प्रत्ययान्ताविमौ प्रत्ययस्वरेणान्तोदात्तौ ।

२ इत्यादावपि ।

३ पुंसि संज्ञायामितिघः ।

४ प्रत्ययलक्षणेन सिद्धेऽप्याद्युदात्तत्वे, ज्ञापकमेतत् "क्वचिदिहस्वरविधौ न प्रत्ययलक्षणमिति

## आशितः कर्ता । २०४ ।

कर्तृवाची आशित आद्युदात्तः । आशितो देवदत्तः "थाथघञ्क्ति" न ।

## रिक्ते विभाषा । २०५ ।

रिक्त आदि रुदात्तो वा । रिक्तः । रिक्तः ।

## जुष्टार्पिते च च्छन्दसि । २०६ ।

छन्दसि जुष्टार्पिते वाऽऽद्युदात्ते । जुष्टः २ । अर्पितः २ ।

## नित्यं मन्त्रे । २०७ ।

मन्त्रविषये जुष्टार्पिते आद्युदात्ते नित्यम् । जुष्टदेवानाम् । अर्पितं पितृणाम् ।

## युष्मदस्मदो ङसि । २०८ ।

अनयोरादि रुदात्तो ङसि । तव स्वम् । मम स्वम् ।

## ङयि च । २०९ ।

युष्मदस्मदोरादि रुदात्तो ङयि । तुभ्यम् । मह्यम् ।

## यतो ऽनावः । २१० ।

यत्प्रत्ययान्तो द्व्यजाद्युदात्तो नचेन्नावः परः । चेयम् । जेयम् । कण्ठ्यम् । तित्स्वरितमिति न ।

## ईडवन्दवृशंसदुहां ण्यतः । २११ ।

ण्यदन्तानामीडादीनामादि (१) रुदात्तः । ईड्यम् । वन्द्यम् । वीर्यम्(२) शस्यम् । दोह्या धेनुः ।

---

१ द्व्यनुबन्धकत्वाण् ण्यतो यता ग्रहणनेति 'तित्स्वरितमि' तिप्राप्तम् ।
२ वृङोण्यत् ।

## विभाषा वेणुविन्धानयोः । २१२ ।

वेणुविन्धानयोरादि(१) रुदात्तो वा । वेणुः २ । इन्धानः २ ।

## त्यागरागहासकुहश्वठक्रथानाम् । २१३ ।

त्यागादीनामादि रुदात्तो वा । त्यागः(२) । त्याग इत्यादि ।

## उपोत्तमं रिति । २१४ ।

रिदन्तस्योपोत्तम मुदात्तम् । करणीयम् । हरणीयम् । पटुजातीयः । प्रत्ययस्वरापवादोऽयम् ।

## चङ्यन्यतरस्याम् । २१५ ।

चङन्ते, उपोत्तममुदात्तं वा । माहिचीकरताम् २ । धात्वका उदात्तः ।

## मतोः पूर्वमात्संज्ञायां स्त्रियाम् । २१६ ।

मतोः पूर्वमादुदात्तः स्त्रीलिङ्गे संज्ञायाम् । उदुम्बरावती । पुष्करावती ।

## अन्तोऽवत्याः । २१७ ।

अवत्या अन्त उदात्तः स्त्रीलिङ्गे संज्ञायाम् । अजिरवती । खदिरवती ।

## ईवत्याः । २१८ ।

ईवत्या अन्त उदात्तः स्त्रीलिङ्गे संज्ञायाम् । अहीवती । मुनीवती ।

## चौ । २१९ ।

लुप्तनकाराकारेऽञ्चतौ पूर्वस्यान्त उदात्तः । दधीचः पश्य । दधीचा

---

१ वेणुशब्दोऽय 'मजिवृरीभ्योनि' दिति णु प्रत्ययान्तो नित्या न्नित्य माद्युदात्त प्राप्तः । इन्धानेऽप्राप्तमाद्युदात्तत्वं पक्षेविधीयते ।

२ त्यागादयस्त्रयोधमन्तास्तेन 'कर्षात्वतः' इति अन्तोदात्तता प्राप्ता । कुहादय पचाद्यजन्ताः ।

दधीचे । उदात्तनिवृत्तिस्वरापवादोऽयम् । ( चावतद्धित इति वक्तव्यम् ) दाधीचः । माधूचः । अत्र प्रत्ययस्वर एव ।

## समासस्य । २२० ।

समासस्यान्त उदात्तः । राजपुरुषः । ब्राह्मणकम्बलः । राजदृषत् । नानापदस्वरस्यापवादः(१) ।

## इति षष्ठाध्यायस्य प्रथमः पादः ॥

---

१ स्वरविधौ व्यञ्जनमविद्यमानवदिति हलन्तेऽप्ययम्।

# अथ षष्ठाध्यायस्य द्वितीयः पादः।

---:o:---

## बहुव्रीहौ प्रकृत्या पूर्वपदम् ।१।

बहुव्रीहौ पूर्वपदं प्रकृत्या। कार्ष्णोत्तरासङ्गः(१)। यूपवलजः। यूप-शब्द उणादिषु कु सु युभ्यश्चेति पप्रत्ययान्तः। "तत्रदीर्घ इति निदिति च वर्तते तेनाद्युदात्तः", । ब्रह्मचारि परिस्कंदः। ब्रह्मचारि शब्दः कृदुत्तर-पदप्रकृतिस्वरेणान्तोदात्तः।

## तत्पुरुषे तुल्यार्थतृतीया सप्तम्युपमानाव्यय-द्वितीया कृत्याः ।२।

तत्पुरुषे तुल्यार्थादि पूर्वपदं प्रकृत्या। तुल्य(२)श्वेतः। तुल्यलोहितः। शंकुलया खण्डः, शंकुला(३) खण्डः। अक्षेषु शौण्डोऽक्षशौण्डः(४)। शस्त्रीश्यामा। कुमुदश्येनो। अब्राह्मणः। कुब्राह्मणः। (अव्ययेन-ञ्कुनिपातानामिति(६) वक्तव्यम्) नेह। स्नात्वाकालक इति। मुहूर्त-

---

१ समासान्तोदात्तापवादोऽयम्। तस्मिन् हि सति अनुदात्तपदमेकवर्जमित्यनुदात्तः स्यात्। प्राणिरजतादिभ्योऽञित्यञ् प्रत्ययान्तः कार्ष्ण शब्दो ञित्स्वरेणाद्युदात्तः।

२ नौवयोधर्मविषेतियति, यतोऽनाव इत्याद्युदात्तस्तुल्यशब्दः कृत्यतुल्याख्या अजात्येति तत्पुरुषश्च।

३ शंकुपूर्वाल्लाते र्घञर्थं कविधानमिति वा कप्रत्ययान्तः शंकुला शब्दोऽन्तोदात्तः। तृतीया-तत्कृतेति समासः।

४ अशेर्देवने इति स प्रत्ययान्तो ऽक्षशब्दो ऽन्तोदात्तः। सप्तमीशौण्डैरिति समासः।

५ शस्त्रीशब्दो गौरादि ङीषन्तो ऽन्तोदात्तः। उपमानानीतिसमासः।

६ निपातत्वादेवसिद्धे नञ् ग्रहण मकरणिरित्यादौ परस्यापि कृत्स्वरस्यबाध-नार्थम्। अव्ययीत्यत्र सतिशिष्टप्रत्ययस्वर बाधनार्थमित्येके। भाष्येत्वेतदर्थं वाचनानि वारब्धानि।

सुखम्(१) । भोज्योष्णम्(२) ।

## वर्णोवर्णेष्वनेते । ३ ।

तत्पुरुषे वर्णवाचि पूर्वपदं एतभिन्ने वर्णवाच्युत्तरपदे पूर्वपदं प्रकृत्या कृष्ण(३) सारङ्गः ।

## गाधलवणयोः प्रमाणे । ४ ।

प्रमाणवाचिनि तत्पुरुषे गाधलवणयोः परतः पूर्वपदं प्रकृत्या । शम्ब(४) गाधमुदकम् । अरित्रगाधमुदकम् । तत्प्रमाणमित्यर्थः । गोलवणम्(५) अश्वलवणम् । यावद् गवे दीयते तावदित्यर्थः ।

## दायाद्यं दायादे । ५ ।

तत्पुरुषे दायाद्यं पूर्वपदं दायादे परतः प्रकृत्या । विद्यादायादः(६) । धनदायादः ।

## प्रतिबन्धि चिरकृच्छ्रयोः । ६ ।

तत्पुरुषे प्रतिबन्धिवाचि पूर्वपदं चिरकृच्छ्रयोः परतः प्रकृत्या । गमन(७) चिरम् । गमनकृच्छ्रम् । व्याहरणचिरम् । व्याहरणकृच्छ्रम् ।

## पदेऽपदेशे । ७ ।

---

१ मुहूर्त शब्दः पृषोदरादिरन्तोदात्तः । कालाध्वनोरिति-द्वितीया । अत्यन्त संयोगे चेतिसमासः ।

२ भोज्यशब्दोण्यदन्त स्तित्स्वरित मितिस्वरितान्तः । कृत्यतुल्याख्या इति समासः ।

३ कृष्णशब्दो नक्प्रत्ययान्तो वर्णानांतणतिनितान्तानामित्याद्युदात्तः । फिषति कृष्णस्या मृगाख्याचे दितिछन्दस्यन्तोदात्तत्व मन्यत्राद्युदातत्वं व्यवस्थितम् । वर्णो वर्णेनेति समासः ।

४ शमेर्वन्निति बन्प्रत्ययांतत्वाच्छम्बशब्द आद्युदात्तः । षष्ठीसमासः ।

५ गोशब्दो गमेर्डो रितिडो प्रत्ययान्तोऽन्तोदात्तः । षष्ठी समासः ।

६ विद्याशब्दः संज्ञायां समजेतिक्यप् प्रत्ययान्तोऽन्तोदात्तः । स्वामीश्वरेति संबन्धसामान्य षष्ठ्यन्तेन समासः ।

७ गमन व्याहरण शब्दौल्युडन्तौ । तयोर्लितस्वरः । विशेषण समासोल्युडन्तस्य भाववाचित्वात् । मयूरव्यंसकादिर्वा द्रष्टव्यः ।

व्याजवाचि तत्पुरुषे पदे परतः पूर्वपदं प्रकृत्या । मूत्रपदेन(१) प्रस्थितः । उच्चारपदेन प्रस्थितः ।

## निवाते वातत्राणे । ८ ।

वातत्राणवाचि तत्पुरुषे पूर्वपदं प्रकृत्या निवाते उत्तरपदे । कुट्ये वनिवातं कुटीनिवातम्(२) । शमीनिवातम् ।

## शारदेऽनार्तवे । ९ ।

अनार्तवे शारदे उत्तरपदे पूर्वपदं प्रकृत्या । रज्जुशारदमुदकम्(३) ॥ दृषत्शारदाः सक्तवः ।

## अध्वर्युकषाययो र्जातौ । १० ।

जातिवाचितत्पुरुषे अध्वर्यु कषाययोः उत्तरपदयोः पूर्वपदं प्रकृत्या । प्राच्याध्वर्युः(४) । कठाध्वर्युः । दौवारिककषायम् ।

## सदृशप्रतिरूपयोः सादृश्ये । ११ ।

सादृश्यवाचितत्पुरुषे सदृशप्रतिरूपयोरुत्तरपदयोः पूर्वपदं प्रकृत्या । पितृ(५) सदृशः । मातृसदृशः । पितृप्रतिरूपः । मातृप्रतिरूपः ।

## द्विगौ प्रमाणे । १२ ।

प्रमाणवाचितत्पुरुषे द्विगावुत्तरपदे पूर्वपदं प्रकृत्या । प्राच्यसप्तसमः(६) गान्धारिसप्तसमः ।

---

१ मूत्रशब्दोघञन्त आद्युदात्तः । उच्चारशब्दो घञन्तस्थाथादिस्वरेणान्तोदात्तः । अयमपि विशेषण समासो मयूरव्यंसकादिर्वा ।

२ कुटीशमी शब्दौ गौरादिङीषन्तावन्तोदात्तौ । विशेषण समासः ।

३ रज्जुशब्दः सृजेरसुम्चेत्याद्युदात्त । कर्मधारयेऽस्वपद विग्रहः । रज्जुशब्दोऽत्ररज्जुवद्ध पात्रीधृते वर्तते इदानीमेव कूपादुद्धृतनवजलमित्यर्थः ।

४ प्राच्यशब्दो यत्प्रत्ययान्त आद्युदात्तः । विशेषण समासोऽयम् । कषाय शब्दोऽपिद्वारे नियुक्त इति ठकि सत्यन्तोदात्त एव । षष्ठी समासः ।

५ पितृमातृ शब्दौ उणादितृजन्तो चित्स्वरेणान्तोदात्तौ । पूर्वं सदृशेति तृतीयासमासे तत्पुरुषे तुल्यार्थेत्यनेनैव सिद्ध इदं दास्याः सदृश इत्यलुक् समासार्थम् ।

६ सप्त समाः प्रमाणमस्य । प्रमाणे लोर्द्विगोर्नित्य मितिमात्रचोलुक् । प्राच्य शब्दः यु,

## गन्तव्यपण्यं वाणिजे । १३ ।

वाणिजे उत्तरपदे गन्तव्यपण्यं पूर्वपदं तत्पुरुषे प्रकृत्या । मद्रवाणिजः(१) । काश्मीर वाणिजः । गान्धारिवाणिजः । मद्रादिषु गत्वा व्यवहरन्तीत्यर्थः । गोवाणिजः । अश्ववाणिजः ।

## मात्रोपज्ञोपक्रमच्छाये नपुंसके । १४ ।

नपुंसकवाचि तत्पुरुषे मात्रादिषु उत्तरपदेषु पूर्वपदं प्रकृत्या । भिक्षामात्रं(२) न ददाति याचितः । समुद्रमात्रं न सरोऽस्ति किञ्चन । पाणिनोपज्ञकालकं व्याकरणम् । व्याड्युपज्ञं दुष्करणम् । आढ्योपक्रमं प्रासादः दर्शनीयोपक्रमम् । इषु च्छायम् । धनुश्छायम् ।

## सुखप्रिययोर्हिते । १५ ।

हितवाचितत्पुरुषे सुखप्रिययो रुत्तरपदयोः पूर्वपदं प्रकृत्या । गमन(३) सुखम् । वचन सुखम् । व्याहरण सुखम् । गमन प्रियम् । वचन प्रियम् ।

## प्रीतौ च । १६ ।

प्रीतौ गम्यमानायां सुख प्रिययोरुत्तरपदयोः पूर्वपदं प्रकृत्या । ब्राह्मण(४) सुखं पायसम् । छात्रप्रियोऽनध्यायः ।

## स्वं स्वामिनि । १७ ।

---

प्रागपागुदक् प्रतीचोयदिति यदन्तत्वाद्यतोऽनाव इत्याद्युदात्तः । प्राच्यश्चासौ सप्तसमश्चेति विशेषण समासः ।

१ मद्रशब्दः स्फायितञ्चि इतिरक्प्रत्ययान्तत्वात् प्रत्ययस्वरेणान्तोदात्तः । मोशद्वश्च गमेर्डोः । अन्तोदात्तोऽयम् । सप्तमीति योगविभागात्समासः ।

२ भिक्षायास्तल्यप्रमाण मित्यस्वपदविग्रहः षष्ठीसमासः । गुरोश्चहल इत्य प्रत्ययान्तोऽन्तौदात्ता भिक्षाशब्दः । पाणिनिशब्द इजन्तत्वादाद्युदात्तः । उपज्ञोपक्रममिति नपुंसकता आढ्यशब्दस्याथादि स्वरेणान्तोदात्तः । इषेः किच्चेति उप्रत्ययान्त इषुशब्दआद्युदात्तो नित्वात् । इषूणां छायेतितत्पुरुषः ।

३ गमन शब्दोल्युडन्तः—लिति इति सूत्रेणाद्युदात्तः । समानाधिकरणसमासो मयूरव्यंसकादिर्वा ।

४ ब्राह्मण छात्रशूद्रौ प्रत्ययस्वरेणान्तोदात्तौ । षष्ठी समासः ।

तत्पुरुषे स्वामिन्युत्तरपदे स्ववाचि पूर्वपदं प्रकृत्या । गोस्वामी । अश्वस्वामी । धनस्वामी ।

## पत्यावैश्वर्ये । १८ ।

ऐश्वर्यवाचिनि तत्पुरुषे पतिशब्द उत्तरपदे प्रकृत्या । गृहपति (१) । सेनापतिः । नरपतिः । धान्यपतिः ।

## न भूवाक्चिद्दिधिषु । १९ ।

ऐश्वर्यवाचिनि तत्पुरुषे भ्वादीनि पूर्वपदानि प्रकृत्या नस्युः पत्युत्तरपदे । भूपतिः(२) । वाक्यपतिः । चित्पतिः । दिधिषूपतिः ।

## वा भुवनम् । २० ।

ऐश्वर्यवाचिनि तत्पुरुषे भुवनपूर्वपदं प्रकृत्या वा पत्यौ । भुवनपतिः(३) भुवनपतिः ।

## आशङ्काबाधनेदीयस्सु संभावने । २१ ।

सम्भावनवाचि तत्पुरुषे आशङ्कादिषु पूर्वपदं प्रकृत्या । गमनाशङ्कं(४) वर्तते गमनमाशङ्कत इति सम्भाव्यते । गमनाबाधम् । गमनं बाध्यते इति सम्भाव्यते । गमन नेदीयः । गमनमिति निकटतरमिति सम्भाव्यते ।

## पूर्वे भूतपूर्वे । २२ ।

भूतपूर्ववाचि तत्पुरुषे पूर्वे पूर्वपदं प्रकृत्या । आढ्यो भूतपूर्व आढ्य-

---

१ गेहेक इति क प्रत्ययान्तो गृहशब्दः प्रत्ययस्वरेणान्तोदात्तः षष्ठीसमास ।

२ भ्वादय त्रयः क्विन्ताः । दिधिषू शब्दः अन्दूदृम्भू इत्यादिना ऊं प्रत्ययान्तो निपातितः । सर्वेऽप्यन्तोदात्ताः ।

निपातितः सर्वेऽप्यन्तोदात्ताः । भूपतिरित्यादि षष्ठीसमासाः । पूर्वेण प्राप्तः स्वरः प्रतिषिध्यते तेन समासस्वरेणान्तोदात्ता एवैते ।

३ भूसधूभ्रस्जिभ्य इति क्युन्नन्तो भुवनशब्दो नित्स्वरेणाद्युदात्तः । पत्या वैश्वर्ये इति प्राप्ते विकल्पोऽयम् ।

४ गमनादीनि पूर्वपदानि ल्युडन्तानि लिति इति आद्युदात्तानि गमनाशङ्का दयो विशेषण समासतः । मयूरव्यं सकादयो वा ।

पूर्वः(१) दर्शनीयपूर्वः । सुकुमारपूर्वः ।

## सविधसनीडसमर्य्यादसवेशसदेशेषु सामीप्ये ।२३।

सामीप्यवाचि तत्पुरुषे सविधादिषु पूर्वपदं प्रकृत्या । मद्रसविधम्(२) मद्रसनीडम् । मद्रसमर्य्यादम् । मद्रसवेशम् । मद्रसदेशम् । सामीप्यमित्यर्थः ।

## विस्पष्टादीनि गुणवचनेषु । २४ ।

तत्पुरुषे गुणवचनेषु विस्पष्टादीनि पूर्वपदानि प्रकृत्या । विस्पष्टकटुकम्(३) । विचित्रकटुकम् । व्यक्तकटुकम् । विस्पष्टलवणम् ।

## अज्याऽवमकन्पापवत्सु भावे कर्मधारये । २५ ।

कर्मधारये समासे आदिषु भाववाचि पूर्वपदं प्रकृत्या । गमनश्रेष्ठम्(४) । वचनज्येष्ठम् । गमनावमम् । गमनकनिष्ठम् । गमनपापिष्ठम् ।

## कुमारश्च । २६ ।

कुमारः पूर्वपदं प्रकृत्या । कुमारश्रमणा(५) । कुमारकुलटा । कुमारतापसी ।

## आदिः प्रत्येनसि । २७ ।

कर्मधारये प्रत्येनसि कुमार आद्युदात्तः । कुमारप्रत्येनाः(६) ।

---

१ व्याढ्य शब्द आङ्पूर्वाद्ध्यायतेः—घञर्थेकविधानमिति कर्मणि कः । आतो लोपे । पृषोदरादित्वाद् धस्य ढः । थाथादि स्वरेणान्तोदात्तः । अत्र विशेषण समासो मयूरव्यंसकादिर्वा ।

२ मद्रः रगन्तेनोदात्तः । षष्ठी समासः ।

३ विस्पष्टशब्दो गतिरनन्तर इत्याद्युदात्तः । विचित्र शब्दोऽप्यव्ययस्वरेण । विशेषेण चित्रं विचित्रम् । प्रादिसमासः । तत्पुरुषे तुल्यार्थ इत्यव्ययपूर्वपद प्रकृति स्वरेणाद्युदात्तः । अत्रमयूरव्यंसकादित्वात्समासः सुप् सुपेति वा ।

४ ल्युडन्तान्येतानि लित्स्वरेणाद्युदात्तानि । विशेषण समासो विशेष्यस्य पूर्वनिपातस्तु मयूरव्यंसकादित्वात् ।

५ कुमार क्रीडायाम् पचाद्यच् । चित्स्वरः । अत्र कुमार श्रमणादिभिरिति समासः ।

६ पूर्वत्र कुमारशब्दस्य प्रकृतिभावेन यः स्वरः प्राप्तः सोऽत्रादेर्भवतीति ।

## पूगेष्वन्यतरस्याम् । २८ ।

कर्मधारये गणवाचिषु कुमार आद्युदात्तो वा । कुमारचातकाः कुमारचातकाः,(१) इत्यादि ।

## इगन्तकालकपालभगालशरावेषु द्विगौ । २९ ।

द्विगौ समासे इगन्तादिषु पूर्वपदं प्रकृत्या । पञ्चारत्निः । पञ्चमास्यः(२) । पञ्चकपालः । पञ्चभगालः । पञ्चशरावः ।

## बह्वन्यतरस्याम् । ३० ।

द्विगौ समासे इगन्तादिषु बहु पूर्वपदं प्रकृत्या वा । बह्वरत्निः । बह्वरत्निः(३) । बहुमास्यः । बहुमास्यः । एवं कपालादिष्वपि ।

## दिष्टिवितस्त्योश्च । ३१ ।

द्विगौ दिष्टिवितस्त्योः पूर्वपदं प्रकृत्या वा । पञ्चदिष्टिः(४) । पञ्चदिष्टिः । पञ्चवितस्तिः पञ्चवितस्तिः ।

## सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् । ३२ ।

अकालाद्या सप्तमी तदन्तं पूर्वपदं प्रकृत्या सिद्धादिषु । सांकाश्य(५) सिद्धः । कांपिल्यसिद्धः । निधनशुष्कः । भ्राष्ट्रपक्वः । चक्रबन्धः ।

---

१ आद्युदात्ताभावे कुमारश्चेत्येव भवति । प्रतिपदोक्त ग्रहणपक्षे समासान्तोदात्तत्वं बोध्यम् ।

२ नः संख्याया इति पञ्चन् शब्द आद्युदात्तः, तद्धितार्थे द्विगुः ।

३ पूर्वेण नित्ये प्राप्ते विकल्पः । वहिवृद्धौ अस्मात् लघिवंह्योर्नलोपश्चेति कु प्रत्ययः प्रत्ययस्वरेणान्तोदात्तः । तस्य यणि सत्युदात्तस्वरितयोरिति भवति पक्षे च समासान्तोदात्तत्वम् ।

४ अत्रापि नः संख्याया इति पञ्चन् शब्द आद्युदात्तः । तद्धितार्थे द्विगुः । पक्षे चान्तोदात्तत्वं बोध्यम् ।

५ साङ्काश्यकाम्पिल्यशब्दौ ण्यप्रत्ययान्तावन्तोदात्तौ । निधनशब्दो निधाञः क्यु प्रत्यये मध्योदात्तः । भ्राष्ट्रशब्दः ष्ट्रन्प्रत्ययान्त आद्युदात्तः । चक्रशब्दश्च कृञः कोद्वे च इति वा प्रत्ययस्वरेणान्तोदात्तः सिद्धशुष्कपक्वबन्धैश्चेति समासः ।

## परिप्रत्युपापावर्ज्यमानाऽहोरात्रावयवेषु । ३३ ।

वर्ज्यमानाद्धोरात्रावयववाचिषु पर्य्यादयः पूर्वपदभूताः प्रकृत्या। परित्रिगर्त्तं(१) वृष्टोदेवः। परिसौवीरम्। प्रतिपूर्वाह्णम्। प्रत्यपराह्णम्। प्रत्यपररात्रम्। उपपूर्वाह्णम्। उपापराह्णम्। अपत्रिगर्त्तं वृष्टोदेवः।

## राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु । ३४ ।

बहुवचनान्तानां राजन्यवाचिना(२) यो द्वन्द्वोऽन्धकवृष्णिषु वर्त्तते तत्र पूर्वपदं प्रकृत्या। श्वाफल्कचत्रकरोधकाः। शिनिवासुदेवाः।

## सङ्ख्या । ३५ ।

द्वन्द्वे संख्यावाचि पूर्वपदं प्रकृत्या। एकादश(३)। द्वादश। त्रयोदश।

## आचार्योपसर्जनश्चान्तेवासी । ३६ ।

आचार्योपसर्जनान्तेवासिनां यो द्वन्द्वस्तत्र पूर्वपदं प्रकृत्या। आपिशलपाणिनीयाः(४)। पाणिनीयरौढीयाः। रौढीयकाशकृत्स्नाः।

## कार्तकौजपादयश्च । ३७ ।

कार्तकौजपादिषु पूर्वपदं प्रकृत्या। कार्तकौजपौ(५)। सावर्णिमाण्डूकेयौ।

---

१ एतानि पूर्वपदानि उपसर्गा आद्युदात्ता इत्याद्युदात्तानि। परित्रिगर्त्तमित्यत्र अपपरिवर्जने इति कर्मप्रवचनीयसञ्ज्ञा। पञ्चम्यपाङ्परिभिरिति पञ्चमीं च। अपपरीवहिरञ्चवः पञ्चम्या इत्यव्ययीभावः प्रतिपूर्वाह्णमित्यत्र लक्षणेनाभिप्रतीत्यव्ययीभावः।

२ श्वाफल्कशब्दश्चैत्रकशब्दश्च ऋष्यन्धकवृष्णिकुरुभ्यश्चेति, अणन्तावन्तोदात्तौ। शिनिशब्दो वहिति इत्यादिना गो प्रत्ययान्त आद्युदात्तः। चार्थेद्वन्द्वश्चेति समासः।

३ इण् भीका इत्यादिना कन्। नित्वादाद्युदात्त एकशब्दः।

४ पाणिनीय रौढीय शब्दौ छ स्वरेण मध्योदात्तौ। द्वन्द्व समासश्च।

५ कृतस्येदं कुजपस्येदमित्यण्णान्तोदात्तौ च।

## महान्व्रीह्यपराह्णगृष्टीष्वासजाबालभार भारत-हैलिहिलरौरव प्रवृद्धेषु । ३८ ।

महान् इति पूर्वपदं प्रकृत्या व्रीह्यादिषु । महाव्रीहिः(१)। महापराह्णः। महागृष्टिरित्यादि ।

## क्षुल्लकश्च वैश्वदेवे । ३६ ।

क्षुल्लक इति महाँश्चेति पूर्वपदं प्रकृत्या वैश्वदेवे । क्षुल्लकवैश्वदेवम्(२)। महावैश्वदेवम् ।

## उष्ट्रः सादिवाम्योः । ४० ।

उष्ट्रेति पूर्वपदं प्रकृत्या सादिवाम्योः । उष्ट्रसादि(३) । उष्ट्रवामि ।

## गौः सादसादिसारथिषु । ४१ ।

गौः पूर्वपदं प्रकृत्या सादादिषु । गोः सादः(४) । गोसादः । गां सादयतीति वा गोसादः । गोः सादिर्गोसादिः । गो सारथिः ।

## कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलिकद्रूः पण्यकम्बलोदासीभाराणाञ्च । ४२ ।

कुरुगार्हपतादीनां दासी भारादीनाञ्च पूर्वपदं प्रकृत्या । कुरुगार्हपतम्(५) ( कुरु वृज्योर्गार्हपत इति वक्तव्यम् ) ।

---

१ महच्छब्दोऽन्तोदात्त स्तस्य प्रतिपदोक्ते यस्समासः सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैरिति तत्रैव स्वर स्तेनैषां षष्ठीसमासेऽन्तोदात्त एव भवति ।

१ क्षुधं लातीति क्षुल्लस्तस्मा दज्ञातादिषु के ऽन्तोदात्तः ।

२ उष्ट्र शब्द उषेष्ट्रन् प्रत्ययान्तः नित्स्वरेणाद्युदात्तः । कर्मधारयोयं समासः षष्ठी समासो वा ।

३ गमेर्डो रित्यन्तोदात्तोऽयं गो शब्दः षष्ठीसमासश्चात्र ।

४ कृ ग्रोरुच्चेति कुरु शब्दः कु प्रत्ययान्तो ऽन्तोदात्तः षष्ठी समासश्च । रिक्ते विभाषेति पूर्वपदमाद्युदात्तमन्तोदात्तं वा । रिक्तगुर्वादय स्त्रयः कर्मधारयाः असूता

कुरुगार्हपतम् । वृजि गार्हपतम् । पण्यकम्बलः ( संज्ञायामिति वक्तव्यम् ) अन्यत्र पणितव्ये कम्बले समासान्तोदात्तत्व मेव । प्रतिपदोक्ते समासे द्वितीया कृत्या इत्येषस्वरोविहितः । दास्याभारो दासीभारः ।

## चतुर्थी तदर्थे । ४३ ।

चतुर्थ्यन्तं पूर्व पदं प्रकृत्या तदर्थे उत्तरपदे । यूपायदारु(१)। कुण्डलहिरण्यम् ।

## अर्थे । ४४ ।

चतुर्थ्यन्तं पूर्वपदं प्रकृत्या अर्थे । मात्रार्थम्(२) पित्रर्थम् । देवतार्थम् । अतिथ्यर्थम् ।

## क्ते च । ४५ ।

चतुर्थ्यन्तं पूर्वपदं प्रकृत्या क्तान्ते । गोहितम्(३) । अश्वहितम् । मनुष्यहित मित्यादि ।

## कर्मधारयेऽनिष्ठा । ४६ ।

---

श्लीलशब्दो नञ् समासत्वादाद्युदात्तौ पारशब्दो घृतादित्वा दन्तोदात्तः निपातनादि वार्थे समासो विभक्त्यलोपश्च । पारे मध्य इति अव्ययीभावस्तु न । तथा सति सूत्रे दीर्घ निर्देशो ऽयुक्तः स्याद् वडवाया पारस्यासम्भवत्र च । तितिलिनोऽपत्यं छात्रो वा इत्यणन्तस्तैतिल शब्दः षष्ठीसमासः । पण्यशब्दोऽवद्यपण्येति यदन्तो यतो नाव इत्याद्युदात्तः । कर्म्मधारयथम् । दसेष्टीन आच इति टित्वान्ङीप् उदात्तनिवृति स्वरेण दासी शब्द ऽन्तोदात्तः । दास्याभारो दासी भारः । षष्ठीसमासोऽयम् ।

१ निदिति दीर्घश्चेत्यनुवर्तमाने कुयुभ्याञ्च इति पः । नित्वादाद्युदात्तो यूपशब्दः चतुर्थीदतर्थार्थेति समास ।

२ मातृ पितृ शब्दौ, अन्तोदात्त वुणादिषु निपातितौ । देवताशब्दोलित्स्वरेण मध्योदात्तः । अतिथिरिति अतेरिथिन्निति, इथिन्प्रप्रत्ययान्त आद्युदात्तः । तादर्थ्येचतुर्थी । चतुर्थी तदर्थार्थेतिसमासः ।

३ गोशब्दोऽन्तोदासः । अश्वशब्द आद्युदात्तो मनुष्यशब्दोन्तस्वरितः । चतुर्थीचाशिष्येति चतुर्थी । गोभ्योरक्षितमित्यत्र सम्प्रदाने चतुर्थी । । चतुर्थीतदर्थार्थेति समासः ।

कर्मधारयेऽनिष्ठान्तम् पूर्वपदं प्रकृत्या क्तान्त उत्तरपदे। श्रेणिकृताः(१) ऊककृताः। पूगकृताः। निधनकृताः।

## अहीने द्वितीया । ४७ ।

अहीनवाचिनि समासे द्वितीयान्तं पूर्वपदं प्रकृत्या क्तान्ते। कष्टश्रितः(२)। त्रिशकलपतितः। ग्रामगतः। ( 'अहीने' द्वितीयानुपसर्ग इति वक्तव्यम् ) नेह सुखप्राप्तः। दुःखप्राप्तः।

## तृतीया कर्मणि । ४८ ।

तृतीयान्तं पूर्वपदं प्रकृत्या कर्मवाचिनिक्तान्ते। अहिहत (३)। रुद्रहतः। महाराजहतः। नखनिर्भिन्ना। दात्रलूना।

## गतिरनन्तरः । ४९ ।

अनन्तरगतिः पूर्वपदं प्रकृत्या कर्मवाचिनि क्तान्ते। प्रकृतः(४)। प्रहृतः।

## तादौ च निति कृत्यतौ । ५० ।

अनन्तरगतिः पूर्वपदं प्रकृत्या तुभिन्नेतादौनितिकृति। प्रकर्त्ता(५)। प्रकतुम्। प्रकृतिः।

## तवै चान्तश्च युगपत् । ५१ ।

---

१ वहिःश्रि यु दु ग्लाहा त्वरिभ्यो नित् इति नि प्रत्ययस्य नित्वादाद्युदात्तः श्रेणिशब्द। मुदिग्रोर्गगौ बाहुलकात् पूञोऽपि। गक् प्रत्ययान्तः पूगशब्दोऽन्तोदात्तः। श्रेण्यादयः। कृतादिभिरित समासः।

२ क्तान्तत्वात्कष्टशब्दोऽन्तोदात्तः। त्रीणिशकलान्यस्येति त्रिशकलः। बहुव्रीहिस्वरेणाद्युदात्तः ग्रसेरा च इति मन्प्रत्ययान्तो ग्रामशब्द आद्युदात्तः। द्वितीयाश्रितेति समासः

३ आङि श्रि हनिभ्यां ह्रस्वश्चेति, अहिरन्तोदात्तोऽव्युत्पादितः। केचित्त्वाद्युदात्तमिच्छन्ति। रोदेर्णिलुक्चेति रक् प्रत्ययान्तो रुद्रशब्दः। राजाहः सखिभ्यष्टजिति टजन्तो महाराजशब्दोऽन्तोदात्तः। कुगतिप्रादय इति समासः।

४ निपाता आद्युदात्ता इत्याद्युदात्तः प्रशब्दः। थाथेत्यस्यापवादोऽयम्।

५ कृत्स्वरापवादोऽयम्। अत्रापि पूर्ववदेव स्वरः समासश्च।

तवैप्रत्ययश्च तोऽनन्तरगतिश्च युगपत् प्रकृत्या। अन्वेतवै(१)। परिस्तरितवै। परिपातवै। तस्मात्पितानाभिचरितवै।

## अनिगन्तोऽञ्चतौवप्रत्यये ।५२।

वप्रत्ययान्तेऽञ्चतावनिगन्तो गतिः प्रकृत्या। प्राङ्। प्राञ्चौ। प्राञ्चः। पराङ्(२)। पराञ्चौ। पराञ्चः।

## न्यधी च ।५३।

वप्रत्ययान्तौ न्यधी प्रकृत्या। न्यङ्। न्यञ्चौ। न्यञ्चः। अध्यङ्। अध्यञ्चौ अध्यञ्चः।

## ईषदन्यतरस्याम् ।५४।

ईषत् पूर्वपदं प्रकृत्या वा। ईषत्कडारः(३)। ईषत्कडारः। ईषत् पिङ्गलः। ईषत्पिङ्गलः।

## हिरण्यपरिमाणन्धने ।५५।

हिरण्यपरिमाणवाचि पूर्वपदं प्रकृत्या वा धने। द्विसुवर्णधनम्(४)। द्विसुवर्णधनम्।

## प्रथमोऽचिरोपसम्पत्तौ ।५६।

प्रथमः पूर्वपदं प्रकृत्या वा अचिरोपसम्पत्तौ गम्यमानायाम्। प्रथम(५) वैयाकरणः। अभिनववैयाकरणः। सम्प्रति व्याकरणमध्येतुं प्रवृत्त इत्यर्थः।

---

१ कृत्स्वरापवादः। उपसर्गश्चाभिवर्जमित्यनुराद्युदात्तः।

२ प्राङित्यत्र स्वरिता वाऽनुदात्तेपदादावित्ययमेकादेश उदात्तः स्वरितो वापराशब्द आद्युदात्तः। ऋत्विगित्यादिना क्विन्। उदात्तस्वरितयोर्यण इति अञ्चतेरकारः स्वरितः। कृत्स्वरापवादः।

३ फिट् स्वरेणान्तोदात्त ईषच्छब्दः। एतदभावे समासान्तोदात्तत्वम्। ईषदकृतेति समासः।

४ द्वे सुवर्णे परिमाणमस्य द्विसुवर्णं तदेव धनमिति कर्मधारयः। बहुव्रीहावपि परत्वाद् विकल्प एव। पक्षे समासस्वरः।

५ प्रथम शब्दः प्रथेरमजिति जित्वादन्तोदात्तः।

## कतरकतमौ कर्मधारये । ५७ ।

कर्मधारये कतरशब्दः कतमशब्दश्च पूर्वपदं प्रकृत्या वा । कतरकठः(१) । कतरकठः । कतमकठः । कतमकठः ।

## आर्यो ब्राह्मणकुमारयोः । ५८ ।

आर्यः पूर्वपदं प्रकृत्या वा कर्मधारये ब्राह्मणकुमारयोः । आर्यब्राह्मणः(२) । आर्यब्राह्मणः । आर्यकुमारः आर्यकुमारः ।

## राजा च । ५९ ।

कर्मधारये राजा पूर्वपदं प्रकृत्या वा ब्राह्मणकुमारयोः । राजब्राह्मणः(३) । राजब्राह्मणः । राजकुमारः । राजकुमारः ।

## षष्ठी प्रत्येनसि । ६० ।

षष्ठ्यन्तो राजा पूर्वपदं प्रकृत्या वा प्रत्येनसि । राजप्रत्येनाः(४) । राजप्रत्येनाः ।

## क्ते नित्यार्थे । ६१ ।

नित्यार्थे समासे पूर्वपदं प्रकृत्या वा क्तान्ते । नित्यप्रहसितः(५) । नित्यप्रहसितः । सततप्रहसितः । सततप्रहसितः ।

## ग्रामः शिल्पिनि । ६२ ।

---

१ कतर कतमौ—डतर डतमयोश्चित्वादन्तोदात्तौ । कतरकतमौ जातिपरिप्रश्ने—इति प्रतिपदोक्तोयः समासस्तस्यैवग्रहणम् । सचकर्मधारय एव । तस्मात्कर्मधारयग्रहणमुत्तरार्थम् ।

२ आर्य्यशब्दो ण्यदन्तत्वात्तित्स्वरितमित्यनेनान्त स्वरितः ।

३ राजशब्दः कनिन् प्रत्ययान्तत्वादाद्युदात्तः । राजशब्दो ब्राह्मणेताद्धर्म्याद्वर्तते—इति समानाधिकरण्यात्कर्मधारयः ।

४ प्रतिगतमेनः पापं यस्य प्रत्येनाः । राज्ञः प्रत्येनाः राज प्रत्येनाः राजन् शब्दे स्वरस्तूक्त एव ।

५ नित्य शब्दस्त्यब्नेध्रुवे—इति त्यबन्त आद्युदात्तः । हसित इति थाथादिस्वरेणान्तोदात्तः । काला इति द्वितीयासमासोऽयम् । द्वितीयापुनरत्यन्तसंयोगे ।

ग्राम पूर्वपदं प्रकृत्या वा शिल्पिवाचिन्युत्तरपदे । ग्रामनापितः(१ । ग्रामनापितः ।

## राजा च प्रशंसायाम् । ६३ ।

राजा पूर्वपदं प्रकृत्या वा शिल्पिवाचिन्युत्तरपदे प्रशंसायां गम्यमानायाम् । राजनापितः(२) । राजनापितः ।

## आदिरुदात्त । ६४ ।



अधिकारोयम् ।

## सप्तमीहारिणौ धर्म्मेऽहरणे । ६५ ।

हरणभिन्ने धर्म्म्यवाचिन्युत्तरपदे सप्तम्यन्तं हारिवाचि च पूर्वपदं आद्युदात्तम् । स्तूपेशाणः । मुकुटे कार्षापणम्(३) । हलेद्विपदिका । हलेद्विपदिका । दृषदिमाषकः । याज्ञिकाश्वः ।

## युक्ते च । ६६ ।

युक्तवाचिनि समासे पूर्वपदमाद्युदात्तम् । गोवल्लवः । अश्ववल्लवः । गोमणिन्दः । अश्वमणिन्दः । गोसंख्यः । अश्वसंख्यः ।

## विभाषा ऽध्यक्षे । ६७ ।

अध्यक्ष उत्तरपदे पूर्वपदमाद्युदात्तं वा । गवाध्यक्षः(४) । गवाध्यक्षः । अश्वाध्यक्षः । अश्वाध्यक्षः ।

## पापञ्च शिल्पिनि । ६८ ।

शिल्पिवाचिन्युत्तरपदे पूर्वपदमाद्युदात्तं वा । पापनापितः(५) । पापना-

---

१ ग्रसेराच, इतिमनिन्, नित्वादाद्युदात्तो ग्रामशब्दः षष्ठीसमासश्च ।

२ राजशब्दे स्वर उक्तः । कर्मधारये राजगुणाध्यारोपेणोत्तरपदार्थस्य प्रशंसा । षष्ठीसमासेत्व राजयोग्यता तस्य प्रशंसा ।

३ मुकुटे कार्षापणमित्यत्र संज्ञायामितिसप्तमीसमासः । कारनाम्निचेत्यलुक् याज्ञिकाश्व इत्यत्र षष्ठीसमासः ।

४ अध्यक्षशब्दो युक्तवाच्येवेति प्राप्तविभाषेयम् । षष्ठीसमासः ।

५ पापणक इति प्रतिपदोक्तस्येव ग्रहणात् षष्ठीसमासे न ।

पितः । पापकुलालः । पापकुलालः ।

## गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे ।६९।

गोत्रान्ते वासिवाचिनोर्माणवब्राह्मणयोश्च क्षेपवाचिनि समासे पूर्वपदाद्युदात्तम् । भार्या(१) सौश्रुतः । कुमारीदाक्षा । कम्बलचारायणीयाः । घृतरौढीयाः । भिक्षामाणवः । दासीब्राह्मणः । वृषलीब्राह्मणः ।

## अङ्गानि मैरेये ।७०।

मैरेयाङ्गवाचि पूर्वपदमाद्युदात्तं मैरेय उत्तरपदे गुडमैरेयः(२) । मधुमैरेयः ।

## भक्ताख्यास्तदर्थेषु ।७१।

भक्तवाचि पूर्वपदमाद्युदात्तं तदर्थेषु, उत्तरपदेषु । भिक्षावासः(३) । भक्तकंसः । श्राणाकंसः ।

## गोबिडालसिंहसैन्धवेषूपमाने ।७२।

उपमानवाचिषु गवादिषु उत्तरपदेषु पूर्वपदमाद्युदात्तम् । धान्यगवः(४) हिरण्यगवः । भिक्षाबिडालः । तृणसिंहः । सक्तुसैन्धवः ।

## अके जीविकार्थे ।७३।

जीविकार्थवाचिसमासेऽकप्रत्ययान्ते उत्तरपदे पूर्वपदमाद्युदात्तम् ।

---

४ भार्य्या प्रधानः सौश्रुत इति शाकपार्थिवादित्वादुत्तरपदलोपी समासः । कुमारीदाक्षाः । अत्रापिपूर्ववदेव समासः । दासीब्राह्मणः, वृषलीब्राह्मणः, इत्यत्र तृतीयेतियोगविभागात्समासः ।

१ सुराव्यतिरिक्तं मद्यं मैरेयम् । षष्ठीसमासः ।

२ वहुवचनात्स्वरूपविधि निरासेसिद्धे, आख्याग्रहणं भक्ष्यविशेषवाचिनां भिक्षादीनां ग्रहणार्थम् । अन्यथापर्य्यायाणामेवान्नादीनं ग्रहणं स्यात् । भिक्षावासादयः । षष्ठीसमासाः । तादर्थ्ये चतुर्थी समासस्तु न भवति । प्रकृतिविकार एवतस्येष्टत्वात् ।

३ धान्यंगौरिवेति विगृह्य व्याघ्रादेराकृतिगणत्वादुपमितंव्याघ्रादिभिरिति समासः । अत्रोपमितसमासे गोरतद्धितलुकीतिटच् पूर्वपदाद्युदात्तविधानसामर्थ्यादच्चश्चित्स्वरोबाध्यते ।

दन्तलेखकः। नखलेखकः अवस्करशोधकः। रमणीयकारकः।

## प्राचां क्रीडायाम् ।७४।

प्राग्देशवर्ति क्रीडावाचिसमासेऽकप्रत्ययान्ते उत्तरपदे पूर्वपदम् आद्यु-दात्तम्। उद्दालक(१) पुष्पभञ्जिका। वीरणपुष्पप्रचायिका। शालभञ्जिका। तालभञ्जिका।

## अणि नियुक्ते ।७५।

नियुक्तवाचिसमासेऽण्णन्ते उत्तरपदे पूर्वपदमाद्युदात्तम्। छत्रधारः(२) तूणीधारः। कमण्डलुग्राहः। भृङ्गारधारः।

## शिल्पिनि चाकृञः[३] ।७६।

शिल्पिवाचि समासे अण्णन्ते उत्तरपदे पूर्वपदमाद्युदात्तम् न चेदण् कृञः परः। तन्तुवायः। वालवायः।

## सञ्ज्ञायाञ्च ।७७।

अण्णन्ते उत्तरपदे पूर्वपदमाद्युदात्तं नचेदण् कृञः परः संज्ञायाम्॥ तन्तुवायो नाम कीटः। वालवायो नाम पर्वतः।

## गोतन्तियवम्पाले[४] ।७८।

गवादि पूर्वपदमाद्युदात्तं पाले उत्तरपदे। गोपालः। तन्तिपालः। यव-पालः।

## णिनि ।७९।

णिन्यन्ते उत्तरपदे पूर्वपदमाद्युदात्तम्। पुष्पहारी। फलहारी। पर्ण-हारी।

---

४ संज्ञायामिति ण्वुल् नित्यंक्रीडेति समासश्च। अजीविकार्थमिदंसूत्रम्।

१ छत्रधारादिषु कर्म्मण्यण् उपपदसमासश्च।

२ नियुक्तेचेत्येव सिद्धे कृञ प्रतिषेधार्थं वचनम्। तन्तुवाय इत्यत्र–ह्वावामश्चेत्यण्। आतोयुक्।

३ अनियुक्तार्थ आरम्भः। गाः पालयतीति विग्रहः।

## उपमानं शब्दार्थप्रकृतावेव । ८० ।

उपमानवाचि पूर्वपदमाद्युदात्तं शब्दार्थप्रकृतावेव णिन्यन्ते उत्तरपदे। उष्ट्रक्रोशी । ध्वांक्षरावी । खरनादी ।

## युक्तारोह्यादयश्च[1] । ८१ ।

युक्तारोह्यादय आद्युदात्ताः । युक्तारोही । आगतरोही । आगतयोधी। आगतवञ्ची ।

## दीर्घकाशतुषभ्राष्ट्रवटञ्जे । ८२ ।

दीर्घान्तं काशादि च पूर्वपदमाद्युदात्तं जे उत्तरपदे । कुटीजः । शमीजः । काशजः । तुषजः । भ्राष्ट्रजः । वटजः ।

## अन्त्यात्पूर्वं बह्वचः । ८३ ।

बह्वचः पूर्वपदस्यान्त्यात्पूर्वमुदात्तं जे उत्तरपदे । उपसरजः । मन्दुरजः । आमलकीजः(२) । वडवाजः ।

## ग्रामेऽनिवसन्तः । ८४ ।

अनिवसद्वाचि पूर्वपदमाद्युदात्तं ग्रामे उत्तरपदे । मल्लग्रामः । वणिग्ग्रामः ।

## घोषादिषु च । ८५ ।

घोषादिषूत्तरपदेषु पूर्वपदमाद्युदात्तम् । दाक्षिघोषः । दाक्षिकटः । दाक्षिपल्वलः । इत्यादि ।

## छात्र्यादयः शालायाम् । ८६ ।

---

१ समासस्वरापवादे कृत्स्वरं प्राप्ते तदपवादे मन्क्तिन्निति तदपवादोयम् युक्तारोहीत्यत्र णिनीत्येवसिद्धे पूर्वोत्तरपदनियमार्थं सूत्रम् । यत्र युक्तादीन्येवपूर्वपदानिआरोह्यादीन्येवोत्तरपदानि तत्रैवयथास्यात् । क्षीर होता—याजकादित्वात् षष्ठी समासः ।

२ आमलकीज इत्यत्र दीर्घ काशेति वाधित्वा परत्वादयं स्वरः ।

छात्र्यादि पूर्वपदमाद्युदात्तं शालायामुत्तरपदे। छात्रिशाला(१)। ऐलिशाला। भाण्डिशाला।

## प्रस्थेऽवृद्धमकर्क्यादीनाम्। ८७।

कर्क्यादिभिन्नमवृद्धं पूर्वपदमाद्युदात्तं प्रस्थे उत्तरपदे। इन्द्रप्रस्थः। कुण्डप्रस्थः। ह्रदप्रस्थः। सुवर्णप्रस्थः।

## मालादीनाञ्च। ८८।

मालादीनामादिरुदात्तः प्रस्थे उत्तरपदे। मालाप्रस्थः। शालाप्रस्थः।

## अमहन्नवन्नगरेऽनुदीचाम्। ८९।

महन्नवभिन्नं पूर्वपदमाद्युदात्तं वा नगरे उत्तरपदे। सुह्मनगरम्। पुण्ड्रनगरम्। विराटनगरम्।

## अर्मे चावर्णं द्व्यच् त्र्यच्। ९०।

अवर्णान्तंद्व्यच्त्र्यच्च पूर्वपदमाद्युदात्तं अर्मे उत्तरपदे। दत्तार्मम्। गुप्तार्मम्। कुक्कुटार्मम्। वायसार्मम्।

## न भूताधिकसञ्जीवमद्राश्मकज्जलम्[२]। ९१।

भूतादीनि पूर्वपदान्याद्युदात्तानि न अर्मे उत्तरपदे। भूतार्मम्। अधिकार्मम्। सञ्जीवार्मम्। मद्रार्मम्। अश्मार्मम्। इत्यादि। (आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम्) दिवोदासाय गायते। वध्र्यश्वाय दाशुषे।

---

१ विभाषा सेनासुरा—इत्यादिना शालान्तस्य तत्पुरुषस्य विभाषा नपुंसकत्वमुक्तम्—तत्रास्यावकाशो यो नपुंसकलिङ्गो नभवति छात्रिशाला। तत्पुरुषेशालायामित्यस्यावकाशो यश्छात्र्यादि पूर्वो न भवति प्रभुशालम्। यस्तुछात्र्यादि पूर्वपदो नपुंसकलिङ्गश्च तत्रैकदेशविकृतस्यानन्यत्वादयमपिप्राप्नोति तत्पुरुषे शालायामित्ययञ्च। तत्र-पूर्वविप्रतिषेधादयमेव भवतीति वामन हरदत्तौ। भाष्येतुनैतद् दृश्यते।

२ निषेधे समासान्तोदात्तमेव। मद्राश्मग्रहणम् संघातविग्रहीतार्थम्। मद्राश्मार्ममित्यपियथा स्यादिति वृत्तिः। भाष्येऽदर्शनादसङ्गतमेतदित्याहुरन्ये।

## अन्तः ।९२।

अधिकारोऽयंप्रागुत्तरपदात् ।

## सर्वं गुणकात्स्न्र्ये ।९३।

गुणकात्स्न्र्ये(१) सर्वं पूर्वपदम् अन्तोदात्तम् । सर्वकृष्णः । सर्वमहान् ।

## संज्ञायां गिरिनिकाययोः ।९४।

गिरिनिकाययोरुत्तरपदयोः पूर्वपदमनुदात्तं संज्ञायां विषये । अञ्जनागिरिः(२) । शापिण्डिनिकायः ।

## कुमार्यां वयसि ।९५।

वयसि गम्यमाने पूर्वपदमन्तोदात्तं कुमार्यामुत्तरपदे । वृद्धकुमारी(३) । जरत्कुमारी ।

## उदकेऽकेवले ।९६।

अकेवले समासे पूर्वपदमन्तोदात्तं उदके उत्तरपदे । गुड़ोदकम्(४) । तिलोदकम् ।

## द्विगौ क्रतौ ।९७।

क्रतुवाचिनि समासे पूर्वपदमन्तोदात्तं द्विगौ उत्तरपदे । गर्गत्रि-

---

१ श्वेतादिगुणेन सर्वावयवानांव्याप्तिरिति गुणकात्स्न्र्यंवृत्तिरत्र सर्वशब्दः । गुणान्तरेण तरलोपश्चेति समासस्तरप्रत्ययलोपश्च, सर्वमहानित्यत्र सर्वशब्दस्यपूज्यमानार्थत्वाभावात्पूर्वकालैकेत्येन समासः ।

२ वनगिर्योः संज्ञायामितिदीर्घः ।

३ विशेषणसमासः । पुम्वत्कर्मधारयेति पुम्वद्भावः । कुमारीशब्दः पुंसा सहासम्प्रयोगमात्रं प्रवृत्तिनिमित्तमुपादाय प्रयुक्तोवृद्धादिभिः समानाधिकरणस्तच्च वय इहगृह्यते न कुमारत्वमेव ।

४ गुडोदकमित्यादिषु कर्मधारयः, स्वरेकृते, एकादेशः स्वरितेवानुदात्ते पदादावितिपक्षे स्वरितो भवति ।

रात्रम्(१) । चारकत्रिरात्रः ।

## सभायां नपुंसके । ९८ ।

नपुंसकलिङ्गे समासे पूर्वपदमन्तोदात्तं सभायामुत्तरपदे । पशुसभम् स्त्रीसभम् । दासीसभम् ।

## पुरे प्राचाम् । ९९ ।

प्राचांदेशे पूर्वपदमन्तोदात्तं पुरे उत्तरपदे । ललाटपुरम्(२) । काञ्चीपुरम् । शिवदत्तपुरम् ।

## अरिष्टगौडपूर्वे च । १०० ।

अरिष्टगौडपूर्वे समासे पूर्वपदमन्तोदात्तं पुरे । अरिष्टपुरम् । गौडपुरम् ।

## न हास्तिनफलकमार्देयाः । १०१ ।

हास्तिनादीनि पूर्वपदानि अन्तोदात्तानि न पुरे । हास्तिनपुरम् । फलकपुरम् । मार्देयपुरम्(३) ।

## कुसूलकूपकुम्भशालं बिले । १०२ ।

कुसूलादीनि पूर्वपदान्यन्तोदात्तानि बिले उत्तरपदे । कुसूलबिलम् । कूपबिलम् । कुम्भबिलम् । शालाबिलम् ।

## दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु । १०३ ।

दिक्शब्दाः पूर्वपदभूता अन्तोदात्ता ग्रामादिषु चानराटेषुच उत्तरपदे पूर्वेषु कामशमी(४) । अपरेषुकामशमी । पूर्वकृष्णमृत्तिका । अपरकृष्ण-

---

१ तिसृणां रात्रीणां समाहारस्त्रिरात्रम् । अहः सर्वैकदेश इत्यादिना च समासान्तः । संख्यापूर्वं रात्रं क्लीवमिति क्लीवत्वम् । त्रिरात्रशब्दे न च षष्ठीसमासः ।

२ स्वतन्त्राकारान्तपुरशब्दस्य ऋक्पूरित्यप्रत्ययान्तस्य च ग्रहणमविशेषात् ।

३ पुरेप्राचामितिप्राप्तः प्रतिषिध्यते । मार्देयपुरमित्यत्र पूर्वं मृदुशब्दः शुभ्रादित्वाड्ढकि लोपोऽकद्रुवा इत्युकार लोपः मृदोरपत्यं मार्देयइति । पुरशब्दे न समासः ।

४ पूर्वेषु कामशमी । अपरेषु कामशमी । एतयोर्दिक्संख्येतिसमासः । पूर्वयायातमित्यादिषुच पूर्वापरेतिसमासो बोध्यः ।

मृत्तिका । पूर्वपञ्चालाः । अपरपञ्चालाः पूर्वाधिरामम् । पूर्वायायातम् । पूर्वाधिरामकम् । अपरयायातम् । पूर्वचानराटम् ।

## आचार्य्योपसर्जनश्चान्तेवासिनि । १०४ ।

आचार्योपसर्जननान्तेवासिवाचिन्युत्तरपदे दिक्शब्दा अन्तोदात्ताः पूर्वपाणिनीयाः । अपरपाणिनीयाः । पूर्वकाशकृत्स्नाः । अपरकाशकृत्स्नाः ।

## उत्तरपदवृद्धौ सर्वञ्च । १०५ ।

उत्तरपदस्येत्यधिकृत्यया वृद्धिस्तद्वत्युत्तरपदे सर्वं पूर्वपदमन्तोदात्तं । सर्वपाञ्चालकः(१) ।

## बहुव्रीहौ विश्वं संज्ञायाम् । १०६ ।

बहुव्रीहौ समासे विश्वं पूर्वपदमन्तोदात्तं संज्ञायाम् । विश्वदेवः(३) ।

## उदराश्वेषुषु । १०७ ।

बहुव्रीहौ समासे उदरादिषु उत्तरपदे संज्ञायाम् । वृकोदरः(४) । दामोदरः । हर्यश्वः यौवनाश्वः ।

## क्षेपे । १०८ ।

बहुव्रीहौक्षेपेगम्यमाने उदरादिषु पूर्वपदमन्तोदात्तम् । कुण्डोदरः(५) । घटोदरः । कटुकाश्वः । स्पन्दिताश्वः । अनिघातेषुः । चलाचलेषुः ।

---

१ इसर्वार्धदिक्शब्दस्येति तदन्तविधौ । अवृद्धादपि बहुवचनविषयादिति वुञ् । सुसर्वार्धा जनपदस्य दिशोऽमद्राणामित्युत्तरपदवृद्धिः ।

२ पूर्वपद प्रकृतिस्वरेण प्राप्तस्याद्युदात्तस्यापवादः ।

३ विशे-क्वन् नित्वादाद्युदात्तो विश्व शब्द आसीत् ।

४ वृक शब्दः प्राणिनां कुपूर्वाणामित्याद्युदात्तः । दाम शब्दो मनिन् प्रत्ययान्तत्वादाद्युदात्तः । हरतेः सर्वधातुभ्य इतन् । आद्युदात्तो हरिशब्दः हरिश्वो यस्य स हर्यश्वः । यणि कृते उदात्तस्वरितयोरिति स्वरितः । यौवन शब्दोऽव्युत्पन्नं प्रातिपदिकं लघावन्ते द्वयोश्च बह्वषो गुरुरित्याद्युदात्तः ।

५ कुण्ड शब्दो नब्विषयस्यानिसन्तस्येत्याद्युदात्तः । घट शब्दः पचाद्यजन्तः ।

## नदी बन्धुनि । १०९ ।

बहुव्रीहौ बन्धुन्युत्तरपदे नद्यन्तं पूर्वपदमन्तोदात्तं । गार्गीबन्धुः(६) । वात्सीबन्धुः ।

## निष्ठोपसर्गपूर्वमन्यतरस्याम् । ११० ।

बहुव्रीहौ उपसर्गपूर्वं निष्ठान्तं पूर्वपदमन्तोदात्तं वा । प्रधौतमुखः(१) । प्रधौतमुखः । प्रक्षालितपादः । प्रक्षालितपादः ।

## उत्तरपदाऽऽदिः । १११ ।

अधिकारोऽयमुत्तरपदस्येत्यापादपरिसमाप्तेरादिरिति प्रकृत्या भगालमितियावत् ।

## कर्णो वर्णलक्षणात् । ११२ ।

बहुव्रीहौ वर्णवाचिनो लक्षणवाचिनश्च कर्णमुत्तरपदमाद्युदात्तम् । शुक्लकर्णः । कृष्णकर्णः । दात्राकर्णः । शङ्कुकर्णः ।

## संज्ञौपम्ययोश्च । ११३ ।

संज्ञायामौपम्ये च यो बहुव्रीहिस्तत्र कर्ण उत्तरपदे आद्युदात्तम् । कुश्चिकर्णः । मणिकर्णः । गोकर्णः । खरकर्णः ।

## कण्ठपृष्ठग्रीवाजङ्घञ्च । ११४ ।

बहुव्रीहौ कण्ठादीन्युत्तरपदानि आद्युदात्तानि संज्ञौपम्ययोः । शितिकण्ठः(३) । नीलकण्ठः । खरकण्ठः । उष्ट्रकण्ठः । काण्डपृष्ठः । नाकपृष्ठः ।

---

६ गार्गीवात्सीशब्दौ ञित्स्वरेणाद्युदात्तौ ।

१ प्रक्षालितप्रधौतशब्दौ गतिस्वरेणाद्युदात्तौ ।

२ शङ्कुः कर्णोयस्येति विग्रहः । सप्तमी विशेषण इति सप्तम्यन्तस्य पूर्वनिपाते प्राप्ते गड्वादेः परासप्तमीति पर निपातः कर्णोलक्षणस्येतिदं र्घश्च ।

३ कण्ठ पृष्ठ शब्दौ स्वाङ्गशिटामित्याद्युदात्तौ । ग्रीवाजङ्घयोः स्वाङ्गत्वेऽप्यदन्तत्वाभावादन्तोदात्तत्वम् ।

गोपृष्ठः । अजपृष्ठः । सुग्रीवः । नीलग्रीवः । दशग्रीवः गोग्रीवः । अश्वग्रीवः । नाड़ीजङ्घः । तालजङ्घः । गोजङ्घः अश्वजङ्घः ।

## शृङ्गमवस्थायाञ्च ।११५।

बहुव्रीहौ शृङ्गमुत्तरपदं आद्युदात्तम् अवस्थायां संज्ञौपम्ययोश्च । उद्गत शृङ्गः । द्व्यङ्गुलशृङ्गः । त्र्यङ्गुलशृङ्गः । ऋष्यशृङ्गः । गोशृङ्गः । मेषशृङ्गः ।

## नञो[1] जरमरमित्रमृताः ।११६।

बहुव्रीहौ नञ उत्तरे जरादय आद्युदात्ताः । अजरः । अमरः । अमित्रः । अमृतः ।

## सोर्मनसो[2] अलोमोषसी ।११७।

बहुव्रीहौ सोरुत्तरं मन्नन्तमसन्तञ्च आद्युदात्तम् लोमोषसी वर्ज्जयित्वा । सुकर्म्मा । सुधर्म्मा । सुप्रथिमा । सुपयाः । सुयशाः । सुस्रोताः । सुश्रत् । सुध्वत् ।

## क्रत्वादयश्च ।११८।

बहुव्रीहौ सोरुत्तराः क्रत्वादयः आद्युदात्ताः । सुक्रतुः । सुदृशीकः ।

## आद्युदात्तं द्व्यच्छन्दसि ।११९।

बहुव्रीहौ सोरुत्तरमाद्युदात्तं द्व्यजुत्तरपद माद्युदात्तं छन्दसि । स्वश्वास्त्वासुरथा मर्ज्जयेम ।

## वीरवीर्यौ च ।१२०।

---

१ नञ् सुभ्यामित्यस्यापवादः ।

२ अयमपि नञ् सुभ्यामित्यस्यैवापवादः । सुकर्म्मेत्यत्र तु आद्युदात्तद्व्यच्छन्दसीत्यनेनापि सिद्धं तथापि सुप्रथिमेत्यादिबह्वजर्थमच्छन्दोऽर्थञ्च सूत्रंबोध्यम् ।

बहुव्रीहौ वीरवीर्यौ सोरुत्तरावाद्युदात्तौ छन्दसि । सुवीरेणते । सुवीर्यस्य पतयःस्याम ।

## कूलतीरतूलमूलशालाऽक्षसममव्ययीभावे[1] । १२१ ।

अव्ययीभावे कूलादीन्युत्तरपदानि आद्युदात्तानि । परिकूलम् । परितीरम् । परितूलम् । परिमूलम् । परिशालम् । उपाक्षम् । सुषमम् ।

## कंसमन्थशूर्पपाय्यकाण्डं द्विगौ । १२२ ।

द्विगौ कंसादीन्युत्तरपदानि आद्युदात्तानि । द्विकंसः(२) । द्विमन्थः । द्विशूर्पः । द्विपाय्यः । द्विकाण्डः । त्रिकाण्डः ।

## तत्पुरुषे शालायान्नपुंसके । १२३ ।

शालाशब्दान्ते नपुंसकलिङ्गे तत्पुरुषे उत्तरपदमाद्युदात्तम् । ब्राह्मणशालम्(३) । क्षत्रियशालम् ।

## कन्था च । १२४ ।

नपुंसकलिङ्गे तत्पुरुषे कन्था उत्तरपदमाद्युदात्तम् । सौशमिकन्थम्(४) । आह्वरकन्थम् । चप्यकन्थम् ।

---

१ तिष्ठद्गुप्रभृतिष्वेते पठ्यन्ते । तेनाव्ययीभावसंज्ञैषाम् ।

२ द्वाभ्यां कंसाभ्यांक्रीत इतितद्धितार्थे समासः कंसाट्टिठन्निति टिठन् । तस्याध्यर्द्ध पूर्वेतिलुक् । द्विमन्थ इत्यत्र । आर्हाद्गोपुच्छ—इत्यादिना ठक्! द्विशूर्प इत्यत्र च । शूर्पादञन्यतरस्यामित्यञ् । शेषंपूर्ववत् । द्विपाय्यमिति । पाय्यसानाय्य—इत्यादिना पाय्यशब्दः परिमाणवाची निपातितः । तत्र प्राग्वतेष्टक् । द्विकाण्डमिति । द्वे काण्डेप्रमाणमस्य प्रमाणे-द्वयसच् इत्यादिना मात्रच् । प्रमाणेलोद्विगोर्नित्यमितिलुक् ।

३ विभाषा सेनेति नपुंसकता ।

४ शोभनः शमोऽस्य सुशमस्तस्यापत्यं सौशमिस्तस्यकन्था सौशमिकन्थम् । सञ्ज्ञायां कन्थोशीनरेषु इति नपुंसकत्वम् । आह्वरकन्थमित्यत्र आङपूर्वाद् ह्वयते आतश्चोपसर्गे, इति कः ।

## आदिश्चिहणादीनाम् । १२५ ।

नपुंसकलिङ्गे कन्थान्ते तत्पुरुषे चिहणादीनामादिरुदात्तः । चिहणकन्थम् । मकरकन्थम् ।

## चेलखेटकटुककाण्डगर्हायाम् । १२६ ।

तत्पुरुषे चेलाद्युत्तरपदानि आद्युदात्तानि गर्हायाम् । पुत्त्रचेलम्(१) । उपानत्खेटम् । दधिकटुकम् । भूतकाण्डम् ।

## चीरमुपमानम् । १२७ ।

तत्पुरुषे उपमानवाचि चीरमुत्तरपदं आद्युदात्तम् । वस्त्रचीरम् । कम्बलचीरम् ।

## पललसूपशाकम्मिश्रे । १२८ ।

मिश्रवाचितत्पुरुषे पललादीन्युत्तरपदानि आद्युदात्तानि । गुडपललम्(२) । घृतसूपः । घृतशाकम् ।

## कूलसूदस्थलकर्षाः संज्ञायाम् । १२९ ।

तत्पुरुषे कूलादीन्युत्तरपदानि आद्युदात्तानि संज्ञायाम् । दाक्षिकूलम् । देवसूदम् । दाण्डायनस्थली । दाक्षिकर्षः । ग्रामनामधेयान्येतानि ।

## अकर्मधारये राज्यम् । १३० ।

कर्मधारयभिन्नेतत्पुरुषे राज्यमुत्तरपद माद्युदात्तम् । ब्राह्मण राज्यम् । क्षत्रिय राज्यम् ।

## वर्ग्यादयश्च । १३१ ।

अकर्मधारये तत्पुरुषे वर्ज्यादीन्युत्तरपदानि आद्युदात्तानि । वासुदेव-

---

१ चेलादिसादृश्येन पुत्रादीनां गर्हा तत्र पुत्रश्चेलमिवेति विग्रहव्याघ्रादेराकृतिगणत्वादुपमितं व्याघ्रादिभिरिति समासः ।

२ गुडेनमिश्रं पललमितिविग्रहः । भक्ष्येणमिश्रीकरणमिति समासश्च ।

धर्म्यः। वासुदेवपद्वयः।

## पुत्रः पुम्भ्यः ।१३२।

पुंशब्देभ्यः परः पुत्र आद्युदात्तः। कौनटिपुत्रः। माहिषकपुत्रः।

## नाचार्य्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः[1] ।१३३।

आचार्य्याद्याख्येभ्यः परः पुत्रः आद्युदात्तः न। आचार्यपुत्रः। उपाध्याय पुत्रः। शाकटायन पुत्रः। राजपुत्रः। ईश्वरपुत्रः। नन्दपुत्रः। ऋत्विक् पुत्रः। होतुः पुत्रः। संयुक्त पुत्रः। सम्बधि पुत्रः। श्याल पुत्रः। ज्ञाति पुत्रः। भ्रातुष्पुत्रः।

## चूर्णादीन्यप्राणिषष्ठ्याः ।१३४।

तत्पुरुषे प्राणि भिन्नवाचिनः षष्ठ्यन्तात्पराणि चूर्णादीन्युत्तरपदानि आद्युदात्तानि। मुद्गचूर्णम्। मसूरचूर्णम्।

## षट् च काण्डादीनि ।१३५।

तत्पुरुषे अप्राणिवाचिषष्ठ्यन्तात् पराणि काण्डादीनि षडुत्तराणि आद्युदात्तानि। दर्भकाण्डम्। शरकाण्डम्।

## कुण्डं वनम् ।१३६।

वनवाचितत्पुरुषे कुण्डमुत्तरपदमाद्युदात्तम्। दर्भकुण्डम्। शरकुण्डम्।

## प्रकृत्या भगालम् ।१३७।

तत्पुरुषे भगालमुत्तरपदम् प्रकृत्या। कुम्भीभगालम्(२)।

---

१ आख्याग्रहणात् पर्य्यायाणां तद्विशेषाणाञ्च ग्रहणम्। तेन उपाध्याय पुत्र इत्यादयोऽपि।

२ लघावन्तेद्वयोश्चेतिसूत्रान्मध्योदात्ता एते।

## शितेर्नित्या बह्वज् बहुव्रीहावभसत् । १३८ ।

बहुव्रीहौ शितेःपरंवभसद्भिन्नं नित्यमबह्वच् प्रकृत्या । शितिपादः(१)। शित्यंसः । शित्योष्ठः ।

## गतिकारकोपपदात्कृत् । १३९ ।

तत्पुरुषे गतिकारकोपपदात्परं कृदन्तं प्रकृत्या । प्रकारकः(२) । प्रकरणम् । प्रहारकः । प्रहरणम् । इध्मव्रश्चनः । पलाशशातनः : ईषत्करः । दुष्करः । सुकरः ।

## उभे वनस्पत्यादिषु युगपत् । १४० ।

वनस्पत्यादिषु पूर्वोत्तरपदे युगपत्प्रकृत्या । वनस्पतिः(३) । बृहस्पतिः । शचीपतिरित्यादि ।

## देवताद्वन्द्वे च । १४१ ।

देवतावाचि द्वन्द्वे पूर्वोत्तरपदे युगपत् प्रकृत्या । इन्द्रासोमौ(४) । इन्द्रावरुणौ । इन्द्रा बृहस्पती ।

---

१ पादशब्दो वृषादित्वादाद्युदात्तः । अंसोष्ठशब्दौ प्रत्ययस्यनित्वादाद्युदात्तौ ।

२ कुगतिरिति समासः । लित्स्वरेण पूर्वं प्रत्ययाद्युदात्तम् । इध्मव्रश्चन इत्यादौतु प्रवृश्च्यतेयेनेति करणेल्युट् । कर्मषष्ठ्यन्तेन इध्मशब्देन समासः । अत्रगतिप्रयुक्ते कृत्स्वरेकृते कारकप्रयुक्तः कृत्स्वरः । ईषत्करः इत्यादौतु, ईषद्दुःसुषुकृच्छ्रेतिखल् । उभयथापिलित्स्वरः ।

३ वनशब्दो नविषयस्यानिसन्तस्योत्याद्युदात्तः । पति शब्दोऽपि पातेडंतिरितिडति प्रत्ययान्तः प्रत्ययस्वरेणाद्युदात्तः । पारस्करादित्वात्सुट् । बृहस्पतिरित्यत्र तु वर्तमाने पृषन्महदिति, अति प्रत्ययान्तत्वादन्तोदात्तोऽप्यत्राद्युदात्तोनिपात्यते । तद्बृहतोः करपत्योः सुट् त लोपौ । शार्ङ्गरवादित्वान्ङीनिकृते नित्वादाद्युदात्तः शची शब्दः ।

४ ऋज्रेन्द्राग्रेति इन्द्र शब्द आद्युदात्तो निपातितः सोम इति मन् प्रत्ययान्तः । वरुण शब्दः कृवृदारिभ्य उनन् इत्युनन्नन्तः । उभौ, आद्युदात्तौ । देवता द्वन्द्वे चेति पूर्वपदस्या नङ् । बृहस्पति शब्दे वनस्पत्यादित्वाद्द्वावुदात्तौ । तेनेन्द्राबृहस्पतीत्यत्र त्रय उदात्ताः ।

## नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ।१४२।

पृथिव्यादि भिन्ने ऽनुदात्तादावुत्तरपदे देवताद्वन्द्वे पूर्वोत्तरपदे युगपत् प्रकृत्या न । इन्द्राग्नी(१) । इन्द्रवायू ।

## अन्तः ।१४३।

अधिकारोऽयमापादपरिसमाप्तेः ।

## थाथघञ्क्ताजवित्रकाणाम् ।१४४।

थाद्यन्तानामुत्तरपदानां गतिकारकोपपदात्परेषामन्त उदात्तः । सुनीथः(२) । अवभृथः । आवसथः । उपवसथः । प्रभेदः । काष्ठभेदः । रज्जुभेदः । दूरादागतः । विशुष्कः । प्रक्षयः । प्रलवः । प्रवसः । प्रलवित्रम् । गोवृषः ।

## सूपमानात् क्तः ।१४५।

सोरुपमानाच्च गतिकारकोपपदात् परं क्तान्तमुत्तरपदम् अन्तोदात्तम् । सुकृतम्(३) । सुभुक्तम् । सुपीतम् । वृकावलुप्तम् । शशप्लुतम् । सिंहविनर्दितम् ।

## संज्ञायामनाचितादीनाम् ।१४६।

संज्ञायां गत्यादिभ्यः परमाचितादिभिन्नं क्तान्तमन्तोदात्तम् । सम्भूतो रामायणः । उपहूतः शाकल्यः । परिजग्धः कौण्डिन्यः ।

---

१ अग्नि वायु शब्दावन्तोदात्तौ । अग्नि शब्दोऽङ्गे र्निर्नलोपश्चेति नि प्रत्ययान्तः । कृवापेति इत्यादिना युक् प्रत्ययान्तो वायु शब्दः ।

२ सुनीथ अवभृथ शब्दौ हनिकुषीति क्थन् अवेभृञ इति च क्थन् प्रत्ययान्तावेतौ तत्र नित्स्वरेणाद्युदात्तत्वेप्राप्तेऽन्तोदात्तो विधीयते ।

३ सुकृत मित्यादिषु गतिरनन्तर इतिप्राप्ते शशप्लुतमित्यत्रतु तृतीया कर्मणीति प्राप्ते ऽन्तोदात्तः ,

## प्रवृद्धादीनां च । १४७ ।

प्रवृद्धादीनां क्तान्तमन्तोदात्तम् । प्रवृद्धयानम्(१) । प्रवृद्धो वृषलः । प्रयुक्ताः सक्तवः । आकर्षेऽवहितः । अवहितो भोगेषु । खट्वारूढः । कविशस्तः ।

## कारकाद्दत्तश्रुतयोरेवाशिषि । १४८ ।

संज्ञायां कारकात्परौ क्तान्तौ दत्तश्रुतावन्तोदात्तावाशिषि । देवा एनं देयासुर्देवदत्त (२) । विष्णुरेनं श्रूयाद् विष्णुश्रुतः ।

## इत्थंभूतेन कृतमिति[३] च । १४९ ।

इत्थम्भूतेन कृतमित्यर्थे समासे क्तान्तमन्तोदात्तम् । सुप्तप्रलपितम् । उन्मत्तप्रलपितम् । प्रमत्तगीतम् । विपन्नश्रुतम् ।

## अनो भावकर्मवचनः । १५० ।

कारकात्परं भाववचनं कर्मवचनश्चानप्रत्ययान्तम् अन्तोदात्तम् । ओदनभोजनं सुखम् । पयः पानं(४) सुखम् । चन्दनप्रियङ्गुकालेपनं सुखम् । राजभोजनाः शालयः । राजाच्छादनानि वासांसि ।

---

१ संज्ञार्थोऽयमारम्भः संज्ञायान्तु संज्ञायामनाचितादीनामित्येवसिद्धम् । आकृतिगणश्च प्रवृद्धादि र्द्रष्टव्यस्तेन पुनरुत्स्यूत वासोदेयं पुनर्निष्कृतोरथ इत्येवमादि सिद्धम् ।

२. देवदत्तः-विष्णुश्रुतः-इत्यत्र क्तिच् क्तौ च संज्ञायामिति क्तः । तथा च संज्ञायामनाचितादीनामिति विहितमन्तोदात्तत्वमनेन सूत्रेणात्र नियम्यते ।

३ कृतमिति क्रियासामान्ये करोतिर्नाभूतप्रादुर्भाव एव । तेन प्रलपिताद्यपि कृतं भवति तृतीया कर्मणीत्यस्यापवादः ।

४ कर्मणि च येनेति कर्मण्युपपदे भावे ल्युट् । उपपद समासः । राजभोजना इत्यत्र तु कृत्यल्युटो बहुलमिति कर्मणिल्युट् । कर्तरिषष्ठ्या समासः । गतिकारकोपपदात्कृदित्यस्यापवादोऽयं योगः ।

## मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः । १५१ ।

कारकात्पराणि मन्नादीन्यन्तोदात्तानि तत्पुरुषे । रथवर्त्म(१) । पाणिनि कृतिः । अगयन व्याख्यानम् । राजशयनम् । राजासनम् । गोस्थानम् । ब्राह्मणयाजकः । गोक्रीतः ।

## सप्तम्याः पुण्यम् । १५२ ।

सप्तम्यन्तात्परं पुण्यम् मन्तोदात्तम् । अध्ययन २) पुण्यम् ।

## ऊनार्थकलहं तृतीयायाः । १५३ ।

तृतीयान्तात्परमूनार्थं कलहश्चोत्तरपदम् अन्तोदात्तम् । माषोनम्(३) । माषविकलम् । असिकलहः ।

## मिश्रञ्चानुपसर्गमसन्धौ । १५४ ।

तृतीयान्तात् परमनुपसर्गं मिश्रमुत्तरपदमन्तोदात्तम् असन्धौगम्यमाने । गुडमिश्राः(४) । सर्पिर्मिश्राः ।

## नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः । १५५ ।

गुणप्रतिषेधेवर्तमानान्नञः पराणि सम्पाद्याद्यर्थाये तद्धितास्तदन्तानि उत्तरपदान्यन्तोदात्तानि । अकार्णवेष्टकिकम्(५) । अच्छैदिकः । अवत्सीयः ।

---

१ वृतेरधिकरणे मनिन् । कर्तरिषष्ठ्या समासः । पाणिनिकृतिरित्यत्र कर्मणि क्तिन् । पूर्ववत्समासः । व्याख्यानमिति करणे ल्युट् । शयनासनस्थानेष्वधिकरणे ल्युट् । कृत्स्वरापवादोऽयं योगः ।

२ अत्र सप्तमीति योगविभागात्समासस्तत्पुरुषेतुल्यार्थे इति पूर्वपदप्रकृति स्वरत्वं प्राप्तमित्यन्तोदात्तत्वं विधीयते ।

३ उदाहरणेषु पूर्व सदृशेत्यादिना तृतीया समासः केचिदत्र अर्थेति स्वरूप ग्रहणमिच्छन्ति । तृतीयाग्रहणं स्पष्टार्थञ्च योगस्तु तृतीयापूर्वपद प्रकृतिस्वरापवदः ।

४ पूर्व सदृश समोनार्थेति समासः । तत्पुरुषे तुल्यार्थेत्यस्यापवादोऽयं योगः ।

५ कर्णवेष्टकाभ्यां सम्पादि कार्णवेष्टकिकम् न कार्णवेष्टकिकमकार्णवेष्टकिकम् । सम्पादिनीति

असांतापिकः ।

## ययतोश्चातदर्थे । १५६ ।

गुणप्रतिषेधविषयान्नञोऽतदर्थे यौययतौतदन्त मुन्तरपदमन्तोदात्तम् । अपाश्या(२) । अतृण्या । अदन्त्यम् । अकर्ण्यम् ।

## अच् कावशक्तौ । १५७ ।

नञः परमजन्तं कान्तश्चोत्तरपदम् अन्तोदात्तम् अशक्तौ गम्यमानायाम् । अपचः । अजयः । अविक्षिपः । अविलिखः ।

## आक्रोशे च । १५८ ।

नञः परमजन्तं कान्तश्चोत्तरपदम् अन्तोदात्तम् आक्रोशे । अपचोऽयं जाल्मः । अपठोऽयं जाल्मः । अविक्षिपः । अविलिखः ।

## सञ्ज्ञायाम् । १५९ ।

नञः परमन्तोदात्तम् संज्ञायामाक्रोशे । अदेवदत्तः ।

## कृत्योकेष्णुच्चार्वादयश्च । १६० ।

नञः परं कृत्यान्तमुकान्तमिष्णुजन्तं चार्वादयश्च अन्तोदात्ताः । अकर्तव्यम् । अकरणीयम् । अनागामुकम् । अनपलाषुकम् । अनलंकरिष्णुः । अनिराकरिष्णुः । अनाढ्यंभविष्णुः । अचारुः(१) । असाधुरित्यादि ।

## विभाषा तृन्नन्नतीक्ष्णशुचिषु । १६१ ।

नञः परं तृन्नन्त मन्नादीनिचान्तोदात्तानि वा । अकर्त्ता । अकर्त्ता । अनन्नम् । अनन्नम् । अतीक्ष्णम् । अतीक्ष्णम् । अशुचिः । अशुचिः ।

---

प्राग्वतेष्ठञ् । न छेदमर्हतिः छेदादिभ्योनित्यमिति ठक् । नवत्सेभ्यो हितः । तस्मैहितमिति छः । न सन्तापाय प्रभवति तस्मै प्रभवति संतापादिभ्य इति ठञ् ।

२ पाशतृणशब्दाभ्यां समूहे पाशादिभ्यो यः । दन्तकर्णशब्दाभ्यां शरीरावयवाच्चेति यत् ।

१ इवनीति चरेरुण् । साध्नोतेः—कृवापजीत्युण् ।

## बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने । १६२ ।

बहुव्रीहाविदमादिभ्यः क्रियागणने प्रथमशब्दस्यपूरणप्रत्ययान्तस्यच अन्तोदात्तम् । इदं प्रथमः । इदं द्वितीय । इदं तृतीयः । एतत्प्रथमः । तत्प्रथम इत्यादि ।

## संख्यायाः स्तनः । १६३ ।

बहुव्रीहौ संख्यायाः परःस्तनशब्दोऽन्तउदात्तः । द्विस्तना । त्रिस्तना । चतुःस्तना ।

## विभाषा छन्दसि । १६४ ।

बहुव्रीहौ संख्यायाः परः स्तन शब्दो वान्तोदात्तः छन्दसि । द्विस्तनां कुर्याद्वामदेवः । द्विस्तनां करोति द्यावापृथिव्योर्दोहाय ।

## संज्ञायां मित्राजिनयोः । १६५ ।

संज्ञायां विषये बहुव्रीहौ मित्राजिनयोरुत्तरपदयोरन्त उदात्तः । देवमित्रः । ब्रह्ममित्रः । वृकाजिनः । कृत्ताजिनः । ( ऋषिप्रतिषेधो मित्रे ) विश्वामित्र(१) ऋषिः ।

## व्यवायिनोऽन्तरम् । १६६ ।

बहुव्रीहौ व्यवायवाचिनः परमान्तरमन्तोदात्तं भवति । वस्त्रान्तरः । पटान्तरः ।

## मुखस्वाङ्गम् । १६७ ।

बहुव्रीहौ स्वाङ्गवाचिमुखमुत्तरपदे अन्तोदात्तं स्यात् । गौरमुखः । भद्रमुखः ।

---

१ मित्रे चर्षाविति दीर्घः । अत्र बहुव्रीहौ विश्वंसंज्ञायामिति वाधित्वा परत्वादनेनान्तोदात्तत्वं प्राप्तं प्रतिषिध्यतेऽतो बहुव्रीहौ विश्वं संज्ञायामिति भवति ।

## नाऽव्ययादिक् शब्दगोमहत्स्थूल मुष्टिपृथु-वत्सेभ्यः । १६८ ।

बहुव्रीहौ अव्ययादिभ्यः परं स्वाङ्गमन्तोदात्तं । उच्चैर्मुखः(१)। प्राङ्मुखः । गोमुखः । महामुखः । स्थूलमुखः । मुष्टिमुखः । पृथुमुखः । वत्समुखः ।

## निष्ठोपमानादन्यतरस्याम् । १६९ ।

बहुव्रीहौ निष्ठान्तादुपमानवाचिनश्च परं स्वाङ्गमुत्तरपदमन्तोदात्तं । प्रक्षालित मुखः(२) । सिंहमुखः ।

## जातिकाल सुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः । १७० ।

बहुव्रीहौ जातिवाचिनोऽनाच्छादनात्कालवाचिनः सुखादिभ्यश्च परे कृतादिभिन्नंक्तान्तमुत्तरपदमन्तोदात्तम् । सारङ्गः । जग्धः । पलाण्डुभक्षितः । सुरापीतः । मासजातः । सखजातः ।

## वा जाते । १७१ ।

बहुव्रीहौ जातिकाल सुखादिभ्यः परं जातमुत्तरपदमन्तोदात्तं वा । दन्तजातः । दन्तजातः(३) । मासजातः । मासजातः । सुखजातः ।

---

१ एषु-उदाहरणेषु-बहुव्रीहौ प्रकृत्यापूर्वपदमिति पूर्वपदप्रकृतिस्वरेणान्तोदात्तं पूर्वपदम् । तथाहि-उच्चैर्नीचैः शब्दौस्वरादिष्वन्तोदात्तौ । प्राक्शब्दोनिगताऽञ्चतावित्याद्युदात्तः । प्रत्यङ् इत्यत्रकृदुत्तरपद प्रकृतिस्वरः गामहतोरुक्तः स्वरः । स्थूलशब्दो ऋज्रेन्द्रे-त्यादावन्तोदात्तो निपातितः । मुषेःक्तिच्-मुष्टिः । प्रथिमदोत्यादिनाकुः पृथुः । कृतवदीत्यादिना सः-वत्सः ।

२ पक्षे निष्ठोपसर्गेति पूर्वपदान्तोदात्तत्व तदभावेऽपि पूर्वपद प्रकृति स्वरत्वेनगति स्वर इति त्रीण्युदाहरणानि—( टि० ) ।

३ पक्षे पूर्वपद प्रकृतिस्वरः । दन्तशब्दः स्वाङ्गशिठामदन्तानामित्याद्युदात्तः । मासशब्दोग्रामादीनाञ्चेत्याद्युदात्तः ।

## नञ्सुभ्याम् । १७२ ।

बहुव्रीहौ नञ् सुभ्यां परमुत्तरपदमन्तोदात्तम् । अयवो देशः । अव्रीहिः । सुयवः । सुव्रीहिः ।

## कपि पूर्वम् । १७३ ।

बहुव्रीहौ नञ् सुभ्यामुत्तरपदस्य कपिपरे पूर्व[1] मन्तोदात्तम् । अकुमारीको देशः । अवृषलीकः । अब्रह्मबन्धूकः । सुकुमारीकः ।

## ह्रस्वान्तेऽन्त्यात्पूर्वम् । १७४ ।

बहुव्रीहौ नञ् सुभ्यां ह्रस्वान्ते अन्त्यात्पूर्वमुदात्तं कपिपरे । अयवको देशः । अव्रीहिकः । सुयवकः ।

## बहोर्नञ्वदुत्तरपदभूम्नि । १७५ ।

उत्तरपदबहुत्वेयोबहूशब्दस्ततः पर नञ्वत्स्वरः । बहुयवो देशः । बहुव्रीहिः । बहुकुमारीको देशः । बहुयवको देशः । बहुजरः ।

## न गुणादयोऽवयवाः । १७६ ।

बहुव्रीहौ बहोःपरेऽवयववाचिनो गुणादयः अन्तोदात्ता न । बहुगुणा रज्जुः । बह्वक्षरं पदम् । बहुच्छन्दोमानम् ।

## उपसर्गात्स्वाङ्गं ध्रुवमपर्शु । १७७ ।

बहुव्रीहौ उपसर्गात्परं पर्शुभिन्नं ध्रुवंस्वाङ्गम् अन्तोदात्तम् । प्रपृष्ठः । प्रोदरः । प्रललाटः ।

## वनंसमासे । १७८ ।

उपसर्गात्परं समासे वनमुत्तरपदमन्तोदात्तम् । प्रवणेयष्टव्यम्(२) ।

---

१ पूर्वमित्यनुवर्तमाने पुनः पूर्व ग्रहणम् प्रवृत्तिभेदेन नियमप्रतिपत्त्यर्थम् । ह्रस्वान्तेऽन्त्यदेवपूर्वमुदात्तं न कपिपूर्वमिति । तेनाज्ञकः सुज्ञक इत्यत्र कवन्कस्यैवान्तोदात्तत्वम् ।

२ प्रनिरन्त इति णत्वम् ।

निर्वर्णे प्रणिधीयते।

## अन्तः । १७९ ।

अन्तः शब्दात्परं वनमुत्तरपदमन्तोदात्तम् । अन्तर्वणोद्देशः ।

## अन्तश्च । १८० ।

उपसर्गात्परमन्तश्चोत्तरपदम् अन्तोदात्तम् । प्रान्तः । पर्यन्तः ।

## न निविभ्याम् । १८१ ।

निविभ्यांपरोऽन्तः अन्तोदात्तो न । न्यन्तः(१) । व्यन्तः ।

## परेरभितोभाविमण्डलम् । १८२ ।

परेः परमभितोभाविवाचि मण्डलञ्च अन्तोदात्तम् । परिकूलम् । परितीरम् । परिमण्डलम् ।

## प्रादस्वांगं संज्ञायाम् । १८३ ।

प्रात्परमस्वाङ्गवाचि उत्तरपदमन्तोदात्तं संज्ञायांविषये । प्रकोष्ठम् । प्रगृहम् । प्रद्वारम् ।

## निरुदकादीनि च । १८४ ।

निरुदकादीनि अन्तोदात्तानि । निरुदकम्(२) । निरुलपम् । निरुपलमित्यन्ये । निर्मशकम् । निर्मक्षिकम् ।

## अभेर्मुखम् । १८५ ।

अभेः परंमुखम् अन्तोदात्तम् । अभिमुखः ।

---

१ पूर्वपद प्रकृति स्वरत्वे कृते यणादेशः । तत्रोदात्त स्वरितयोर्यणः स्वरितोऽनुदात्तस्येति स्वरितो भवति ।

२ निर्गतमुदकंयस्मादिदिति बहुव्रीहिः । निर्गतमुदकमिति प्रादिसमासो वा ।

## अपाच्च[1] । १८६ ।

अपात्परं मुखम् अन्तोदात्तम् । अपमुखः । अपमुखम् ।

## स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनामनाम च[2] । १८७ ।

अपात्पराणि स्फिगादीनि सीरनामानि नाम च अन्तोदात्तानि । अपस्फिगम् अपपूतम् । अपवीणम् । अपाञ्जः । अपाध्वा । अपकुक्षिः । अपसीरः । अपहलम् । अपलाङ्गलम् । अपनाम ।

## अधेरुपरिस्थम् । १८८ ।

अधेः परमुपरिस्थवाचि अन्तोदात्तम् । अधिदन्तः । अधिकर्णः । अधिकेशः ।

## अनोरप्रधानकनीयसी । १८९ ।

अनोः परमप्रधानवाचि कनीयश्च अन्तोदात्तम् । अनुज्येष्ठः । अनुमध्यमः अनुकनीयान् ।

## पुरुषश्चान्वादिष्टः । १९० ।

अनोः परः पुरुषोऽन्वादिष्टवाची अन्तोदात्तः । अन्वादिष्टः पुरुषोऽनुपुरुषः ।

## अतेरकृत्पदे । १९१ ।

---

१ योग विभाग उत्तरार्थः ।

२ एतदेव सूत्रं समासान्ता नित्यत्वे ज्ञापकम् । यदि हि नित्यः समासान्तः स्यात् अध्वग्रहणमिहानर्थकं स्यात् अच् प्रत्ययस्य चित्वादन्तोदात्तस्य सिद्धत्वात् कृतंतु अध्वग्रहणं ज्ञापयति समासान्ता अनित्या इति ।

अतेःपरमकृदन्तंपदश्च अन्तोदात्तः । अत्यङ्कुशोनागः । अतिकृशोऽश्वः । अतिरदाशकरी । ( अतेर्धातुलोप(१) इति वक्तव्यम् ) नेह शोभनोगार्ग्योऽतिगार्ग्यः । इहचस्यात् अतिक्रान्तः कारुमतिक्रान्तः ।

## नेरनिधाने । १९२ ।

नेः परमुत्तरपदम् अन्तोदात्तम् अनिधानेगम्ये । निमूलम् । न्यक्षम् । नितृणम् ।

## प्रतेरंश्वादयस्तत्पुरुषे । १९३ ।

तत्पुरुषे प्रतेः परमंश्वादय अन्तोदात्ताः । प्रत्यंशुः । प्रतिजनः । प्रतिराजा(२) ।

## उपाद्द्व्यजजिनमगौरादयः । १९४ ।

तत्पुरुषेउपात्परं गौरादिभिन्नं द्व्यजजिनञ्च अन्तोदात्तम् । उपगतोदेवमुपदेवः । उपाजिनम् ।

## सोरवक्षेपणे । १९५ ।

तत्पुरुषे सोःपरमुत्तरपदम् अन्तोदात्तम् अपक्षेपणेगम्यमाने । सुस्थण्डिलेसुस्फिताभ्यां सुप्रत्यवसितः ।

## विभाषोत्पुच्छे । १९६ ।

तत्पुरुषे उत्पुच्छे वा अन्तोदात्तम् । उत्क्रान्तः पुच्छात् उत्पुच्छः(३) ।

## द्वित्रिभ्यां पाद्दन्मूर्द्ध सुबहुव्रीहौ । १९७ ।

---

१ अत्यंकुशादौ वृत्ति विषयेऽतिशब्दोऽतिक्रांतार्थे वृत्तिरिति क्रमेरप्रयोग एव धातुलोपः ।

२ समासान्तस्यानित्यत्वान्नटच् । राजन् शब्दस्यपाठएव ज्ञापपतिसमासान्ता अनित्या इति । अन्यथा । राजाहः सखिभ्यष्टच्—इनिटचश्चित्वादेवसिद्धं स्यात् ।

३ पुच्छादुत्क्रान्त उत्पुच्छः । यदातुपुच्छमुदस्यति उत्पुच्छयतेरच् उत्पुच्छस्तदा थाथादिस्वरेणनित्यमन्तोदात्तत्वेप्राप्ते विकल्पोऽयम् । संयमुभयत्रविभाषा ।

बहुव्रीहौ पादाद्युत्तरपदानि अन्तोदात्तानि वा । द्विपात् । द्विपात् । द्विदन् । द्विदन् । द्विमूर्द्धा । द्विमूर्द्धा । एवं त्रिपादित्यादि ।

## सक्थं चाक्रान्तात् । १९८ ।

बहुव्रीहौ अक्रान्तात्परः सक्थ शब्दो वा अन्तोदात्तम् । गौरसक्थः । गौरसक्थः । श्लक्ष्णसक्थः । श्लक्ष्णसक्थः ।

## परादिश्छन्दसि बहुलम् । १९९ ।

छन्दसिसक्थस्यादिरुदात्तो बहुलम् । परशब्देनात्र सक्थशब्द एव गृह्यते । अजिसक्थमालभेत । त्वाष्ट्रौलोमसक्थौ । ऋजुबाहुः । वाक्पतिः । चित्पतिः । ( अन्तोदात्त प्रकरणेत्रिचक्रादीनां छन्दस्युपसंख्यानम् ) । त्रिचक्रेण । त्रिबन्धुरेण । त्रिवृतारथेन ।

## इति षष्ठाध्यायस्य द्वितीयः पादः ।

———:०:———

# अथ षष्ठाध्यायस्य तृतीयपादारम्भः

## अलुगुत्तरपदे[1] । १ ।

अलुगधिकारः प्रागानङः, उत्तरपदाधिकारः प्रागङ्गाधिकारात् ।

## पञ्चम्याः स्तोकादिभ्यः । २ ।

स्तोकादिभ्यः पञ्चम्या अलुगुत्तरपदे । स्तोकान्मुक्तः[2] । अल्पान्मुक्तः । अन्तिकादागतः । अभ्यासादागतः । ( पञ्चमी प्रकरणे ब्राह्मणाच्छंसिन उपसंख्यानं कर्तव्यम् ) ब्राह्मणे विहितानि शस्त्राणि उपचाराद् ब्राह्मणानि । तानि शंसतीति । ब्राह्मणाच्छंसी । ऋत्विग्विशेषः । द्वितीयार्थे पञ्चमी उपसंख्यानादेव ।

## ओजस्सहोम्भस्तमस स्तृतीयायाः । ३ ।

ओज आदिभ्यस्तृतीयाया अलुक् उत्तरपदे । ओजसा(३) कृतम् । सहसा कृतम् । अम्भसा कृतम् । तमसा कृतम ( तृतीयाया मञ्जस उपसंख्यानं कर्तव्यम् ) अंजसा कृतम् । आर्जवेन कृत मित्यर्थः । ( पुंसानुजो, जनुषान्धो विकृताक्ष इति चोपसंख्यानं कर्तव्यम् ) यस्याग्रजः पुमान् सः । पुंसानुजः । जनुषान्धः । जात्यन्धः । विकृताक्षः ।

---

१ प्रत्ययप्रतिषेधोऽयं 'सुपो धातु इत्यादिना प्राप्तोलुङ् नभवतीत्यर्थः ।

२ समासप्रयोजन मैकपद्य मैकस्वर्यं विशेषण योगाभावश्च । किंच । स्तौकान्मुक्तेय इत्यादौ समुदायात्तद्धितोत्पत्तिरपि प्रयोजनम् ।

स्तोकान्मुक्त इत्यादौ द्विवचन बहुवचनानान्तु समासो नेष्यते । अनभिधानात् तेन स्तोकाभ्यां मुक्त इत्यादौ वाक्यमेव ।

३ कर्तृ करणेकृता, इतिसमासः ।

## मनसः संज्ञायाम् । ४ ।

मनसस्तृतीयाया अलुक् उत्तरपदे सञ्ज्ञायाम् । मनसादत्ता , मनसा गुप्ता ।

## आज्ञायिनि च । ५ ।

मनसस्तृतीयाया अलुगाज्ञायिन्युत्तरपदे । मनसाज्ञायी ।

## आत्मनश्च । ६ ।

आत्मनस्तृतीयाया अलुक् पूरणप्रत्ययान्ते उत्तरपदे । पूरण इति वक्तव्यम् । आत्मनापञ्चमः(१) । पूरणे किम् । आत्मकृतम् ।

## वैयाकरणाख्यायां चतुर्थ्याः । ७ ।

आत्मनः चतुर्थ्या अलुक् उत्तरपदे वैयाकरणसंज्ञायाम् । आत्मनेपदम् । आत्मनेभाषा । तादर्थ्ये चतुर्थ्येषा । चतुर्थीति योगविभागात्समासः ।

## परस्य च । ८ ।

परस्माच्चतुर्थ्या अलुक् उत्तरपदे वैयाकरणाख्यायाम् । परस्मैपदम् । परस्मैभाषा ।

## हलदन्तात्सप्तम्याः संज्ञायाम् । ९ ।

हलन्तादृदन्ताच्च सप्तम्या अलुक् उत्तरपदे सञ्ज्ञायाम् । युधिष्ठिरः । त्वचिसारः । अरण्येतिलकाः । ( हृद्युभ्यां ङे रुपसंख्यानम् ) हृदिस्पृक् । दिविस्पृक् । अन्यार्थे चैषासप्तमीद्रष्टव्या । हृदयं पृशतीति हृदिस्पृक् । दिवंस्पृशतीति दिविस्पृक् ।

## कारनाम्नि च प्राचां हलादौ । १० ।

हलन्तादृदन्तात्सप्तम्या अलुक् हलादावुत्तरपदे प्राचांकार(२) नाम्नि गम्ये । सूपेशाणः । दृषदिमाषकः ।

---

१ तृतीयेतियोग विभागात् समासः ।

२ वणिक् पशुपालकर्षकादिभ्यो राजग्राह्यो भागः करः स एवकारः । तस्यनाम्नीत्यर्थः ।

## मध्याद्गुरौ । ११ ।

मध्यात्सप्तम्या अलुक गुरावुत्तरपदे । मध्येगुरु । (अन्ताच्च) अन्ते गुरुः ।

## अमूर्द्धमस्तका त्स्वाङ्गादकामे । १२ ।

मूर्द्ध मस्तक वर्जिता द्धलदन्तात्स्वाङ्गात्सप्तम्या अलुक अकामे उत्तर पदे । कण्ठेकालः । उरसिलोमा । अकामे किम् । मुखेकामोऽस्य मुखकामः । अमूर्धमस्तकात् किम् । मूर्धशिखः । मस्तकशिखः ।

## बन्धे च विभाषा । १३ ।

हलन्तादन्तात् सप्तम्या वा अलुग्बन्धे उत्तरपदे । हस्तेबन्धः । हस्तबन्धः । हलदन्तादित्येव गुप्तिबन्धः ।

## तत्पुरुषे कृति बहुलम् । १४ ।

हलन्तादन्तात् सप्तम्या बहुलमलुक्तत्पुरुषे समासे कृदन्ते उत्तरपदे । स्तम्वेरमः । कर्णेजपः । क्वचिन्न । मद्रचरः ।

## प्रावृट् शरत्कालदिवाञ्जे । १५ ।

प्रावृडादिभ्यः सप्तम्या अलुक जे उत्तरपदे । प्रावृषिजः । शरदिजः । कालेजः । दिविजः ।

## विभाषावर्षक्षरशरवरात् । १६ ।

वर्षादिभ्यः सप्तम्या अलुक् वा जे उत्तरपदे । वर्षेजः । वर्षजः । इत्यादि ।

## घकालतनेषु कालनाम्नः । १७ ।

कालवाचिनः सप्तम्या वा अलुक् घकालतनेषु परतः । पूर्वाह्णेतरे । पूर्वाह्णतरे । पूर्वाह्णेतमे । पूर्वाह्णतमे । पूर्वाह्णेकाले । पूर्वाह्णकाले । पूर्वाह्णेतने । पूर्वाह्णतने ।

## शयवासवासिष्वकालात् । १८ ।

अकालवाचिनः सप्तम्या वा अलुक् शयादिषूत्तरपदेषु । खेशयः । खशयः । गिरौवासः गिरिवासः । वासीवा । हलदन्तादित्येव । भूमिशयः । (अपोयोनि यन्मतुषु सप्तम्या अलुग्वक्तव्यः) अप्सुयोनिः(१) । अप्सव्यः(२) अप्सुमन्तौ ।

## नेन्सिद्धबध्नातिषु च । १९ ।

इन्नन्तेसिद्धे बध्नातौचोत्तरपदे सप्तम्या अलुक् न । स्थण्डिलशायी । सांकाश्यसिद्धः । चक्रबन्धः(३) ।

## स्थे च भाषायाम् । २० ।

स्थे उत्तरपदे सप्तम्या अलुक न भाषायाम् । कूटस्थः । समस्थ । भाषायां किम् । कृष्णोऽस्याखरेष्ठः ।

## षष्ठ्या आक्रोशे । २१ ।

षष्ठ्या अलुगुत्तरपदे आक्रोशे गम्यमाने । चौरस्यकुलम् । (षष्ठी प्रकरणे वाग्दिक् पश्यद्भ्यो युक्तिदण्डहरेषूपसंख्यानम्) । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः(४) । (अमुष्यायणामुष्यपुत्रिकेत्युप संख्यानम् कर्तव्यम्) आमुष्यायण । आमुष्यपुत्रिका । (अमुष्य कुलिकेति च वक्तव्यम्) आमुष्यकुलिका । (देवानांप्रिय इति चोपसंख्यानं कर्तव्यम्) देवानांप्रियः(५) । (शेपपुच्छलांगूलेषु शुनः संज्ञाया मुपसंख्यानम्,

---

१ अप्सुयोनि रुत्पत्तिर्यस्य सः ।

२ अप्सु भव इति दिगादित्वाद्यत् प्रत्ययेओर्गुणे वान्तादेशः ।

३ तत्पुरुष इत्यनुवृत्तो तत्पुरुष एवायं निषेधः । बहुव्रीहौ तु बन्धे विभाषा इति विकल्प एव ।

४ पश्यन्त मनादृत्य हरति-इत्यर्थः । षष्ठी चानादरे, इति षष्ठी ।

५ केषाञ्चिन्मते मूर्खे एवायं प्रयोगः । अन्यत्र देवप्रिय इति ।

शुनः शेपः । शुनः पुच्छः । शुनोलांगूलः । ( दिवश्चदासे उपसंख्यानं कर्तव्यम् ) दिवोदासाय गायते ।

## पुत्रेऽन्यतरस्याम् । २२ ।

पुत्रे उत्तरपदे षष्ठ्या अलुग् वा आक्रोशे । वृषल्याः पुत्रः । वृषलीपुत्रः । निन्दायां किम् । ब्राह्मणीपुत्रः ।

## ऋतोविद्यायोनिसम्बन्धेभ्यः । २३ ।

विद्यासम्बन्धवाचिभ्यो योनिसम्बन्धवाचिभ्यश्च ऋकारान्तेभ्यः षष्ठ्या अलुगुत्तरपदे । होतुरन्तेवासी । होतुः पुत्रः । पितुरन्तेवासी । पितुः पुत्रः । ( विद्यायोनि सम्बन्धेभ्यस्तत्पूर्वोत्तरपद ग्रहणम् । तेनेह न । होतृधनम् ।

## विभाषास्वसृपत्योः । २४ ।

विद्यायोनिसम्बन्धवाचिभ्य ऋकारान्तेभ्यः षष्ठ्या अलुग् वा स्वसृपत्योरुत्तरपदयोः । मातुः(१) ष्वसा । मातुः स्वसा । मातृष्वसा । दुहितुः पतिः । दुहितृपतिः ।

## आनङ् ऋतो द्वन्द्वे । २५ ।

विद्यायोनिसम्बन्धवाचिनाम् ऋकारान्तानां द्वन्द्वे पूर्वपदस्याऽऽनङुत्तरपदे । होतापोतारौ । मातापितरौ ।

## देवताद्वन्द्वे च[2] । २६ ।

देवतावाचिनां द्वन्द्वे पूर्वपदस्याऽऽनङुत्तरपदे । मित्रावरुणौ । सू-

---

१ मातुः पितुर्भ्यामन्यतरस्याम् । इति षत्वविधायकः ; मातृष्वसा, इत्यत्रतु मातृ पितृभ्यांस्वसा इति सूत्रेण समासे षः । असमासे तु मातुः स्वसा ।

२ पुनर्द्वन्द्वग्रहणं प्रसिद्ध साहचर्य्यस्य परि ग्रहार्थम् । तेन ब्रह्मप्रजापती इत्यादौ नानङ् एतद्धि नैकहविर्भागित्वेन श्रुतं नापि लोके प्रसिद्धं साहचर्य्यम् ।

र्य्याचन्द्रमसौ । ( देवताद्वन्द्वे उभयत्र वायोः प्रतिषेधः ) अग्निवायू । वाय्वग्नी ।

## ईदग्नेः सोमवरुणयोः । २७ ।

देवताद्वन्द्वे अग्ने रीत्सोमवरुणयोरुत्तरपदयोः । अग्नीषोमौ(१) अग्नी वरुणौ ।

## इद्वृद्धौ । २८ ।[2]

देवताद्वन्द्वे अग्नेरित्कृतवृद्धावुत्तरपदे । अग्नामरुतौदेवतेऽस्य आग्नि मारुतं(३) कर्म्म । ( इद्वृद्धौ विष्णोः प्रतिषेधो वक्तव्यः ) आग्नावैष्णवं चरुं निर्वपेत् ।

## दिवोद्यावा । २९ ।

देवताद्वन्द्वे दिवोद्यावास्यादुत्तरपदे । द्यावाभूमी जनयन देव एक आस्ते ।

## दिवसश्च पृथिव्याम् । ३० ।

देवताद्वन्द्वे दिवो दिवस्स्याच्चाद्द्यावा पृथिव्यामुत्तरपदे । दिवस्पृथिव्यौ द्यावापृथिव्यौ वा ।

## उषासोषसः । ३१ ।

देवता द्वन्द्वे उषस उषासा स्यादुत्तरपदे । उषासासूर्य्यम् ।

## मातरपितरावुदीचाम् । ३२ ।

मातरपितराविति निपात्यते, उदीचांमते । मातरपितरौ । अन्येषान्तु मातापितरौ ।

---

१ अग्नेः स्तुतः स्तोमसोमा इतिसूत्रेणात्र षः ।

२ इकारस्येकारविधानमलौकिकवाक्ये आनङीत्वयोर्बाधनार्थम् ।

३ देवताद्वन्द्वे चेत्युभयपदवृद्धिः ।

# पितरामातरा च च्छन्दसि । ३३ ।

छन्दसि विषये पितरामातरा इति निपात्यते। आमागन्तांपितरामातरा च ।

# स्त्रियाः पुम्वद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रिया मपूरणीप्रियादिषु । ३४ ।

भाषितपुंस्कादूङोऽभावोयस्मिन्तस्य स्त्रीवाचकशब्दस्य पुंवत् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे नतुपूरणी प्रियादिषु । दर्शनीय ग्रीवः। त्रिपदे बहुव्रीहौ तु प्रथम न पुम्वत् मध्यमेन व्यवधानात। द्वितीयमपि न । पूर्वपदत्वाभावादितिकेचित् । वस्तुतस्तु नेहपूर्वपदमाक्षिप्यते किन्तु पूर्व मात्रम् । तेनोपान्त्यस्यैव । चित्राजरत्योगावो यस्य स चित्राजरद्गुः । कर्मधारय पूर्वपदेतु द्वयोरपिपुम्बत् । जरच्चित्रगुः। कर्मधारयोत्तरपदेतु चित्रजरद्गवीकः(१) ।

# तसिलादिष्वाकृत्वसुचः । ३५ ।

भाषितपुंस्कादनूङ् स्त्रियाः पुम्वत्कृत्वसुचः प्राक् तसिलादिषु परतः । बह्वीषु बहुत्र । बहुतः । दर्शनीयतरा । दर्शनीयतमा। पटुचरी। पटुजातीया। दर्शनीयकल्पा दर्शनीयदेशीया । दर्शनीयरूपा। दर्शनीयपाशा । बहुथा । वृकतिः । अजथ्या। शसिबह्वल्पार्थस्य पुम्वद्भावो वक्तव्यः ) बहुशोदेहि । अल्पशोदेहि । ( त्वतलोर्गुणवचनस्य ) शुक्लत्वम् । शुक्लता वा । ( भस्याढे तद्धिते पुंवद्भावो वक्तव्यः ) हास्तिकम् । ( ठक्छसोश्च(२) पुम्वद्भावो वक्तव्यः ) भावत्काः। भवदीयाः ।

---

१ जरती चासौ गौश्च जरद्गवी-गोरतद्धितलुकि इति टचि टित्वान् ङीप् चित्रा । जरद्गवी यस्येति बहुव्रीहौ नद्यृतश्चेतिकप् ।

२ एतद्वार्तिकं न कर्त्तव्यम्—सर्वनाम्नो वृत्तिमात्रे पुम्वद्भाव इति भाष्यकारेष्ट्यागतार्थत्वात् । ( टि० ) ।

## क्यङ्मानिनोश्च ।३६।

भाषितपुंस्कादनूङ् स्त्रियाः पुम्वत् क्यङ् मानिनोः परतः। एतायते। रोहितायते। दर्शनीयमानी।

## न कोपधायाः ।३७।

भाषितपुंस्कादनूङ् कोपधायाः स्त्रियाः पुम्वन्न । पाचिका भार्य्यः। (कोपधप्रतिषेधे तद्धित वुग्रहणम्) तेनेहन । पाकभार्यो भेकभार्य्यः।

## संज्ञापूरण्योश्च ।३८।

संज्ञायाः पूरणप्रत्ययान्तायाश्च स्त्रियाः पुम्वन्न। दत्ताभार्यः। दत्तामानिनी। पञ्चमीभार्य्यः। पञ्चमी पाशा।

## वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ।३९।

अरक्तविकारेऽर्थे वर्तमानोवृद्धिनिमित्तोयस्तद्धितस्तदन्तस्य(१) स्त्रीशब्दस्यपुम्वन्न। स्रौघ्नीभार्य्यः। स्रौघ्नीपाशा। स्रौघ्नीयते।

## स्वाङ्गाच्चेतोऽमानिनि[२] ।४०।

स्वाङ्गात्परोयईकारस्तदन्तायाः स्त्रिया न पुम्वन्नतुमानिनि। शुक्लकेशीभार्य्यः। शुक्लकेशीपाशा।

## जातेश्च ।४१।

जातेः स्त्रिया न पुम्वन्नतुमानिनि। शूद्राभार्य्यः।

---

१ अत्र वृद्धिनिमित्त शब्देन वृद्धिशब्देन विहितवृद्धि निमित्तो यस्तद्धितस्तत्रैव पुम्वद्भावनिषेधः। नेह तावद्भार्यः। अत्र तत्प्रमाणमस्या इति विग्रहे यत्तदेतेभ्य इति वतुपि, आसर्वनाम्न इति विहित आकारो न वृद्धि शब्देन।

२ भाष्येतु—स्वाङ्गाच्चेत इत्येवसूत्रम्—अमानिनी तिच वार्तिकम्

## पुम्वत्कर्मधारयजातीयदेशीयेषु । ४२ ।

कर्मधारयेसमासेजातीयदेशीययोश्च परतोभाषितपुंस्कादनूङ् स्त्रियाः पुम्वत् । महानवमी । महाप्रिया । पाचकवृन्दारिका । पाचकजातीया । पाचकदेशीया । कुक्कुट्यादीनामण्डादिषु(१) पुम्वद्भावो वक्तव्यः ) कुक्कुटाण्डम् । मृगपदम् । मृगक्षीरम् ।

## घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः । ४३ ।

भाषितपुंस्कात्परोयोङीतदन्तस्याऽनेकाचो ह्रस्वो घादिषुपरतः । कुमारितरा । कुमारितमा । कुमारिरूपा । कुमारिकल्पा । कुमारिचेली । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रा । ब्राह्मणिमता । ब्राह्मणिहता ।

## नद्याः शेषस्यान्यतरस्याम् । ४४ ।

अङ्यन्तनद्या ङ्यन्तस्यैकाचश्च घादिषु ह्रस्वो वा । ब्रह्मबन्धूतरा । ब्रह्मबन्धुतरा । स्त्रीतरा । स्त्रितरा । ( नद्याः शेषत्वे कृन्नद्याः प्रतिषेधः ) लक्ष्मीतरा ।

## उगितश्च । ४५ ।

उगिदन्तात्परस्या नद्या घादिषु वा ह्रस्वः । श्रेयसितरा । श्रेयस्तरा(२) ।

## आन्महतः समानाधिकरणजातीययोः । ४६ ।

महत आत्समानाधिकरणउत्तरपदेजातीये च प्रत्यये । महामन्त्री । महाबाहुः । महाजातीयः । ( महदात्त्वे घासकरविशि-

---

१ जातिमात्र पर कुक्कुट्यादिनैव समासे सिद्धमेतदिति भाष्ये प्रत्याख्यातमिदम् ।
२ तसिलादिष्विति पुम्वत् । वृत्यादिषु श्रेयसीतरेत्यप्युदाहृतं तन्निर्मूलमेव ।
३ महतो महत्यावा घास इति षष्ठी समासः ।

ष्टेषूपसंख्यानङ्कर्तव्यम् पुम्वद्भावश्च समानाधिकरणार्थो द्रष्टव्यः ) महाघास (३) । महाकरः । महाविशिष्टः । ( अष्टनः कपाले हविषि उपसंख्यानं कर्तव्यम् ) अष्टाकपालः । ( गवि च युक्त उपसंख्यानं कर्तव्यम् ) अष्टागवेन शकटेन ।

## द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः । ४७ ।

द्व्यष्टन आत्संख्या वाच्युत्तरपदे नतु बहुव्रीह्यशीत्योः । द्वादश । द्वाविंशतिः । अष्टादश । अष्टाविंशतिः ( प्राक्शतादिति वक्तव्यम् ) नेह द्विशतम् । अष्टशतम् । द्विसहस्रम् ।

## त्रेस्त्रयः । ४८ ।

त्रिशब्दस्य त्रयआदेशःसंख्यावाच्युत्तरपदे नतु बहुव्रीह्यशीत्योः । त्रयोदश । त्रयोविंशतिः ।

## विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् । ४९ ।

चत्वारिंशत्प्रभृतौ संख्यावाच्युत्तरपदे द्व्यष्टनोस्त्रेश्च यदुक्तं तद्वाऽबहुव्रीहौ । द्वाचत्वारिंशत् । द्विचत्वारिंशत् । अष्टचत्वारिंशत् । अष्टाचत्वारिंशत् । त्रयश्चत्वारिंशत् । त्रिचत्वारिंशत् ।

## हृदयस्य हृल्लेखयदण्लासेषु । ५० ।

हृदयस्यहृल्लेखादिषु परतः । हृल्लेखः(१) । हृद्यम् । हार्दम् । हृल्लासः ।

## वा शोकष्यञ्रोगेषु । ५१ ।

हृदयस्य हृद्वा शोकादिषु परतः । हृदयशोकः । हृच्छोकः । सौहार्द्यम्(२) । सौहृदय्यम् । हृद्रोगः । हृदयरोगः ।

---

१ अण्साहचर्य्यात् लेखशब्दोऽपि अण्णन्त एव गृह्यते घञतु हृदयलेखः । लेखग्रहणमेवज्ञापकम् । उत्तर पदाधिकारे तदन्तविधिर्नास्तीति । अतएव घरूपकल्पेषु तदन्तग्रहणं न ।

२ ब्राह्मणादित्वात्ष्यञ् हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्युभयपदवृद्धिः ।

## पादस्य पदाज्यातिगोपहतेषु ।५२।

पादस्य पद आज्यातिगोपहतेषु । पदाजिः(१) । पदातिः । पदगः । पदोपहतः ।

## पद्यत्यतदर्थे ।५३।

पादस्यपत्—अतदर्थे यतिपरे । पद्याः शर्कराः । ( पद्भावे इके चरतावुपसंख्यानम् ) पदिकः ।

## हिमकाषिहातिषु च ।५४।

पादस्य पद्धिमकाषिहतिषु परतः । पद्धिमम् । पत्काषिणः । पद्धतिः ।

## ऋचः शे ।५५।

ऋचः पादस्य पच्छेपरे । पच्छोगायत्रीं(२) शंसति ।

## वा घोषमिश्रशब्देषु ।५६।

पादस्यपद्वा घोषमिश्रशब्देषु परतः । पद्घोषः । पादघोषः । पन्मिश्रः । पादमिश्रः । पच्छब्दः पादशब्दः ( निष्केचोपसंख्यानंकर्तव्यम् ) पन्निष्केण । पादनिष्केण ।

## उदकस्योदः संज्ञायाम् ।५७।

उदकस्योदः स्यात्संज्ञायां गम्यमानायाम् । उदमेघो नाम यस्य तस्यापत्यं औदमेघिः ( संज्ञायामुत्तरपदस्य चेतिवक्तव्यम् ) इहापि यथा स्यात् । लोहितोदः । क्षीरोदः ।

---

१ अज्यतिभ्यां पादे चेतीण् प्रत्ययः । अजेर्व्यभावो निपातनात् । पादस्य पदाज्याति, इतिसूत्रे पद इत्यकारान्त एवादेश उत्तर सूत्रे पद् इति हलन्ता देश विधानात् । विभक्ति लुं कृत्तु क्षौत्रः ।

संख्यैकवचनाच्चवीप्सायाम् इतिशस् । पादं पादं शंसतीत्यर्थः ।

## पेषंवासवाहनधिषु च । ५८।

उदकस्योदः स्यात् पेषंवासवाहनधिषु परतः । उदपेषं पिनष्टि। उदवासः। उदवाहनः । उदकंधीयतेऽस्मिन्नित्युदधिः ।

## एकहलादौ पूरयितव्येऽन्यतरस्याम् । ५९ ।

एकहलादौ पूरयितव्यवाच्युत्तरपदे उदकस्य उदो वा स्यात् । उदकुम्भः । उदकुम्भो वा ।

## मन्थौदनसक्तुविन्दुवज्रभारहारवविधगाहेषु च । ६० ।

उदकस्योदो वा मन्थादिषु परतः। उदकमन्थः। उदमन्थः। उदौदनः। उदकौदनः उदसक्तुः । उदकसक्तुः । उदविन्दुः । उदकविन्दुः । उदवज्रः । उदकवज्रः । एवमन्येपि ।

## इको ह्रस्वोऽङ्यो गालवस्य[1] । ६१ ।

अङ्यन्तस्य, इगन्तस्य ह्रस्वो वा उत्तरपदे । ग्रामणिपुत्रः । ग्रामणीपुत्रः । ( इयङुवङ भाविनामव्ययानां च प्रतिषेधो वक्तव्य ) श्रीकुलम्। भ्रूकुलम्। कुड्यीभूतं(२) वृषलकुलम् । ( अभ्रुकुंसादीनामिति वक्तव्यम् ) भ्रुकुंसः भ्रूकुंसः । अपर आह ( अकारोभ्रूकुंसादीमिति वक्तव्यम् ) भ्रकुंसः। भ्रकुटिः ।

## एकतद्धिते च । ६२ ।

एकशब्दस्य ह्रस्वःस्यात्तद्धिते परतः। एकरूप्यम्। एकत्वम् । एकता । एकस्याः पुत्रः, एकपुत्रः ।

---

१ गालवग्रहणम्पूजार्थम्। अन्यतरस्यामित्यनुवृत्तेः।
२ ऊर्यादिच्विडाचश्चे तिच्व्यन्त त्वेन निपातत्वे ऽव्ययत्वम्।
३ एकस्या आगतमितिस्त्रीत्वे एवास्यफल स्वभावत एक शब्दस्य ह्रस्वत्वात् ।

## ङ्यापोः सञ्ज्ञाछन्दसोर्बहुलम् । ६३ ।

ङ्यन्तस्याऽऽबन्तस्य च बहुलं ह्रस्वः संज्ञाछन्दसोर्विषये । रेवत्याः पुत्रः रेवतिपुत्रः । कुमारिदारा । क्वचिन्न । नान्दीकरः । फाल्गुनी पौर्णमासी । आबन्तस्य संज्ञाछन्दसोः । शिलवहम् । अजक्षीरेण जुहोति । बहुलग्रहणान्न । लोमकागृहम् । ऊर्णासूत्रेण कवयो वयन्ति ।

## त्वे च । ६४ ।

ङ्यन्तस्याबन्तस्य च बहुलं ह्रस्वः स्यात्त्वेपरे । रेवतित्वम् । रेवतीत्वम् । अजत्वम् । अजात्वम् ।

## इष्टकेषीकामालानां चिततूलभारिषु । ६५ ।

इष्टकादीनां ह्रस्वः स्याच्चितादिषूत्तरपदेषु । इष्टकचितम्(१) । इषीकतूलम् । मालभारी ।

## खित्यनव्ययस्य । ६६ ।

खिदन्ते-उत्तरपदेऽनव्ययस्याजन्तस्य ह्रस्वः स्यात् । कालिंमन्या । हरिणिंमन्या ।

## अरुर्द्विषदजन्तस्य मुम् । ६७ ।

अरुर्द्विषतोरजन्तस्य च नुम् खिदन्ते उत्तरपदे नत्वव्ययस्य । अरुन्तुदः(२) । द्विषन्तपः । पण्डितं मन्यः ।

## इच एकाचोऽम्प्रत्ययवच्च । ६८ ।

इजन्तस्यैकाचोऽम् स्यात्सचाम् प्रत्ययवत् खिदन्ते उत्तरपदे । गां मन्यः(३) । स्त्रीम्मन्यः । स्त्रियं मन्यः । श्रियं मन्यः । भ्रुवं मन्यः ।

---

१ अत्र तदन्तविधिरपीष्यते पक्वेष्टकचित मित्यादि ।
२ विध्वरुषोस्तुद इति खश् । द्विषत्परयोस्तापे रिति खच् ।
३ औतोम् शसोरित्यात्वम् । वाम्शसो रितिवा इयङ् ।

## वाचंयमपुरन्दरौ च । ६९ ।

एतौ निपात्येते । वाचंयम आस्ते । पुरंदारयतीति पुरन्दरः ।

## कारे सत्यागदस्य । ७० ।

सत्यागदयोर्मुम् कारे उत्तरपदे । ( अस्तुसत्यागदस्य कार उपसंख्यानम् ) अस्तुंकारः । सत्यंकारः । अगदंकारः । ( भक्षस्य छन्दसि ) तस्य ते भक्षं कारस्य । लोकेतु भक्षकारस्य । ( धेनोर्भव्यायाम् ) धेनुम्भव्या । ( लोकस्य पृणे ) लोकंपृणस्य धन्विनः । लोकस्यपूरकस्येत्यर्थः ( इत्येऽनभ्याशस्य ) अनभ्याशमित्यम् । ( भ्राष्ट्राग्न्योरिन्धे ) भ्राष्ट्रमिन्धः । अग्निमिन्धः । ( गिलेऽगिलस्य ) तिमिंगिलः । ( गिलगिलेच ) तिमिङ्गिलगिलः । ( उष्णभद्रयोः करणे ) उष्णं करणम् । भद्रंकरणम् । ( सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वा ) सूतदुहिता । सूतपुत्री । उग्रदुहिता । उग्रपुत्री । राजदुहिता । राजपुत्री । भोजदुहिता । भोजपुत्री । कुलदुहिता । कुलपुत्री । मेरुदुहिता । मेरुपुत्री ।

## श्येनतिलस्य पाते ञे । ७१ ।

श्येनतिलयोर्मुम्-ञान्तेपाते उत्तरपदे । श्यैनम्पाता(१) क्रीडा । तैलम्पाता ।

## रात्रेः कृति विभाषा । ७२ ।

रात्रेर्मुम् वा कृदन्ते उत्तरपदे । रात्रिञ्चरः । रात्रिचरः ।

## नलोपो नञः । ७३ ।

नञोनस्यलोपः स्यादुत्तरपदे । अब्राह्मणः ( नञोनलोपोऽवक्षेपे तिङ्युपसंख्यानम् ) अपचसि त्वं जाल्म ।

---

१ घञःसास्यांक्रियेतिञ इतिञे तद्धितेष्वचामिति वृद्धिः ।

## तस्मान्नुडचि । ७४ ।

लुप्तनकारान्नञः परस्याजादेरुत्तरपदस्य नुट् । अनश्वः ।

## नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या । ७५ ।

एषु नञ् प्रकृत्या स्यात् । नभ्राट् । नपात् । नवेदाः । नासत्याः । नमुचिः । नकुलः नखम् । नपुंसकम् । नक्षत्रम् । नक्रः । नाकम् ।

## एकादिश्चैकस्य चादुक् । ७६ ।

एकादिर्नञ् प्रकृत्यास्यादेकस्यचादुगागमः । एकान्नविंशतिः । एकान्नत्रिंशत ।

## नगोऽप्राणिष्वन्यतरस्याम् । ७७ ।

नग इति वा निपात्यतेऽप्राणिषु । नगाः । अगाः । पर्वता-वृक्षा वा ।

## सहस्य सः संज्ञायाम् । ७८ ।

सहस्य सः स्यात्संज्ञायां विषये । साश्वत्थम् । सपलाशम् । संज्ञायां किम् । सहयुध्वा ।

## ग्रन्थान्ताधिके च । ७९ ।

ग्रन्थान्तेऽधिके चार्थे सहस्य सः । समुहूर्तम्(१) । सद्रोणा खारी । द्रोणाधिकेत्यर्थः ।

## द्वितीये चानुपाख्ये । ८० ।

द्वितीयेऽनुपाख्ये ( अनुमेये ) सहस्य सः । सराक्षसीका निशा । राक्षसी साक्षादनुपलभ्यमाना निशयाऽनुमीयते ।

---

१ अन्तवचनेऽव्ययीभावः । अव्ययीभावेचाकाले इत्यत्र कालपर्युदासाद प्राप्ते सभावे ग्रन्थान्तग्रहणम् ।

२ उपाख्यं प्रत्यक्षं तद्भिन्नम नुमेयं तदाह अनुमेय इति ।

## अव्ययीभावे चाकाले । ८१ ।

अव्ययीभावे समासेऽकालवाच्युत्तरपदे सहस्य सः । सचक्रम् कालेवुतु-सहपूर्वाह्णम् ।

## वोपसर्जनस्य । ८२ ।

उपसर्जनस्य सहस्य सो वा । सपुत्रः । सहपुत्रः ।

## प्रकृत्याशिष्यगोवत्सहलेषु । ८३ ।

आशिषिविषये सहशब्दः प्रकृत्यास्याद् गवादिभिन्ने उत्तरपदे । सह-भ्रातृव्याय ते स्वस्ति ।

## समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु । ८४ ।

छन्दसिविषये समानस्य सोऽमूर्द्धादिभिन्ने उत्तरपदे । अनुभ्राता सगर्भ्यः(१) । अनुसखा सयूथ्यः । योनः सनुत्यः । अमूर्धादिषु किम् । समानमूर्धा । समानप्रभृतयः । समानोदर्काः ।

## ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूप स्थान-वर्णवयोवचनबन्धुषु । ८५ ।

समानस्य सः स्याज्ज्योतिरादिषूत्तरपदेषु । सज्योतिः । सजनपदः । सरात्रिः । सनाभिः । सनामा । सगोत्रः । सरूपः । सस्थानः । सवर्णः । सवयाः । सवचनः । सबन्धुः ।

## चरणे ब्रह्मचारिणि । ८६ ।

ब्रह्मचारिण्युत्तरपदे समानस्य सश्चरणे गम्यमाने । चरणः शाखा । ब्रह्मवेदः, तदध्ययनार्थं व्रत मपि ब्रह्म तच्चरतीति ब्रह्मचारी । समानःस सब्रह्मचारी ।

## तीर्थे ये । ८७ ।

यत्प्रत्ययान्ते तीर्थे उत्तरपदे समानस्य सः । समाने तीर्थे वासीति सतीर्थ्यः । एकगुरुकः । 'समानतीर्थे वासी' ति यत्प्रत्ययः ।

---

१ तत्र भव इत्यर्थे–सगर्भसयूथसनुताद्यत् ।

## विभाषोदरे । ८८ ।

यत्प्रत्ययान्ते उदरे उत्तरपदे समानस्य सो वा । समाने उदरे शयितः सोदर्य्यः । समानोदर्य्यः ।

## दृग्दृशवतुषु । ८९ ।

दृग्दृशवतुषु परतः समानस्य सो वा । सदृक् । सदृशः । वतुग्रहणमुत्तरार्थम् । ( दृक्षेउपसंख्यानम् ) सदृक्षासः । प्रतिसदृक्षासः ।

## इदंकिमोरीश्की । ९० ।

इदंकिमोः, ईश्की स्यातां दृग दृशवतुषु । ईदृग् । ईदृशः । इयान् । कीदृक् । कीदृशः । कियान् । ( दृक्षेचेति वक्तव्यम् ) ईदृक्षः । कीदृक्षः ।

## आसर्वनाम्नः । ९१ ।

सर्वनाम्न आकारोऽन्तादेशः स्याद्दृग्दृशवतुषु । तादृक् । तादृशः । तावान् । ( दृक्षेचेति वक्तव्यम् ) तादृक्षः ।

## विष्वग्देवयोश्चटेरद्र्यञ्चतौ वप्रत्यये । ९२ ।

विष्वग्देवयोश्चात्सर्वनाम्नश्च टेरद्र्यादेशो वप्रत्ययेऽञ्चतौ परे । ( अद्रिसध्र्योरन्तोदात्तवचनं कृत्स्वर निवृत्त्यर्थम् ) विष्वद्र्यङ् । देवद्र्यङ् । तद्र्यङ् । ( छन्दसिस्त्रियां बहुलम् ) तेनविष्वाचीचघृताची चेत्यत्र न भवति । कद्रीचीत्यत्रतुभवत्येवेति ।

## समःसमि । ९३ ।

समः समिस्याद्वप्रत्ययेऽञ्चतौ परे । सम्यङ् । सम्यञ्चौ । सम्यञ्चः ।

## तिरसस्तिर्य्यलोपे । ९४ ।

तिरसस्तिरिस्यादलुप्ताकारे व प्रत्ययान्तेऽञ्चतौ परे । तिर्यङ् । तिर्यञ्चौ ।

## सहस्य सध्रिः । ६५ ।

सहस्य सध्रिः स्यादलुप्ताकारे वप्रत्ययान्तेऽञ्चतौ । सध्र्यङ् । सध्रीचः ।

## सध मादस्थयोश्छन्दसि । ६६ ।

सहस्य सधस्यान्मादस्थयोरुत्तरपदयोश्छन्दसिविषये । सधमादो द्युम्नय एकास्ताः । सधस्थाः ।

## द्व्यन्तरुपसर्गेभ्योऽप ईत् । ६७ ।

द्व्यन्तरुपसर्गेभ्यःपरस्य अप ईत् । द्वीपम्(१) । अन्तरीपम् । नीपम् । समाप ईत्वप्रतिषेधः । समापं नाम देवयजनम् । अपर आह ( ईत्वमनवर्णादितिवक्तव्यम् ) समीपम् । अन्तरीपम् । इह नस्यात् । प्रापम् । परापम् ।

## ऊदनोर्देशे । ६८ ।

अनोरुत्तरस्यापऊत्स्याद्देशे । अनूपोदेशः ।

## अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु । ६९ ।

अषष्ठ्य(२) तृतीयास्थस्यान्यस्य दुगागमः स्यादाशीरादिषूत्तरपदेषु । अन्यदाशीः । अन्यदाशा । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यत्कारकः । अन्यद्रागः । अन्यदीयः ।

---

१ द्विर्गता आपोयस्मिन् । आदेः परस्येति-अकारस्येत् । येनविधिस्थभाष्ये आपस्तिष्ठन्ति । स्वापस्तिष्ठन्ति-इति प्रयोगात् । कृतसमासान्तग्रहणात् स्वप् स्वपीत्यत्र न ईत् ।

२ अषष्ठी तृतीयास्थ इत्येव सिद्धे निषेधानित्यत्वज्ञापनार्थाद् द्विर्नञ् उपादानात् कारके छे च अषष्ठीति निषेधो न । अन्यस्यकारकः । अन्यत्कारकः । अन्यस्यायम् । अन्यदीयः । गहादेराकृतिगणाच्छः ।

## अर्थे विभाषा । १०० ।

अर्थे उत्तरपदेऽन्यस्य दुग्वा । अन्यार्थः । अन्यदर्थोवा ।

## कोः कत्तत्पुरुषेऽचि । १०१ ।

कोःकत्स्यादजादावुत्तरपदे तत्पुरुषे समासे । कुत्सितोऽश्वः कदश्वः ( कद्भावेत्रावुपसंख्यानम् ) कत्त्रयः । तत्पुरुष इति किम् । कूष्ट्रो राजा । अचीति किम् । कुब्राह्मणः ।

## रथवदयोश्च । १०२ ।

कोःकत्स्याद्रथवदयोरुत्तरपदयोः । कुत्सितोरथः कद्रथः । कद्वदः ।

## तृणे च जातौ । १०३ ।

कोःकत्स्यात्तृणे उत्तरपदे जातावभिधेयायाम् । कत्तृणा नाम जातिः । जाताविति किम् । कुत्सितानि तृणानि कुतृणानि ।

## का पथ्यक्षयोः । १०४ ।

कोःकास्यात् पथ्यक्षयोरुत्तरपदयोः । कापथः । काक्षः ।

## ईषदर्थे । १०५ ।

ईषदर्थे कोः कास्यादुत्तरपदे । ईषन्मधुरं कामधुरम् । ईषदर्थेऽजादावपि परत्वात्कादेशएव । कोष्णम् ।

## विभाषा पुरुषे । १०६ ।

कोःका वा पुरुषे उत्तरपदे । कुपुरुषः कापुरुषः । ईषदर्थे तु पूर्वविप्रतिषेधेन नित्यं का भवति । ईषत्पुरुषः कापुरुषः ।

## कवञ्चोष्णे । १०७ ।

कोः कवंकाच वा उष्णे उत्तरपदे । कवोष्णम् । कोष्णम् । कदुष्णम् ।

## पथि च च्छन्दसि । १०८ ।

छन्दसिविषये कोः कवंकाच वा पथ्युत्तरपदे । कवपथः । कापथः । कुपथः ।

# पृषोदरादीनि यथोपदिष्टम् । १०६ ।

पृषोदरादीनि यथोपदिष्टानि साधूनि स्युः। पृषतः उदरं पृषोदरम्। तलोपः । वारिवाहको वलाहकः । पूर्वपदस्य वः उत्तरपदादेश्च लत्वम् । ( दिक्शब्देभ्यस्तीरस्यतारभावा वक्तव्यः ) दक्षिणतीरम् । दक्षिणतारम् । उत्तरतीरम् । उत्तरतारम् । ( वाचोवादेडत्वं वक्तव्यम्, वल भावश्चोत्तरपदस्य इञि वक्तव्यः ) वाग्वादस्याऽपत्यंवाड्वलिः । ( षष उत्वंदतृदशधासूत्तरपदादेः ष्टुत्वं च वक्तव्यम् ) षोडन् । षोडश ( धासुवेतिवक्तव्यम् ) ( उत्तरपदादःष्टुत्वञ्च वक्तव्यम् ) षोढा । षड्धा । ( दुरोदाशनाशदभध्येषु उत्वं वक्तव्यम् ) ( उत्तरपदादेश्च ष्टुत्वम् ) दूडाशः । दूणाशः । दूडभः । दूढ्यः । ( स्वरोरोहतौ छन्दस्युत्वं वक्तव्यम् ) एहित्वं जाये स्वरोहावेति । ( पीवोपवसनादीनां छन्दसि लोपो वक्तव्यः ) पीवोपवसनानाम् । पयोपवसनानाम् । श्रियेदम् । इलोपः ।

# संख्याविसायपूर्वस्याह्नस्याहनन्यतरस्यां ङौ । ११० ।

संख्याविसायपूर्वस्याह्नस्याहन्वास्यान्ङौ परे । द्वयोरह्नोर्भवो द्व्यह्नः । तस्मिन्द्व्यह्नि । द्व्यहनि । द्व्यह्ने । व्यपगतमहः व्यह्नः । व्यह्नि । व्यहनि । व्यह्ने । सायमह्नः सायाह्नः । सायाहनि । सायाह्ने । एकदेशि समासः । संख्या विसायपूर्वस्येति किम् । पूर्वाह्णे । अपराह्णे ।

# ढ्रलोपे पूर्वस्य दीर्घोऽणः । १११ ।

लोपनिमित्तयोर्ढरेफयोः परतः पूर्वस्याणो दीर्घः । लीढम् । नीरोगः । अग्नीरथः । अण इति किम् । वृढम् ।

# सहिवहोरोदवर्णस्य । ११२ ।

सहिवहोरवर्णस्य ओत्स्याड्ढ्लोपे । सोढा । वोढा । अवर्णस्य किम् । ऊढः । ऊढवान् । अवर्णस्येति किम् । ऊढः । वर्णग्रहणं किम् । कृताया मपि वृद्धौ यथास्यात् । उदवोढाम् ।

## साढ्यैसाढ्वा साढेति निगमे । ११३ ।

निगमे निपात्यन्ते । ओत्वापवादः । साढ्यै समन्तात्(१) । साढ्वा शत्रून् । साढा निगम इति किम् । सोढ्वा सोढेति भाषायाम् ।

## संहितायाम् । ११४ ।

अधिकारोऽयम् ।

## कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य । ११५ ।

विष्टादिभिन्नस्य लक्षणवाचिनो दीर्घः स्यात्कर्णे उत्तरपदे संहितायां विषये । दात्राकर्णः । इत्यादि । लक्षणस्येति किम् । शोभनकर्णः । अविष्टादीनामिति किम् । विष्टकर्णः ।

## नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ । ११६ ।

क्विबन्तेषु नह्यादिषु परतः पूर्वपदस्य दीर्घः संहितायाम् । उपानत् । नीवृत् प्रावृट् । हृदयावित् । नीरुक् । ऋतीषट् । तरीतत् । क्वाविति किम् । परिणहनम् ।

## वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम् । ११७ ।

कोटरादीनांकिंशुलकादीनाञ्च दीर्घो वनगिर्योरुत्तरपदयोः संज्ञायां विषये । कोटरावणम् । किंशुलका गिरिः । एषां किम् । असिपत्रवनम् ।

## वले । ११८ ।

वले परतः पूर्वस्य दीर्घः संज्ञायाम् । कृषीवलः । दन्तावलः ।

---

१ सहेः क्त्वाप्रत्ययस्य वा ध्यै । होढः, । ष्टुनाष्टुरितिष्टुत्वम, । ढोढेलोपः । ढ्रलोपेपूर्वस्येति दीर्घः । एवञ्चाद्यं द्वयं सहेःक्त्वाप्रत्यये द्वितीयन्तु तृनि निपात्यत इतिभावः ।

## मतौ बह्वचो ऽनजिरादीनाम् । ११९ ।

अजिरादिभिन्नस्य बह्वचोदीर्घो मतौपरे संज्ञायाम् । उदुम्बरावती । बह्वच इति किम् । व्रीहिमती । अनजिरादीनां किम् । अजिरवती ।

## शरादीनाञ्च । १२० ।

मतौ परे शरादीनां दीर्घः । शरावती । वंशावती ।

## इको वहे ऽपीलोः । १२१ ।

पीलुवर्जितस्येगन्तस्य दीर्घो वहे उत्तरपदे । ऋषीवहम् । कपीवहम् । नेह–पीलुवहम् । ( अपील्वादीनामितिवक्तव्यम् ) इह माभूत् । रुचिवहम् । चारुवहम् ।

## उपसर्गस्य घञ्यमनुष्ये बहुलम् । १२२ ।

घञन्ते उत्तरपदे उपसर्गस्य दीर्घो वहुलममनुष्ये । नीक्लेदः । वीमार्गः । परीवारः । ( अमनुष्यादिषु वक्तव्यम् ) तेनेह न । प्रसेवः(१) । प्रहारः । ( सादकारयोः कृत्रिमइति वक्तव्यम् ) एषोऽस्यप्रासादः । प्राकारोवा ( प्रतिवेशादीनां विभाषादीर्घत्वंवक्तव्यम् ) प्रतिकारः । प्रतीकारः । प्रतिवेशः । प्रतीवेशः ।

## इकः काशे । १२३ ।

काशे उत्तरपदे इगन्तस्योपसर्गस्य दीर्घः । नीकाशः । वीकाशः । अनूकाशः । इक इति किम् । प्रकाशः ।

## दास्ति । १२४ ।

दास्थाने यस्तकार स्तदादौ परत इगन्तस्योपसर्गस्य दीर्घः । नीत्तम् । वीत्तम् । परीत्तम् । इकइत्येव । प्रत्तम् । दइति किम् । वितीर्णम् । तीति किम् । सुदत्तम् ।

---

( १ ) गोण्यां प्रसिद्धस्य प्रसेवशब्दस्य हृते प्रसिद्धस्य प्रहारशब्दस्य च मनुष्यादिषु पाठादिति भावः । वस्तुतस्तु अमनुष्यादिष्वितिवार्तिकं बहुलग्रहणस्य प्रपंचभूतम् ।

## अष्टनः संज्ञायाम् । १२५ ।

अष्टनो दीर्घ उत्तरपदे संज्ञायां गम्यमानायाम् । अष्टावक्रः । संज्ञायां किम् । अष्टपुत्रः ।

## छन्दसि च । १२६ ।

अष्टनो दीर्घश्छन्दसि विषये । आग्नेयमष्टाकपालंनिर्वपेत् । ( गवि च युक्ते भाषायामष्टनो दीर्घो भवतीति वाच्यम् ) अष्टागवं शकटम् ।

## चितेः कपि । १२७ ।

कपिपरे चितेर्दीर्घः । एकचितीकः । द्विचितीकः ।

## विश्वस्य वसुराटोः (१) । १२८ ।

विश्वशब्दस्य दीर्घो वसुराटोरुत्तरपदयोः । विश्वावसुः । विश्वाराट् । राडिति किम् । विश्वराजौ ।

## नरे संज्ञायाम् । १२९ ।

विश्वशब्दस्य दीर्घो नरे उत्तरपदे संज्ञायाम् । विश्वानरो नाम यस्य तस्यापत्यं वैश्वानरिः । संज्ञाया मिति किम् । विश्वे नरा यस्य स विश्वनरः ।

## मित्रे चर्षौ । १३० ।

विश्वशब्दस्य दीर्घो मित्रे उत्तरपदे ऋषावभिधेये । विश्वामित्रः । ऋषाविति किम् । विश्वमित्रो माणवकः ।

## मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ । १३१ ।

मन्त्रविषये सोमादीनां दीर्घो मतौ परे । सोमावती । अश्वावती । इन्द्रियावती । विश्वदेव्यावती ।

---

( १ ) राडिति पदान्तो पलक्षणार्थं तेन जशत्वपक्षे ऽपि दीर्घः ।

## ओषधेश्च विभक्तावप्रथमायाम् । १३२ ।

ओषधेर्दीर्घोऽप्रथमायाम् विभक्तौपरतोमन्त्रे । ओषधीभिरपीपतत् । विभक्ताविति किम् । ओषधिपते ।
(१)

## ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् । १३३ ।

ऋचिविषये त्वादीनां दीर्घः । आतूनइन्द्र वृत्रहन् नू करणे । उतवाघास्यालात् मक्षूगोमन्तमीमहे । भरतःजातवेदसम् । कूमनः । अत्रागौः । उरुष्याणोऽग्नेः (२) ।

## इकः सुञि । १३४ ।

ऋग्विषये इगन्तस्य दीर्घः सुञिपरे । अभीषुणः सखीनाम् ।

## द्व्यचोऽतस्तिङः । १३५ ।

ऋग्विषये तिङन्तस्य द्व्यचोऽतो दीर्घः । विद्माहित्वासप्ततिं शूरगोनाम् ।

## निपातस्य च । १३६ ।

ऋग्विषये निपातस्य दीर्घः । एवाते । अच्छाते ।

## अन्येषामपि दृश्यते । १३७ ।

अन्येषामपि दीर्घो दृश्यते । यस्य दीर्घत्वं न विहितं दृश्यते च तदनेन कर्तव्यम् । केशाकेशि । (शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु) श्वादन्तः । श्वादंष्ट्रा । इत्यादि ।

## चौ । १३८ ।

चौ परे पूर्वस्य दीर्घः । प्रतीचः । दधीचः ।

## सम्प्रसारणस्य । १३९ ।

सम्प्रसारणान्तस्य दीर्घ उत्तरपदे । कारीषगन्धीपुत्रः पतिवर्ा ।

## इति षष्ठाध्यायस्य तृतीयः पादः ।

---

(१) घ इति तरप्तमपोर्ग्रहणं न 'किन्तु घरूपस्यैव' वेदे तस्यैव दीर्घदर्शनात् ।

(२) उरुष्येति कण्ड्वादियगन्तो रक्षणार्थः । लोटः सेर्हिः अतोहेरितिलुक् । न इत्यस्य नश्चधातुस्थोरुषुभ्य इति णत्वम् ।

# अथ षष्ठाध्यायस्य चतुर्थपादारम्भः

## अङ्गस्य । १ ।

अधिकारो ऽयमासप्तमपरिसमाप्तेः । फलञ्च तत्र तत्र वक्ष्यामः ।

## हल । २ ।

अङ्गावयवाद्धलः परं यत्सम्प्रसारणं तदन्ताङ्गस्य दीर्घः । हूतः । जीनः। संवीतः । हलः किम् । उतः । अङ्गावयवादिति किम् । निरुतम् । तदन्तस्येति । किम् । विचितः ।

## नामि । ३ ।

अजन्ताङ्गस्य दीर्घो नामि । अग्नीनाम् । वायूनाम् । नामिदीर्घ(१) आमिचेत्स्यात्कृते दीर्घे न नुड्भवेत् । वचनाद्यत्र तन्नास्ति नोपधायाश्च चर्म्मणाम् ।

## न तिसृचतसृ । ४ ।

एतयोरङ्गयोर्नामि न दीर्घः । तिसृणाम् । चतसृणाम् । अस्मादेव ज्ञापकादचि र ऋत इत्यतोनुड्भवति पूर्वविप्रतिषेधेन ।

## छन्दस्युभयथा । ५ ।

छन्दसि विषये एतयोरङ्गयोर्वादीर्घः । तिसृणां मध्यन्दिने । तिसृणां मध्यन्दिने । चतसृणां मध्यन्दिने । चतसृणां मध्यन्दिने ।

---

(१) आमि दीर्घविधाने ह्रस्वाभावान्नुडभावः प्रसज्यत इत्यनिष्टप्रसङ्गवारणाय नामीति सनुट्क निर्देश इति चेन्न, ह्रस्वग्रहणसामर्थ्याद्भूत पूर्वगति विज्ञानादिष्टसिद्धेः,। तिसृणाम्, चतसृणाम्, इत्यत्रतुनचारितार्थ्यम्,। ह्रस्वेति सूत्रे त्रेरनुवृत्त्या, षट्चतुर्भ्यश्चेति योगेन च नुटः सिद्धत्वात् । नृणामित्येकस्यैव प्रयोजकत्वे तु नृनद्यापः, इत्येव सूत्रयितु शक्यन्तस्मा नोपधाया इति सूत्रे चर्म्मणामित्यत्र दीर्घाभावार्थः सनुट्कनिर्देशः ।

## नृ च। ६।

अस्य नामि वा दीर्घः। नृणाम्। नृणाम्।

## नोपधायाः। ७।

नान्तस्योपधाया दीर्घो नामि। पञ्चानाम्। सप्तानाम्। नेति किम्। चतुर्णाम्।

## सर्वनामस्थाने चासम्बुद्धौ। ८।

नान्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने। राजा। राजानाविति। सामानि तिष्ठन्ति। पश्य वा। सर्वनामस्थान इति किम्। सामनि। असम्बुद्धाविति किम्। हे राजन्।

## वा षपूर्वस्य निगमे। ९।

निगमविषये षपूर्वस्य नान्तस्योपधाया असंबुद्धौ सर्वनामस्थाने वा दीर्घः। सतक्षाणं तिष्ठन्तमब्रवीत्। सतक्षणम्त्रा। निगम इति किम्। तक्षा।

## सान्तमहतः संयोगस्य। १०।

सान्तसंयोगस्य महतश्च योनकारस्तस्योपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने। श्रेयान्। श्रेयांसौ। श्रेयांसः। यशांसि। महान्। महान्तौ। असम्बुद्धाविति किम्। हे महन्।

## अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्। ११।

अबादीनामुपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने। आपः। कर्तारौ कटान्। कर्त्तारः कटस्य। स्वसारौ। नप्ता। नप्तारौ। नेष्टारौ इत्यादि। नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्। कोऽसौ नियमस्वरूपः। उणादिनिष्पन्नानां तृन्तृजन्तानां संज्ञाशब्दानां दीर्घश्चेत्तर्हि नप्त्रादितृन्तृजन्तानामेव। तेन मातापित्रादीनां न। मातरौ। मातरः। अव्युत्पत्तिपक्षे

विध्यर्थमेव(१)।

## इन्हन्पूषार्य्यम्णां शौ ।१२।

नियमार्थोऽयमारम्भः(२)। इन्नादीनामुपधाया दीर्घः शावेव। बहुदण्डीनि। बहुवृत्रहाणि। बहुपूषाणि। बह्वर्य्यमाणि। नियमादिह न। बहुदण्डिनौ। बहुदण्डिनः।

## सौ च।१३।

इन्नादीनामुपधाया दीर्घोऽसम्बुद्धौ सौ। दण्डी। वृत्रहा। पूषा। अर्य्यमा। असम्बुद्धाविति किम्। हे दण्डिन् इत्यादि।

## अत्वसन्तस्य चाधातोः ।१४।

अत्वन्तस्य धातुभिन्नासन्तस्य चोपधाया दीर्घोऽसम्बुद्धौ सौ। भवान्। सुपयाः। अधातो रिति किम्। पिण्डं ग्रस्त इति पिण्डग्रः। चर्म्म वस्त इति चर्म्मवः। असम्बुद्धावित्येव। हे गोमन। हे सुपयः।

## अनुनासिकस्य क्विझलोः क्ङिति।१५।

अनुनासिकान्तस्योपधाया दीर्घः कौ झलादौ क्ङिति च। प्रशान्। प्रतान्। शान्तिः। शान्तः। शान्तवान। शंशान्तः। तन्तान्तः। अनुनासिकेति किम्। ओदनपाक्। पक्वः। क्विझलो रिति किम् गम्यते। क्ङितीति, किम्। गन्ता।

## अज्झनगमां सनि ।१६।

(१) उत्तरपक्ष एव ज्यायान् उणादीनामव्युत्पन्नप्रातिपदिकत्वात्। एतदुक्तं भवति "उणादयो ऽव्युत्पन्नानि प्रातिपदिकानि" इति। उद्गातृशब्दस्य समर्थ सूत्रे "उद्गातारौ, उद्गातारः" इति भाष्यप्रयोगाद् दीर्घो भवत्येव।

(२) उपधादीर्घमात्रापेक्षया नियमविज्ञानाद् वृत्रहणीति सप्तम्येकवचने "अनुनासिकस्य क्विझलोरितिदीर्घो न। उपधादीर्घस्यैव नियमात् 'वृत्रहायते' इत्यकृत्सार्वधातुकेति दीर्घो भवत्येव।

अजन्तानां हन्तेरजादेशगमेश्चोपधाया(१) दीर्घो झलादौ सनि। तुष्टूषति। चिकीर्षति। जिघांसति। अधिजिगांसते(२)।

## तनोतेर्विभाषा। १७।

तनोतेरङ्गस्योपधाया वा दीर्घो झलादौ सनि। तितांसति। तितंसति। झलीत्येव तितनिषति।

## क्रमश्च क्त्वि। १८।

क्रम उपधाया दीर्घो वा झलादौ क्त्वि। क्रान्त्वा। क्रन्त्वा। झलीत्येव क्रमित्वा।

## च्छ्वोः शूडनुनासिके च(३)। १९।

सतुक्कस्य छस्य वस्य च शूठावनुनासिके क्वौ झलादौ क्ङिति च। प्रश्नः। विश्नः। स्योनः। शब्दप्राट्। अक्षद्यूः। पृष्टः। पृष्टवान्। द्यूतः। द्यूतवान्।

## ज्वरत्वरस्रिव्यविमवामुपधायाश्च(४)। २०।

ज्वरादीनामुपधाया वस्य च ऊठ् क्वावनुनासिके झलादौ च। जूः। जूरौ। जूर्तिः। तूः। तूर्त्तिः। स्रूः। स्रूतः। ऊः। ऊतिः। मूः। मूर्तिः।

## राल्लोपः। २१।

(१) एतच्च सूत्रेऽज्ग्रहणादेव लभ्यते। तथाच सनीत्येव सूत्रिते दीर्घश्चत्योपस्थितेनाचाऽङ्गस्य विशेषणात्सिद्धमजन्तानां दीर्घत्वम्, हनिगम्योश्चेति द्वितीयो योगस्तर्ह्येवं सिद्धे सत्यज्ग्रहणं प्रवृत्तिभेदेन गमेर्विशेषणम् अचो यो गमिस्तदादेश इति भावः।

(२) इणिकोरादेशस्यो दाहरणन्तु कर्म्मणि तङि जिगांस्यते, अधिजिगांस्यते इति।

(३) सतुक्ग्रहणं प्रश्नोविश्न इत्यत्र छकारस्य शकारे तुकोऽश्रवणार्थम्।

(४) अत्र क्ङितीति नानुवर्त्तते। अवते स्तुनि ओतु रित्यसिद्धिप्रसङ्गात्।

रेफात्परयोश्छ्वोर्लोपः क्वौ झलादौ क्ङिति च। मूः। मुरौ। मूर्तः। मूर्तिः। तूः। तुरौ। तूर्णवान्। तूर्तिः।

(१)

## असिद्धवदत्राऽऽभात्। २२।

अधिकारोऽयम्। समानाश्रये आभीये कर्त्तव्ये जाताभीयमसिद्धवत्। जहि। एधि। आभादिति किम्। अभाजि। रागः। अत उपधाया इति वृद्धौ कर्तव्यायां नलोपो नासिद्धो भवति। अत्र ग्रहणं किम्। पपुषः पश्य। ( वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ) वुग् उवङादेशे। बभूव। बभूवतुः। बभूवुः। युट् यणादेशे। उपदिदीये। उपदिदीयाते। उपदिदीयिरे। आभादिति अयमभिविधावाङ्। तेन भाधिकारेऽप्यसिद्धवद्भवति।

(२)

## श्नान्नलोपः। २३।

श्नात्परस्य नस्यलोपः। अनक्ति। हिनस्ति। शकारवतो ग्रहणं किम् यज्ञानाम्। सुपिचेति परत्वात् कृतेऽपि स्थानिवद्भावाच्छ्नान्नलोपः स्यादेव।

## अनिदितां हल उपधायाः क्ङिति। २४।

हलन्तानामनिदितामङ्गानामुपधाया नस्यलोपः क्ङिति प्रत्यये। स्रस्तः। ध्वस्तः। स्रस्यते। ध्वस्यते। सनीस्रस्यते। दनीध्वस्यते।

---

( १ ) अत्र ग्रहणात्समानाश्रय प्रतिपत्तिः, आभादिति च विषयलाभार्थन्तेन—समानाश्रये आभीये कर्त्तव्ये आभीयमसिद्धमिति सूत्रार्थ। एवञ्च पपुषः, चिच्युषः, लुलुवुषः, इह आकारलोपे, यणि, उवङि च कर्त्तव्ये वसोः सम्प्रसारणं नासिद्धम्। आलापादीनि क्सौ सम्प्रसारणञ्च विभक्ताविति समानाश्रयत्वाभावात्।

( २ ) लक्षणप्रतिपदोक्त प्रत्ययग्रहणपरिभाषाभ्यां विश्नानाम्, प्रश्नानामित्यत्र नलोपो न। शकारविशिष्टस्य ग्रहणन्तु यज्ञानामिति नलोप वारणार्थम्।

अनिदितां किम्। नन्यते। हलः किम्। नीयते। उपधायाः किम्। नह्यते। क्ङितीति किम्। स्रंसिता। (अनिदितां नलोपेलङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानंकर्तव्यम्(१) विलगितः। विकपितः (रञ्जेर्णौ मृगरमणे उपसंख्यानं कर्तव्यम्) रजयति मृगान्। (घिनुणि च) रागी। त्यजरजभजेतिनिपातनाद्वा।

## दंशसञ्जस्वञ्जां शपि। २५।

दंशादीनामुपधाया नस्यलोपः शपि। दशति। सजति। परिष्वजते।

## रञ्जेश्च। २६।

रञ्जेरुपधाया नस्य लोपः शपि। रजति।

## घञि च भावकरणयोः। २७।

रञ्जेरुपधाया नस्य लोपो भावकरणार्थे घञि परे। रञ्जनं रागः। रज्यतेऽनेनेति वा। भावकरणयोः किम्। रजन्ति तस्मिन्निति रंगः।

## स्यदो जवे। २८।

स्यन्देर्घञि नलोपो वृद्ध्यभावश्च निपात्यते जवेऽभिधेये। गोस्यदः। जव इति किम्। तैलस्यन्दः।

## अवोदैधौद्मप्रश्रथहिमश्रथाः। २९।

एते निपात्यन्ते। अवोदेति उन्दे रवपूर्वस्य घञि नलोपो निपात्यते। एध इति इन्धेर्घञि नलोपो गुणश्च निपात्यते। ओद्म इति उन्दे रौणादिके मन् प्रत्यये नलोपो गुणश्च निपात्यते। प्रश्रथ इतिश्रन्थेर्घञि नलोपो वृद्ध्यभावश्च।

## नाञ्चेः पूजायाम्। ३०।

---

(१) उपतापशब्देनात्र कृच्छ्रप्राप्तिर्गृह्यते नरोगः, अन्यथा शरीरविकारग्रहणं केवलं कुर्यात्। शरीरविकारश्च व्याधिर्नतु स्थौल्यादिः कम्पेरतद्विषयत्वात्। गत्यर्थत्वाच्चौभाभ्यां कर्त्तरि क्तः।

पूजायामर्थेऽञ्चेर्नलोपो न। अञ्चिता अस्य गुरवः। अञ्चेः पूजायामिति इडागमः। पूजायां किम्। उदक्तमुदकं कूपात्। यस्य विभाषेतीट् प्रतिषेधः।

## क्त्वि स्कन्दिस्यन्दोः। ३१।

स्कन्दिस्यन्दोरुपधाया नस्य लोपो न क्त्वाप्रत्यये परतः। स्कन्त्वा। स्यन्त्वा।

## जान्तनशां विभाषा। ३२।

जान्तानां नशेश्चोपधाया नस्यलोपो वा क्त्विपरे। रक्त्वा रङ्क्त्वा। भङ्क्त्वा। भक्त्वा। नशः। नष्ट्वा। नंष्ट्वा।

## भञ्जेश्च चिणि। ३३।

भञ्जेरुपधाया नस्य लोपो वा चिणि। अभाजि। अभञ्जि।

## शास इदङ्हलोः। ३४।

शास उपधाया इदङि हलादौ क्ङिति च। अशिषत्। शिष्टः। शिष्टवान्। तौ, शिष्टः। वयं शिष्मः। अङ्हलोरिति किम्। शासति। शासतु। ( शास इत्वे आशासः क्वावुपसंख्यानम् ) आशीरिति।

## शा हौ। ३५।

शासः शा हौ परे। शाधि माम्।

## हन्तेर्जः। ३६।

हन्तेर्जः हौपरे। जहि निद्राम्।

## (१) अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति। ३७।

---

(१) अनुनासिकेति लुप्तषष्ठीकंपदन्तेन अनुनासिकान्तानामेवामित्यर्थलाभः। एवञ्च नद्धः, मीढः, इत्यादिषु नह्मिहादीनामनन्त्यलोपो न।

अनुदात्तोपदेशानां वनतेस्तनोत्यादीनाश्चानुनासिकलोपो झलादौ क्ङिति । यमि रमि नमि गमि हनि मन्यतयोऽनुदात्तोपदेशाः । तनु षणु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु तनोत्यादयः । उद्यतः । आयतः । रतः । वतिः । ततः । ततवान् । अनुदात्तोपदेशेत्यादि किम् । शान्तः । शान्तवान् । अनुनासिकस्येति किम् । पक्वः । झलीति किम् । गम्यते । क्ङितीति किम् । यन्ता । ( अनुदात्तोपदेऽशेनुनासिकलोपो ल्यपिचेति(१) वक्तव्यम् ) प्रमत्य । प्रतत्य । ( वा अम इति वक्तव्यम् ) प्रगत्य । प्रगम्य । प्रयत्य । प्रयम्य । प्ररत्य । प्ररम्य । प्रणत्य । प्रणम्य ।

## वाल्यपि । ३८ ।

अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो ल्यपि वा । व्यवस्थितविभाषेयम्, तेन मकारान्तानां विकल्पः, अन्यत्र नित्यमेव लोपः । प्रमत्य । प्रतत्य । प्रगत्य । प्रगम्येत्यादि ।

## न क्तिचि दीर्घश्च । ३९ ।

अनुदात्तोपदेशादीनां दीर्घोऽनुनासिकलोपश्च न क्तिचि परे । यन्तिः । वन्तिः । तन्तिः ।

## गमः क्वौ । ४० ।

गमेरनुनासिकलोपः क्वौ । अङ्गगत् । ( गमादीनामिति वक्तव्यम् ) इहापि यथास्यात् । परीतत्सह कुण्डिकया । संयत् । सुनत् । ( ऊङ् च गमादीनामितिवक्तव्यम्, लोपश्च ) अग्रेगूः । अग्रेभ्रूः ।

## विड्वनोरनुनासिकस्याऽत् । ४१ ।

अनुनासिकान्तस्याङ्गस्याद्विड्वनोः परतः । गोजाः(२) । अब्जाः विजावा(३) । अवावा(४) ।

---

(१) वा ल्यपीतिसूत्रन्यासेऽविशेषेण विकल्पः प्राप्नोतीति वार्तिकारम्भः ।
(२) जनसनेति विट् प्रत्ययः ।
(३) अन्येभ्योऽपि दृश्यन्ते' इति वनिप् ।
(४) 'ओणृ अपनयने' इतिधातोः ।

## जनसनखनां सञ्झलोः । ४२ ।

जनादीनामात्वं झलादौ सनि झलादौ क्ङिति च । जातः । जातवान् । सिषासति । सातः । झलिकिम् सिसनिषति । खातः । खातवान् ।

## ये विभाषा । ४३ ।

जनादीनामाद्वा यादौ क्ङिति । जायते । जन्यते । जाजायते । जंजन्यते । सायते । सन्यते । सासायते । संसन्यते । खायते । खन्यते । चाखायते । चङ्खन्यते ।

## तनोतेर्यकि । ४४ ।

यकि तनोतेराद्वा । तायते । तन्यते । यकीति किम् । तन्तन्यते ।

## सनः क्तिचि लोपश्चास्यान्यतरस्याम् । ४५ ।

सनोतेः क्तिचि आत्वं वा लोपश्च वा । सातिः । सतिः सन्तिः ।

## आर्द्धधातुके । ४६ ।

अधिकारोऽयं न ल्यपीतियावत् ( अतोलोपोयलोपश्च णिलोपश्च प्रयोजनम् ( आल्लोप ईत्वमेत्वञ्च चिण्वद्भावश्च सीयुटि ॥१॥ ) चिकीर्षिता । चिकीर्षितुम् । आर्द्धधातुक इति किम् । भवति । भवतः ।

## भ्रस्जोरोपधयोरमन्यतरस्याम् । ४७ ।

भ्रस्जोरोपधयोः(१) स्थाने रम्वाऽऽर्द्धधातुके । भर्ष्टा । भ्रष्टा । भर्जनम् । भ्रज्जनम् भृष्टः । भृष्टवानित्यत्र पूर्वविप्रतिषेधेन सम्प्रसारणं भवति । उपदेश इत्येव । बरीभृज्यते ।

---

(१) मित्वादन्त्यादचः, स्थानषष्ठीनिर्देशाद्रोपधे निवर्त्तेते ।

(१)

## अतोलोपः ।४८।

आर्द्धधातुकोपदेशे यददन्तं तस्यातोलोपः । चिकीर्षिता । चिकीर्षितुम् । अत इति किम् । चेता । स्तोता । तपरकरणं किम् । याता । आर्द्धधातुक इति किम् । वृक्षत्वम् । वृद्धिदीर्घाभ्या मतोलोपः पूर्वविप्रतिषेधेन । चिकीर्षकः । चिकीर्ष्यते ।

(२)

## यस्य हल ।४९।

हलः परस्य यस्य लोप आर्द्धधातुके । बेभिदिता(३) । यस्येति संघातग्रहणमेतत् । संघात ग्रहणम् किम् । ईर्ष्यिता । हल इति किम् । पोपूयिता ।

## क्यस्य विभाषा ।५०।

हलः परस्य क्यस्य वा लोप आर्द्धधातुके । समिधिता । समिध्यिता । क्यच् क्यङोः सामान्यग्रहणम् ।

(४)

## णेरनिटि ।५१।

णेर्लोपोऽनिडादावार्द्धधातुके । अपीपचत् । कार्यते । हार्यते । इयङ् यण् गुणवृद्धिदीर्घाणामपवादः । अनिटीति किम् । कारयिता ।

## निष्ठायां सेटि ।५२।

---

(१) णयल्लोपावियङ् यण् गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन ।

(२) यस्येति संघातग्रहणम्–तेन ईर्ष्यितेत्यादौ यलोपोन । अर्थवद्ग्रहणपरिभाषया पुत्रकाम्येत्यादौ न दोषः–संघाताग्रहणेतु परिभाषानुपस्थित्या स्यादेव यलोपः ।

(३) आदेः परस्येति यलोपः । अतोलोप इत्यकार लोपः ।

(४) अनिड्ग्रहणं णिलोपस्यार्द्धधातुकमात्रविषयत्वे लिङ्गम् । तथाहि णेरित्येव सूत्रेऽजादावार्द्धधातुकं इयङादिभिर्बाधितो णिलोपः पारिशेष्यात् क्वचित्येव स्यादित्यनिड्ग्रहणस्य वैयर्थ्यप्रसक्त्याऽनिडाद्यार्द्धधातुकं सर्वमेवास्य विषय इति ज्ञायते । एवञ्च णयल्लोपाविति वार्त्तिके णयपेक्षितोंऽशः त्यक्तुं शक्यः, एवञ्च "अल्लोपोवृद्धिदीर्घाभ्या" मित्येव वार्त्तिकमस्तु ।

णेर्लोपः सेट्निष्ठायाम् । कारितम् । हारितम् । सेटीति किम् । संज्ञपितः पशुः ।

## जनिता मन्त्रे । ५३ ।

जनिता इति निपात्यते मन्त्रेऽभिधेये । यो नः पिता जनिता । लोके तु जनयिता ।

## शमिता यज्ञे । ५४ ।

शमिता इति निपात्यते यज्ञविषये । शृतंहविः शमितः । तृचिसमुद्धयन्तमेतत् । यज्ञ इति किम् । शृतं हविः शमयितः ।

(१)

## अयामन्ताऽल्वाय्येत्न्विष्णुषु । ५५ ।

णेरयादेश आम् अन्त आलु आय्य इत्नु इष्णुषु परतः । कारयाञ्चकार । गण्डयन्तः । स्पृहयालुः । स्पृहयाय्यः । स्तनयित्नुः । पारयिष्णवः ।

## ल्यपि लघुपूर्वात् । ५६ ।

लघुपूर्वाण्णेरय् ल्यपि परे । प्रशमय्य गतः । संदमय्य गतः । प्रबेभिदय्य गतः । प्रगणय्य गतः । लघुपूर्वादिति किम् । प्रपात्य गतः ।

## विभाषाऽऽपः । ५७ ।

आपः परस्य णेरय् वा ल्यपि परे । प्रापय्य, प्राप्य वा गतः । इङादेशस्य लाक्षणिकत्वान्न भवति । अध्याप्य गतः ।

## युप्लुवोर्दीर्घश्छन्दसि । ५८ ।

युप्लुवोर्दीर्घश्छन्दसि विषये ल्यपि परे । दान्त्यनुपूर्वं वियूय । यत्रा यो दक्षिणा परिप्लूय । छन्दसीति किम् । संयुत्य । आप्लुत्य ।

---

(१) नामन्तेत्यादि सूत्रितेऽपि णिलोपनिषेधे गुणायादेशाभ्यां "कामयाञ्चक्रे" इत्यादि सिद्ध्यति तथापि ल्यपिलघ्विति सूत्रार्थमयादेशो लाघवायात्रैवोपन्यस्तः; नहि प्रस्तनय्य, सङ्गमय्येत्यत्र गुणायादेशाभ्यां निर्वाहः ।

## क्षियः । ५९ ।

क्षियो दीर्घो ल्यपि परे । प्रक्षीय । उपक्षीय ।

(१)

## निष्ठायामण्यदर्थे । ६० ।

क्षियोदीर्घोऽण्यदर्थे निष्ठायाम् । आक्षीणः, प्रक्षीणो वा देवदत्तः । अण्यदर्थ इति किम् । अक्षित मसि मामेक्षेष्ठाः ।

## वा क्रोशदैन्ययोः । ६१ ।

आक्रोशदैन्ययोगम्यमानयोः क्षियो वा दीर्घोऽण्यदर्थे । क्षीणायुः, क्षितायुर्वा एधि । क्षितोऽयं क्षीणो वा तपस्वी ।

## स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदशेऽज्झनग्रहदृशां वा चिण्वदिट् च । ६२ ।

उपदेशेयोऽच्(२) तदन्तानां हनग्रहदृशाश्च भावकर्म्मणोः स्यसिच् सीयुट् तासिषु परतो वा चिण्वदेषामिडागमश्च । चिण्वद्धृद्धियुक्च-हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति । इट्चासिद्धस्तेनमेलुप्यते-णिर्नित्यश्चायं वल्निनिमित्तोऽविघाती । चायिष्यते । चेष्यते । अचायिष्यत । अचेष्यत । अचायिषाताम् । अचेषाताम् । चायिषीष्ट । चेषीष्ट । चायिता । चेता । घानिष्यते । हनिष्यते । ग्राहिष्यते(४) । ग्रहीष्यते । दर्शिष्यते । द्रक्ष्यते । अन्यान्यप्यूहनीयानि ।

---

(१) ण्यदर्थौ भावकर्म्मणी ततोऽन्यत्र दीर्घ इति भावः ।

(२) उपदेशेऽजन्तानामितिव्याख्याने णिजन्तानां न स्यात्तेषामुपदेशाभावात् । उपदेशो हि साक्षादुच्चारणम्—नच ण्यन्ताः साक्षादुच्चरिताः क्वचित् । कार्य्यञ्चात्राङ्गाधिकारादाङ्गमेव गृह्यते—तेन घानिष्यत इत्यादौ वधाद्यादेशा न ।

(३) चिण्वद्भावसन्नियोगशिष्टस्येट आभीयत्वेनासिद्धत्वादनिटीतिनिषेधस्याप्रवृत्त्या णेर्लोपो भवति ।

(४) अस्येटोदीर्घत्वन्न ग्रहोऽलिटीति सूत्रेण बलादिलक्षणस्यैवेटो दीर्घविधानात् ।

## दीङो युडचि क्ङिति । ६३ ।

दीङः(१) परस्याजादेः क्ङित आर्द्धधातुकस्य युट् स्यात् । उपदिदीये(२) उपदिदीयाते । उपदिदीयिरे । अचीति किम् । उपदेदीयते । क्ङितीति किम् । उपदानम् ।

## आतो लोप इटि च । ६४ ।

आकारान्तस्याङ्गस्य लोप इडादावार्द्धधातुकेऽजादौ क्ङिति च । पपिथ । पपतुः । पपुः । प्रदा । प्रधा । अचीत्येव । ग्लायते । दासीय ।

## ईद्यति । ६५ ।

आकारान्तस्याङ्गस्य ईद्यतिपरे । देयम् । धेयम् ।

## घुमास्थागापाजहातिसां हलि । ६६ ।

घुसंज्ञकानां मास्थादीनाञ्च ईद्धलादावार्द्धधातुके क्ङितिच । दीयते । देदीयते । मीयते । मेमीयते । स्थीयते । तेष्ठीयते । गीयते । जेगीयते । पीयते । पेपीयते । हीयते । जेहीयते । सीयते(३) सेसीयते । हलीति किम् । ददतुः । क्ङितीत्येव । दाता ।

## एर्लिङि । ६७ ।

घुसंज्ञकानां मास्थादीनाञ्च एत्वं किति लिङि । देयात् । धेयात् । मेयात् । स्थेयात् । गेयात् । पेयात् । हेयात् । सेयात् । क्ङितीत्येव । दासीष्ट ।

## वान्यस्य संयोगादेः । ६८ ।

घुमास्थादेरन्यस्य संयोगादेराकारान्तस्याङ्गस्यैत्वम्वाऽऽर्द्धधातुके लिङि । ग्लेयात् । ग्लायात् । संयोगादेरिति किम् । यायात् ।

---

(१) दीङ इति पञ्चम्यन्तम् उभय निर्देशे पञ्चमी निर्देशस्य बलीयस्त्वादचीति सप्तम्याः षष्ठीकल्पनम् ।

(२) वुग्युटाविति युटः सिद्धत्वा द्यण् न ।

(३) स्यतेरेव ग्रहणं व्याख्यानात् ।

क्ङितीत्येव। ग्लासीष्ट। अङ्गस्येत्येव। निर्वायात्। अन्यस्येति किम्। स्थेयात्।

## न ल्यपि। ६९।

ल्यपि परे घुमास्थादेरीत्वन्न। प्रदाय। प्रधाय।

## मयतेरिदन्यतरस्याम्। ७०।

मयतेरिद्वा ल्यपि परे। अपमित्य, अपमाय वा, याचते।

## लुङ्लङ्लृङ्क्ष्वडुदात्तः। ७१।

एष्वङ्गस्याट् सचोदात्तः। अकार्षीत्। अकरोत्। अकरिष्यत्।

## आडजादीनाम्। ७२।

अजादीनामाट् लुङ् लङ् लृङ्क्षु परतः सचोदात्तः। ऐहिष्ट। ऐहत। ऐहिष्यत।

## छन्दस्यपि दृश्यते। ७३।

छन्दस्यप्याडागमो दृश्यते यतो विहितस्ततोऽन्यत्रेत्यर्थः। सुरुचोवेन आवः। आव इति वृञो लुङि, मन्त्रे घसह्वरेति लेर्लुकि कृते भवति।

## न माङ्योगे। ७४।

माङ्योगेऽडाटौ न। मा भवान् कार्षीत्। मा स्म करोत्।

## बहुलं छन्दस्यमाङ्योगेऽपि। ७५।

छन्दसि विषयेऽमाङ्योगेपि बहुलमडाटौ स्तः। जनिष्ठा उग्रः। कामसूनयीत्। मा वः क्षेत्रे परवीजान्यवाप्सुः।

## इरयोरे। ७६।

छन्दसि विषय इरे स्थाने रे स्यात्। याऽस्य परि दध्रे(१)।

---

(१) रभावस्याभीयत्वेनासिद्धत्वादालोपः। रेशब्दस्येटि कृते पुनरपि रे भावः, लक्षणप्रतिपदोक्तपरिभाषा तु इरयोरिति द्विवचननिर्देशाद्बाध्यते। रेभावस्य वैयर्थ्यन्तु न, क्रादिषु चरितार्थत्वात्।

## अचि श्नुधातुभ्रुवां य्वोरियङुवङौ । ७७ ।

श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्यचाङ्गस्य इयङुवङावजादौ प्रत्यये परे । आप्नुवन्ति । चिक्षियतुः । लुलुवतुः । भ्रुवौ । भ्रुवः । अचीति किम् । आप्नुयात् । श्नुधातुभ्रुवामिति किम् । लक्ष्म्यै । वध्वै । य्वो रिति किम् । चक्रतुः । ( इयङादि प्रकरणे तन्वादीनां छन्दसि बहुलम् ) तन्वं तनुवं वा पुषेम । त्र्यम्बकं । विषुवं वा पुषेम । स्वर्गो लोकः । सुवर्गो लोकः । त्र्यम्बकं यजामहे । त्रियम्बकं यजामहे ।

(२)
## अभ्यासस्यासवर्णे । ७८ ।

इवर्णोवर्णान्तस्याभ्यासस्येयङुवङावसवर्णेऽचि । इयेष । उवोष । असवर्ण इति किम् । ईषतुः । अचीत्येव । इयाय ।

## स्त्रियाः । ७९ ।

स्त्रिया इयङ् अजादौ प्रत्यये । स्त्रियौ । स्त्रियः । स्त्रीणामित्यत्र परत्वान्नुडागमः । पृथग्योगकरणमुत्तरार्थम् ।

## वाऽम्शसोः । ८० ।

स्त्रिया इयङ् वाऽम्शसोः । स्त्रियम् । स्त्रीम् । स्त्रियः । स्त्रीः ।

## इणो यण् । ८१ ।

इणो यण् अचि । यन्ति । यन्तु । इयङादेशाऽपवादः । मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इति गुणवृद्धिभ्यां परत्वाद् बाध्यते । अयनम् । आयकः ।

## एरनेकाचोऽसंयोगपूर्वस्य । ८२ ।

---

(२) असवर्णग्रहणेन "वार्णादाङ्गं बलीयः" इति परिभाषा ज्ञाप्यते, अन्यथा अन्तरङ्गत्वात्सवर्ण दीर्घे इयङुवङौ न स्यातामितीष्टरूपासिद्धिः । गुणोऽपि स्थानिवन्न असवर्णग्रहणसामर्थ्यात् । यावंतानुपपत्तिस्तत्सर्वं ज्ञाप्यत इति भावः ।

धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यणजादौ प्रत्यये । निन्यतुः । निन्युः । एरिति किम् । लुलुवतुः । अनेकाच् किम् । नियौ । असंयोगपूर्वस्येति किम् । यवक्रियौ ।

## ओः सुपि । ८३ ।

धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यणजादौ सुपि । खलप्वौ । खलप्वः । शतस्वौ । शतस्वः । गतिकारकपूर्वस्यैवेष्यते । तेनेह न । परमलुवौ । परमलुवः । अनेकाच इत्येव । लुवौ । लुवः । असंयोगपूर्वस्येत्येव । कटप्रुवौ ।

## वर्षाभ्वश्च । ८४ ।

अस्य यण् अचि सुपि । वर्षाभ्वौ । वर्षाभ्वः । ( वर्षादृन्कारपुनः(१) पूर्वस्य भुव इति वक्तव्यम् ) दृन्भ्वौ । कारभ्वौ । पुनर्भ्वौ ।

## न भूसुधियोः । ८५ ।

एतयोरचि सुपि यण् न । प्रतिभुवौ । प्रतिभुवः । सुधियौ । सुधियः ।

## छन्दस्युभयथा । ८६ ।

छन्दसि विषये भूसुधीशब्दयोर्यण् वा । वनेषु चित्रं विभ्वं विशे विशे । विभुवम् । सुध्योहव्यमग्ने । सुधियो हव्यमग्ने ।

## हुश्नुवोः सार्वधातुके । ८७ ।

जुहोतेरङ्गस्य श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्य च असंयोगपूर्वो य उवर्णस्तस्य यण् अजादौ सार्वधातुके । जुह्वति । सुन्वन्ति । हुश्नुवोरिति किम् । यो युवति । सार्वधातुक इति किम् । जुहुवतुः । असंयोगपूर्वस्येत्येव । आप्नुवन्ति ।

## भुवो वुग्लुङ्लिटोः । ८८ ।

---

( १ ) भ्वन्तस्यानेकाचोऽङ्गस्य यण् स्याच्चेद्वर्षाभ्वादीनामेवेति नियमाभ्युपगमेन न भूसुधियोरिति सूत्रे भूग्रहणं त्यक्तुं शक्यम् ।

भुवो वुगागमो लुङ्लिटोरचि । अभूवन् । बभूव ।

(१)

## ऊदुपधाया गोहः । ८६ ।

गोह उपधाया ऊदजादौ प्रत्यये । निगूहति । निगूहकः । उपधायाः किम् अन्त्यस्य माभूत् ।

(२)

## दोषो णौ । ९० ।

दोष उपधाया ऊण्णौ । दूषयति । विकृत ग्रहणं प्रक्रमाभेदार्थम् । पूर्वत्र हि गोह इत्युक्तम् । णाविति किम् । दोषो वर्तते ।

## वा चित्तविरागे । ९१ ।

चित्तविरागेऽर्थे दोष उपधाया ऊद्वा णौ । चित्तं दूषयति, दोषयति वा । विरागोऽप्रीतता ।

## मितां ह्रस्वः । ९२ ।

मितामुपधाया ह्रस्वो णौ । घटयति । रमयति ।

(३)

## चिण्णमुलोर्दीर्घोऽन्यतरस्याम् । ९३ ।

चिण्परे णमुलपरे च णौ मितामुपधाया दीर्घो वा । अशमि । अशामि । शमं शमम् । शामं शामम् ।

## खचि ह्रस्वः । ९४ ।

---

( १ ) गोह इति कृतगुणनिर्देशो विषयार्थम् यत्र गुणोभावी तत्रैव यथास्यादिहमाभूत् । जुगुहतुः, जुगुहुरिति । उऊदिति प्रश्लिष्य प्रत्याख्यातो विकारनिर्देशो भाष्ये ।

( २ ) णौ सर्वत्रैव गुणप्रसङ्गाद् ष इत्येव वक्तव्यम् ।

( ३ ) ह्रस्वविकल्पविधाने ण्यन्तादणौ णिलोपस्य स्थानिवद्भावाद्ध्रस्वविकल्पासिद्धेः दीर्घविधौ पुनर्नस्थानिवदिति दीर्घः सिद्ध्यति । यद्यपि भाष्यमते द्विवचनादीनां प्रत्याख्यातत्वाण्णाविति जातिपरनिर्देशमाश्रित्य ह्रस्वविकल्पेऽपीष्टं सिद्ध्यति । तथापि हेडृ धातोर्णौ चिणि ह्रस्वविकल्पे सति "अहिडि, अहेडि" इति स्यादिष्यते च अहिडि, अहीडि, इति तच्च दीर्घग्रहणाभावे न सिद्ध्यतीति दीर्घग्रहणमावश्यकमेव ।

खच्परे णावङ्गस्योपधाया ह्रस्वः। द्विषन्तपः। परन्तपः। पुरन्दरः।

## ह्लादो निष्ठायाम्। ९५।

ह्लाद उपधाया ह्रस्वो निष्ठायाम्। प्रह्लन्नः। प्रह्लन्नवान्। निष्ठायां किम्। प्रह्लादयति। ह्लाद इति योगविभागः क्रियते। क्तिन्यपि यथा-स्यात्। प्रह्लत्तिरिति।

## छादेर्घेऽद्व्युपसर्गस्य। ९६।

अद्व्युपसर्गस्य छादेरङ्गस्योपधाया ह्रस्वो घे परे। (अद्विप्रभृत्युपसर्गस्येति वक्तव्यम्) उदरच्छदः। प्रच्छदः। दन्तच्छदः। अद्व्युपसर्गस्येति किम्। समुपच्छादः।

## इस्मन्त्रन्क्विषु च। ९७।

छादेरङ्गस्योपधाया ह्रस्व इस्मन्त्रन्क्विषु। छदिः। छद्म। छत्रम्। धामच्छत्। उपच्छत्।

## गमहनजनखनघसां लोपः क्ङित्यनङि। ९८।

गमादीनामुपधाया लोपोऽजादौ क्ङिति नत्वङि। जग्मतुः। जघ्नतुः। जज्ञे। चख्नतुः। जक्षतुः। क्ङितीति किम्। गमनम्। अनङीति किम्। अगमत्। अचीत्येव। गम्यते।

## तनिपत्योश्छन्दसि। ९९।

छन्दसि विषये तनिपत्योरुपधाया लोपोऽजादौ क्ङिति। वितत्निरे(१) कवयः। शकुना इव पप्तिम। छन्दसीति किम्। वितेनिरे पेतिम्।

## घसिभसोर्हलि च। १००।

घसिभसोरुपधाया लोपोहलादावजादौ च क्ङिति छन्दसि। सग्धिश्च मे सपीतिश्च मे। बब्धां ते हरीधानाः। क्ङितीत्येव। अंशून् बभस्ति।

(१) छन्दसि सर्वविधीनां विकल्पनादत्रेरयो रेति रे आदेशो न।

## हुझल्भ्यो हेर्धिः । १०१ ।

जुहोतेर्झलन्तेभ्यश्च परस्य हेर्धिः । जुहुधि । भिन्धि । छिन्धि । हेरिति किम् । जुहुताम् । हलीत्येव । रुदिहि । इह जुहुतात्, भिन्तात् त्वमिति परत्वात् तातङिकृते सकृद् गतौ विप्रतिषेधे यद् बाधितं तद्बाधितमेवेति पुनर्धिभावो न भवति । भिन्धकि, छिन्धकीत्यत्र तु परत्वाद् धिभावे कृते पुनः प्रसङ्गविज्ञानादकच् क्रियते ।

## श्रुशृणुपृकृवृभ्यश्छन्दसि । १०२ ।

छन्दसि विषये श्र्वादिभ्यः परस्य हेर्धिः । श्रुधीहवमिन्द्र । शृणुधीगिरः । पूर्धि । उरुणस्कृधि । अपावृधि ।

## अङितश्च । १०३ ।

छन्दसि विषयेऽङितोहेर्धिः । युयोध्यस्मज्जुहुराणमेनः(१) । अङित इति किम् । हव्यं प्रीणीहि ।

## चिणो लुक् । १०४ ।

चिणः परस्य लुक् । अपाचि । अलावि । अहारितराम्, अहारितमाम् इत्यत्र तलोपस्यासिद्धत्वात् तरपतमयोर्नलुग् भवति, चिणोलुगित्येतद् विषयभेदाद्भिद्यते ।

## अतो हेः । १०५ ।

अतः परस्य हेर्लुक् । भव । गच्छ । प्रयच्छ । अत इति किम् । युहि । रुहि । तपरकरणं किम् । लुनीहि । ईत्वस्यासिद्धत्वादकार एव भवति ।

## उतश्च प्रत्ययादसंयोगपूर्वात् । १०६ ।

असंयोगपूर्वो यः प्रत्ययोकारस्तदन्ताद् अङ्गात्परस्य हेर्लुक् । कुरु । शृणु । चिनु । उत इति किम् । लुनीहि । प्रत्ययादिति किम् । रुहि । असंयोगपूर्वादिति किम् । आप्नुहि । ( उतश्चप्रत्ययाच्छन्दो वा वचनम् )

(१) वा छन्दसीति पित्वेनास्याङित्वम् ।

आतनुहि यातुधानान् । धिनुहि यज्ञपतिम् ।

## लोपश्चास्यान्यतरस्यां म्वोः । १०७ ।

असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा म्वोः परयोः। सुनुवः । सुन्वः । सुनुमः । सुन्मः । तनुवः । तन्वः । तनुमः । तन्मः । प्रत्ययस्येत्येव । युवः । असंयोगपूर्वस्येत्येव । शक्नुवः । लुगिति वर्तमाने लोपग्रहणं मन्त्यलोपार्थम् ।

## नित्यं करोतेः । १०८ ।

करोतेः परस्य प्रत्ययोतो नित्यं लोपो म्वोः परयोः । कुर्वः । कुर्मः । उकारलोपस्य दीर्घविधौ स्थानिवद्भावाद् हलि चेति दीर्घत्वं प्राप्तं न भकुर्छुरामिति प्रतिषिध्यते ।

## ये च । १०९ ।

करोतेः परस्य प्रत्ययोतो नित्यं लोपो यादौ प्रत्यये । कुर्यात् ।

## अत उत्सार्वधातुके । ११० ।

उप्रत्ययान्तस्य करोतेरत उत् सार्वधातुके क्ङिति । कुरुतः । कुर्वन्ति । सार्वधातुकग्रहणं भूतमात्रेऽपि सार्वधातुके यथास्यात् इत्येतदर्थम् । कुरु । क्ङितीत्येव । करोति ।

## श्नसोरल्लोपः । १११ ।

श्नस्यास्तेश्चातोल्लोपः क्ङितिसार्वधातुके । रुन्धः । रुन्धन्ति । स्तः । सन्ति । क्ङितीत्येव । भिनत्ति । श्नसोरिति पररूपं शकन्ध्वादिषु द्रष्टव्यम् ।

## श्नाभ्यस्तयोरातः । ११२ ।

श्नाभ्यस्तयोरातो लोपः क्ङिति सार्वधातुके । लुनते । लुनताम् । मिमते । मिमताम् । आत इति किम् । बिभ्रति । क्ङितीत्येव । अलुनात् । श्नाभ्यस्तयो रिति किम् । यान्ति ।

## ई हल्यघोः । ११३ ।

श्नाभ्यस्तयोरात ई हलादौ कङिति सार्वधातुके न तु घोः । लुनीतः । पुनीतः । मिमीते । हलीति किम् । लुनन्ति । अघो रिति किम् । दत्तः । कङितीत्येव । लुनाति ।

## इद्दरिद्रस्य । ११४ ।

दरिद्रस्यात इद्धलादौ कङिति सार्वधातुके । दरिद्रितः । दरिद्रिवः । दरिद्रिमः । हलीत्येव । दरिद्रति । कङितीत्येव । दरिद्राति । ( दरिद्रातेरार्द्धधातुके लोपोवक्तव्यः सिद्धश्च प्रत्ययविधौ ) दरिद्रातीति दरिद्रः । न दरिद्रायके लोपो दरिद्राणे च नेष्यते । दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा । ( अद्यतन्यां वा ) अदरिद्रासीत् । अदरिद्रीत् । तनिपतिदरिद्रातिभ्यः सनो वेड्वाच्यः ।

## भियोऽन्यतरस्याम् । ११५ ।

भिय इद्वा हलादौ कङिति सार्वधातुके । बिभितः । हलीत्येव । बिभ्यति । कङितीत्येव । बिभेति । सार्वधातुक इत्येव । भीयते ।

## जहातेश्च । ११६ ।

जहातेरिद्वाहलादौ कङिति सार्वधातुके । जहितः । जहीतः । हलादावित्येव । जहति । कङितीत्येव । जहाति । सार्वधातुक इत्येव । हीयते ।

## आ च हौ । ११७ ।

जहातेरा चादिद्वा हौ परे । जहाहि । जहिहि । जहीहि ।

## लोपो यि । ११८ ।

जहातेर्लोपो यादौ कङिति सार्वधातुके । जह्यात् ।

## घ्वसोरेद्धावभ्यासलोपश्च । ११९ ।

घोरस्तेश्चैत्वं हौपरे ऽभ्यासलोपश्च । आभीयत्वेनैत्वस्यासिद्धत्वाद्धे र्धिः । श्नसोरित्यल्लोपः । देहि । एधि । शिदयंलोपस्तेन सर्वस्याभ्यासस्य भवति ।

(१)

## अत एकहल्मध्येऽनादेशादेर्लिटि । १२० ।

लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात एदभ्यासलोपश्च किति लिटि । रेणतुः । रेणुः । पेचतुः । अत इति किम् । दिदिवतुः । तपरकरणं किम् । ररासे । एकहल्मध्य इति किम् । ररक्षतुः । अनादेशादे रिति किम् । चकणतुः । लिट आदेश विशेषणं किम् । इहापि यथा स्यात् । नेमतुः । सेहे । क्ङितीत्येव । अहं पपच । (दम्भ एत्वं वक्तव्यम्) देभतुः । देभुः । छन्दसि अमिपचोरिति-वक्तव्यम्(२) ।

## थलि च सेटि । १२१ ।

पूर्वोक्तं सेटि थल्यपि स्यात् । पेचिथ । सेटीति किम् । पपक्थ । अत इत्येव । दिदेविथ । अनादेशादे रेव । चकणिथ ।

## तॄफलभजत्रपश्च । १२२ ।

एषामेत्वाभ्यासलोपौ किति लिटि सेटि थलि च । तेरतुः । तेरिथ । फेलतुः । फेलिथ । भेजतुः । भेजिथ । त्रेपे । (श्रन्थेश्चेति वक्तव्यम्) श्रेथतुः ।

## राधो हिंसायाम् । १२३ ।

हिंसायामर्थे राधेरात एत्वमभ्यासलोपश्च किति लिटि सेटि थलि च । च । अपरेधुः । अपरेधिथ । सायामिति किम् । रराधतुः ।

## वा जॄभ्रमुत्रसाम् । १२४ ।

---

(१) आदेशोऽत्र वैरूप्य कृदेव गृह्यते शसिदद्योः प्रतिषेधसामर्थ्यात् ।

(२)अनेशं मेनके त्येतद् व्येमानं लिङि पेचिरन् । यजायेजे वपावेपे दम्भ एत्वमलक्षणम् ॥ असिद्धत्वान्नलोपस्य दम्भ एत्वं न सिद्ध्यति । असोरत्वे तकारेण ज्ञायते त्वेत्वशासनम् ।

एषामेत्वाभ्यासलोपौ वा किति लिटि सेटि थलि च। जेरतुः। जजरतुः। जेरिथ। जजरिथ। भ्रेमतुः। बभ्रमतुः। भ्रेमिथ। बभ्रमिथ। त्रेसतुः। तत्रसतुः। त्रेसिथ। तत्रसिथ।

## फणाञ्च सप्तानाम्। १२५।

सप्तानां फणादीनामत एत्वमभ्यासलोपश्च वा किति लिटि सेटि थलि च। फेणतुः। पफणतुः। फेणिथ। पफणिथेत्यादि। सप्ताना मिति किम्। दध्वनतुः। दध्वनुः।

## न शसददवादि गुणानाम्। १२६।

शसेर्ददेर्वकारादीनाञ्च गुणशब्देन विहितोयोऽकारस्तस्यैत्वाभ्यासलोपौ न। शशसतुः। शशसुः। ददे। ववमतुः। ववमुः। ससरतुः। ससरुः। लुलविथ। पुपविथ।

## अर्वणस्त्रसावनञः। १२७।

नञारहितस्यार्वन्नित्यस्याङ्गस्य तृ इत्यन्तादेशो न तु सौ। अर्वन्तौ। अर्वन्तः। त्रसाविति किम्। अर्वा। अनञ इति किम्। अनर्वाणौ।

## मघवा बहुलम्। १२८।

मघवन् शब्दस्य वा तृ इत्यन्तादेशः। मघवान्। मघवन्तौ। मघवन्त(१)। तृत्वाभावे सुटि राजवत्। मघवा।

## भस्य। १२९।

अधिकारोऽयमापादपरिसमाप्तेः। वक्ष्यति, पादः पत्। द्विपदः पश्य। भस्येति किम्। द्विपादौ।

## पादः पत्। १३०।

पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः। स च

(१) अर्वणस्तृ मघोनश्च न शिष्यंछान्दसं हि तत्। मतुब्वन्योर्विधानाच्च छन्दस्युभय दर्शनात।

निर्दिश्यमानस्यादेशा भवन्तीति पादूशब्दस्यैव, न तदन्तस्य। द्विपदः पश्य। द्विपदा कृतं। द्विपदे देहि।

## वसोः सम्प्रसारणम्। १३१।

वस्वन्तस्य भस्य संप्रसारणम्। विदुषः पश्य। वसुसम्प्रसारणे क्वसोरपि ग्रहणमिष्यते।

(१)

## वाह ऊठ्। १३२।

भस्य वाहः सम्प्रसारणमूठ्। प्रष्ठौहः। प्रष्ठौहा। दित्यौहः। दित्यौहा।

## श्वयुवमघोनामतद्धिते। १३३।

भसंज्ञकानामेषामन्नन्तानामतद्धिते(२) सम्प्रसारणम्। शुनः। यूनः। मघोनः। अतद्धित इति किम्। शौवनं मांसम्। यौवनं वर्तते। शुनो विकारे 'प्राणिरजतादिभ्योऽञ्' इत्यञ्। 'द्वारादीना' मित्यैजागमः।

## अल्लोपोऽनः। १३४।

अन्नन्तस्य भस्याकारस्य लोपः। राज्ञः। नकारान्तस्यायं लोप इष्यते। नेह, राजकीयमिति।

## षपूर्वहन् धृतराज्ञामणि। १३५।

षपूर्वो योऽन् तस्य हनादेश्च भस्याऽतो लोपोऽणिपरे। औक्ष्णः। भ्रौणघ्नः। धार्तराज्ञः। षपूर्वहन् धृतराज्ञामितिकिम्। सामनः। वैमनः। अणीति किम्। ताक्षण्यः।

---

(१) सम्प्रसारणमात्र विधानेऽपि परत्वाल्लघूपधगुणेकृते वृद्धिरेचीति वृध्या प्रष्ठौह इत्यादि सिद्धे सति ऊड्ग्रहणेन "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषा ज्ञाप्यते।

(२) अल्लोपोऽन इत्यत्र योगविभागः क्रियते "अल्लोपः" ततः "अनः" अन इत्युभयोः श्वयुवाल्लोपसूत्रयोः शेष इति विज्ञानान्नान्तानां कार्यं विज्ञायते तेन मघवतः, राजकीयमित्यादौ सम्प्रसारणाल्लोपौ न।

## विभाषा ङिश्योः । १३६ ।

अन्नन्तस्यातो लोपो वा ङिश्योः । राज्ञि । राजनि । साम्नी । सामनी ।

## न संयोगाद्वमन्तात् । १३७ ।

वमन्तात् संयोगात् परस्याऽनोऽकारस्य लोपो न । यज्वनः पश्य । ब्रह्मणा कृतम् । संयोगादिति किम् । प्रतिदीव्ना । वमन्तादिति किम् । तक्ष्णा ।

## अचः । १३८ ।

लुप्तनकारस्याञ्चते र्भस्याकारस्य लोपः । दधीचः(१) पश्य ।

## उद ईत् । १३९ ।

उदः परस्य लुप्तनकारस्याञ्चते र्भस्य ईत् । उदीचः पश्य ।

(१)

## आतो धातोः । १४० ।

आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः । कीलालपः पश्य । आत इति किम् । निया । धातो रिति किम् । खट्वाः पश्य । आत इति योग विभागः । तेन क्त्वो ल्यप् इत्यादि सिद्धम् ।

## मन्त्रे ष्वाङ्यादेरात्मनः । १४१ ।

मन्त्रविषय आत्मन आदेर्लोप आङिपरे । त्मनादेवेभ्यः । ( आङो ऽन्यत्रापि छन्दसि लोपो दृश्यते ) त्मन्या समञ्जत मह्यम् ।

## ति विंशतेर्डिति । १४२ ।

भस्य विंशतेः परस्य तिशब्दस्य लोपो डिति । विंशत्या क्रीतो

---

(१) चाविति पूर्वपदस्य दीर्घः ।

(२) आत इति योगविगात् "हलःश्नः" "क्रमश्चक्त्वि" क्त्वोल्यवादिष्वप्याकारलोपः ।

विंशकः । एवं विंशं शतम् डितीति किम् । विंशत्या ।

## टेः । १४३ ।

डिति परे भस्य टेर्लोपः । कुमुद्वान् । त्रिंशता क्रीतः त्रिंशः ।

## नस्तद्धिते । १४४ ।

नान्तस्य भस्य टेर्लोपस्तद्धिते परे । उडुलोम्नोऽपत्यमौडुलोमिः । ( नान्तस्य टिलोपे सब्रह्मचारिन्पीठसर्पिन्कौथुमिन्तैतिलिजाजलिन् लाङ्गलिन् शिलालिन शिखण्डिन् सूकरसद्मन् सुपर्वन् इत्येतेषामुपसंख्यानं कर्तव्यम् ) सब्रह्मचारिण इमे साब्रह्मचाराः । पैठसर्पा इत्यादि । ( चर्मणः कोशे उपसंख्यानं कर्तव्यम् ) चार्मः कोशः ( अश्मनो विकार उपसंख्यानम् ) अश्मनो विकार आश्मः । ( शुनः संकोच उपसंख्यानम् ) शौवः संकोचः । ( अव्ययानां च सायम्प्रातिकाद्यर्थमुपसंख्यानम् ) सायंप्रातिकः । पौनः पुनिकः ( शाश्वते प्रतिषेधो वक्तव्यः ) शाश्वतम् ।

(१)

## अह्नष्टखोरेव । १४५ ।

अहन् शब्दस्य टेर्लोपष्टखोरेव । द्वे अहनी समाहृते द्व्यहः । द्वे अहनी अधीष्टो भृतो भूतो भावी वा द्व्यहीनः ।

(२)

## ओर्गुणः । १४६ ।

उवर्णान्तस्य भस्य गुणस्तद्धिते । शङ्कव्यम् । औपगवः ।

## ढे लोपोऽकद्र्वाः । १४७

---

(१) एवकारकरणं स्पष्टार्थम् । अह्न एव टखोरिति विपरीतनियमस्तु न आत्माध्वानौखे इति प्रकृतिभावविधानात् ।

ओरोदित्येव वक्तव्ये गुणग्रहणं संज्ञापूर्वकविधेरनित्यत्वे लिङ्गम् तेन स्वायम्भुव इत्यत्र गुणो न । विधेयताप्रयोजकसांकेतिकपदघटितं शास्त्रमनित्यमिति परिभाषार्थः ।

कद्रूभिन्नस्योवर्णान्तस्य लोपो ढेपरे। कामण्डलेयः। अकद्र्वा इति किम्। काद्रवेयो मन्त्रमपश्यत्।

## यस्येति च। १४८।

ईकारे तद्धिते च परे भस्येवर्णावर्णयोर्लोपः। दाक्षी। प्लाक्षी। सखी। आत्रेयः। दौलेयः। कुमारी। दाक्षिः। (यस्येत्यादौश्यांप्रतिषेधः) काण्डे। कुड्ये।

## सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः। १४९।

सूर्य्यादीनामुपधाया भस्य यकारस्य लोप ईकारे तद्धिते च परे। सौरी बलाका। तैषी रात्रिः। आगस्ती। आगस्तीयः। मत्सी। (सूर्य्यमत्स्ययोर्ङ्यामिति वक्तव्यम्) सौरी। मत्सी। (सूर्य्यागस्त्ययो श्छे च ङ्याञ्चेति वक्तव्यम्) सौरी। सौरीयः। आगस्ती। आगस्तीयः (तिष्यपुष्ययोर्नक्षत्राणि) तैषम्। पौषम् (अन्तिकस्य तसिकादिलोपश्चाद्युदात्तत्वञ्च) अन्तितो न दूरात्। (तमेतादेश्चकादेश्चलोपो वक्तव्यः) अग्ने त्वं नो अन्तमः अन्तितमेअग्ने रोहति। कादिलोपे बहुलम्। अन्तिषत्। ये च अन्तिमः।

## हलस्तद्धितस्य। १५०।

हलः परस्योपधाभूतस्य तद्धितस्य यस्य लोप ईति परे। गार्गी। हल इति किम्। कारिकेयी। तद्धितस्येति किम्। वैश्यस्य भार्या वैशी।

## आपत्यस्य च तद्धितेऽनाति। १५१।

हलः परस्याऽपत्ययकारस्य लोपोऽकारादौ तद्धिते। गर्गाणां समूहो गार्गकम्। वात्सकम्। आपत्यस्येति किम्। सांकाश्यकः। तद्धितग्रहणमीत्यनापत्यस्यापिलोपार्थम्। सौमी इष्टिः। अनातीति किम्। गार्ग्यायणः। हलइत्येव। कारिकेयिः।

## क्यच्व्योश्च। १५२।

क्ये च्वौ च परतो हलः परस्यापत्ययकारस्य लोपः। वात्सीयति। गार्गीयति। वात्सायते। गार्गायते। गार्गीभूतः। आपत्यस्येत्येव। सांकाश्यायते। सांकाश्यभूतः। हल इत्येव। कारिकेयीयति कारिकेयीभूतः।

(१)

## बिल्वकादिभ्यश्छस्य लुक्। १५३।

बिल्वादिभ्यः परस्य भस्य छस्य लुक् तद्धिते परे। बिल्वा यस्यां सन्ति बिल्वकी, तस्यां भवा बैल्वकाः। वेणुकीयाः। वैणुकाः। वैत्रकाः। वेत्रकीयाः।

## तुरिष्ठेमेयस्सु। १५४।

तृशब्दस्य लोप(२) इष्ठेमेयस्सु परतः। कारिष्ठः। दोहीयसी धेनुः।

## टेः। १५५।

भस्य टेर्लोप इष्ठेमेयस्सु परतः। पटिष्ठः। पटिमा। पटीयान्। (णौ प्रातिपदिकस्येष्ठवद्भावो वक्तव्यः) किं प्रयोजनम्। पुंवद्भाव रभाव टिलोपयणादिपरार्थम्। पुंवद्भावः। एनीमाचष्टे, एतयति। श्येतयति। तसिलादिष्वाकृत्वसुच इति पुंवद्भाव उक्तः। रभावः। पृथुमाचष्टे, प्रथयति। म्रदयति। टिलोपः। पटुमाचष्टे, पटयति। यणादिपरम्। स्थूलमाचष्टे, स्थवयति। दवयति। विन्मतोर्लुक् कन् विध्यर्थम्) स्रग्विणमाचष्टे स्रजयति। वसुमन्तमाचष्टे वसयति। यवयति। कनयति। प्रियमाचष्टे। प्रापयति।

## स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः। १५६।

---

(१) छग्रहणं कुकोऽनिवृत्यर्थम्। लोपे प्रकृते पुनर्लुग्ग्रहणं सर्वलोपार्थमन्यथा यकारमात्रस्यैव स्यात्।

(२) लुगिति नानुवर्तते तथा सति नलुमतेति निषेधाद्गुणो न स्यात् "विजयिष्ठः" इति। लोपश्चात्र सर्वस्य तुः, अन्त्यस्य हि टेरित्येव सिद्धम्।

स्थूलादीनां परं यणादि लुप्यते पूर्वस्य च गुण इष्ठेमेयस्सु परतः। स्थविष्ठः । स्थवीयान् । दविष्ठः । दवीयान् । यविष्ठः । यवीयान् । ह्रसिष्ठः । ह्रसीयान । ह्रसिमा । क्षेपिष्ठः । क्षेपीयान् । क्षेपिमा । क्षोदिष्ठः । क्षोदीयान् । क्षोदिमा । परग्रहणं किम् । यविष्ठः । यवीयान इत्यादौ पूर्वस्य यणादेर्लोपो माभूत् ।

## प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः । १५७ ।

प्रियादीनां प्रादयः स्युरिष्ठेमेयस्सु परतः । प्रेष्ठः । प्रेमा । प्रेयान । स्थेष्ठः । स्थेमा । स्थेयान् । स्फेष्ठः, स्फेयान् । उरु । वरिष्ठः । वरीयान् । वरिमा । बहुल । बंहिष्ठः । बंहीयान् । बंहिमा । गुरु । गरिष्ठः । गरिमा । गरीयान् । तृप्र । त्रपिष्ठः । त्रपीयान् । द्राघिष्ठः । द्राघीयान । द्राघिमा वृन्दारक । वृन्दिष्ठः । वृन्दीयान् ।

## बहोर्लोपो भू च बहोः । १५८ ।

बहोः परेषामिष्ठेमेयसां लोपो बहोश्च भूः । भूयान् । भूमा । बहुशब्दः पृथ्व्यादिषु पठ्यते । बहोरिति पुनर्ग्रहणं स्थानित्वप्रतिपत्त्यर्थम् । अन्यथा प्रत्ययानामेवभूभावः स्यात् ।

(१)

## इष्ठस्य यिट् च । १५९ ।

बहोरुत्तरस्येष्ठस्य यिट् बहोश्च भू । भूयिष्ठः ।

## ज्यादादीयसः । १६० ।

ज्यादुत्तरस्य ईयसआत्स्यात् । ज्यायान ।

---

( १ ) अत्र पक्षद्वयं भाष्ये—इष्ठस्यलोपो यिडागमश्च—लोपाननुवृत्तौ यिडागमे इकार उच्चारणार्थ एवेति ।

(१)
## र ऋतो हलादेर्लघोः । १६१ ।

हलादेर्लघुसंज्ञकस्य ऋतो र-इष्ठेमेयःसु । प्रदिष्टः । प्रदिमा । प्रदीयान् । ऋत इति किम् । ऋजिष्ठः । ऋजिमा । ऋजीयान् । लघो रिति किम् । कृष्णिष्ठः ।

## विभाषर्जोश्छन्दसि । १६२ ।

ऋजोः—ऋकारस्य रो वा इष्ठेमेयस्सु छन्दसि । रजिष्ठमेति पन्थानम् । त्वमृजिष्ठः ।

## प्रकृत्यैकाच् । १६३ ।

एकाज् भसंज्ञकं प्रकृत्यास्यादिष्ठेमेयस्सु । स्रजिष्ठः । स्रजीयान् । प्रेष्ठः । प्रेयान् । एकाजिति किम् । वसुमदित्येतस्य वसिष्ठः । ( प्रकृत्याऽकेराजन्य मनुष्य युवानः ) राजन्यानां समूहो राजन्यकम् । मनुष्याणां समूहो मानुष्यकम् । यूनो भावः यौवनिका । मनोज्ञादित्वाद्वुञ् । तस्य न स्तद्धित इति टिलोपो न भवति ।

## इनण्यनपत्ये । १६४ ।

अनपत्यार्थेऽणि इन् प्रकृत्यास्यात् । सांकुटिनम् । सांराविणम् । सांमार्जिनम् । अभिविधौभाव इनुण् । अणिनुण इत्यण् । स्रग्विण इदम्, स्राग्विणम् । अणीति किम् । दण्डिनः समूहो दाण्डम् । अनुदात्तादेरञ् इत्यञ् । अनपत्य इति किम् । मेधाविनोऽपत्यं मैधावः ।

## गाथिविदथिकेशिगणिपणिनश्च । १६५ ।

एते निपात्यन्ते । अपत्यार्थोऽयमारम्भः । गाथिनोऽपत्यं गाथिनः । वैदथिनः । कौशिनः । गाणिनः । पाणिनः ।

---

( १ ) पृथं मृदुं भृशञ्चैव कृशं च दृढमेव च । परिपूर्वं वृढं चैव षडेतान् रविधौस्मरेत् ॥ इति परिगणनात्कृतयतीत्यादौ न ।

## संयोगादिश्च । १६६ ।

संयोगादिरिन् प्रकृत्याऽणिपरे । शाङ्खिनः । माद्रिणः । वाज्रिणः ।

## अन् । १६७ ।

अन् प्रकृत्याऽणिपरे अपत्येचानपत्ये च । सामनः । वैमनः ।

## ये चाभावकर्मणोः । १६८ ।

अभावकर्मवाचिनि यादौ तद्धितेऽन् प्रकृत्या । सामसु साधुः सामन्यः । ब्रह्मण्यः । अभावकर्मणो रिति किम् । राज्ञोभावः कर्मवा राज्यम् । राजन्येति पुरोहितादिषु पठ्यते । ततो यक् ।

## आत्माध्वानौ खे । १६९ ।

आत्माध्वानौ खे प्रकृत्या स्याताम् । आत्मने हितम् आत्मनीनः । अध्वानमलङ्गामी अध्वनीनः । ख इति किम् । प्रत्यात्मम् । अव्ययीभावे 'अनश्च' इति टच् प्रत्ययः ।

## न मपूर्वो ऽपत्ये ऽवर्म्मणः । १७० ।

मपूर्वोऽन् प्रकृत्या न नतुवर्मणोऽपत्येऽणि । सुषाम्णोऽपत्यं सौषामः । अपूर्व इति किम् । सौत्वनः । अपत्य इति किम् । चर्मणा परिवृतोरथ चार्मणः । अवर्मण इति किम् । चक्रवर्मणोऽपत्य चाक्रवर्मणः । मपूर्वात्प्रतिषेधे वा हितनाम्न इति वक्तव्यम् ) हैतनामः । हैतनामनः ।

## ब्राह्मोऽजातौ । १७१ ।

ब्राह्म इति निपात्यतेऽजातौ । ब्राह्म इति योगो विभज्यते । ब्रह्म-

---

(५)-अनोऽपि प्रकृतिभावविधानान्नग्तद्धित इति टिलोपेनैव सिद्धे निपातनमिदं ज्ञापयति ताच्छीलिके णे अण कृतानि भवन्तीति-तेन "चौरी" इति टिड्ढाणञिति ङीप् सिद्ध्यति-वस्तुतस्तु प्रकृत्यालाघवार्थं छत्रादिभ्योणैव विधातव्यः ।

णोयं ब्राह्मो गर्भः । ब्राह्मी ओषधिः । ततोऽपत्ये जातौ न । ब्रह्मणोऽपत्यं- ब्राह्मणः ।

## कार्म्मस्ताच्छील्ये । १७२ ।

कार्म्म इति निपात्यते ताच्छील्ये द्योत्ये । कर्मशीलमस्य कार्म । 'शीलं छत्रादिभ्योणः' इति णप्रत्ययः ।

## औक्षमनपत्ये । १७३ ।

औक्षमिति निपात्यते ऽनपत्ये । उक्ष्ण इदम्, औक्षम्पदम् । अनपत्य इति किम् । उक्ष्णोऽपत्यम् । औक्ष्णः । षपूर्वेति अल्लोपः ।

## दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि । १७४ ।

एते निपात्यन्ते । दण्डिन् हस्तिन् इत्येतौ नडादिषु पठ्येते । तयोरायने परतः प्रकृतिभावो निपात्यते दाण्डिनायनः । हास्तिनायनः । अथर्वन्निति वसन्तादिषु पठ्यते । अथर्वणा प्रोक्तो ग्रन्थोऽपि उपचाराद् अथर्वन्नित्युच्यते । तमधीते यः सः, आथर्वणिकः । इके प्रकृतिभावो निपात्यते । जिह्माशिनिति शुभ्रादिषु पठ्यते । तस्य ढये परतः प्रकृतिभावो निपात्यते । जिह्माशिनोऽपत्यं जैह्माशिनेयः । वाशिनोऽपत्यम् । उदीचां वृद्धादिति फिञ्, तत्र प्रकृतिभावो निपात्यते । वाशिनायनिः । भ्रूणहन्, धीवन् एतयोः ष्यञि तपरस्तकारादेशो निपात्यते । भ्रूणघ्नो भावः भ्रौणहत्यम् । धीवनो भावः धैवत्यम् । सारवइति सरयू इत्येतस्य अणि परतोऽयुशब्दलोपो निपात्यते । सरय्वांभवमुदकं सारवम् । ऐक्ष्वाक इति इक्ष्वाकुषु जनपदेषु भव कोपधादण् इत्यण् । मैत्रेय इति मित्रयुशब्दो गृष्ट्यादिषु पठ्यते ततो ढञि कृते यादेरियादेशापवादोयुशब्दलोपो निपात्यते । मित्रयोरपत्यं मैत्रेयः । हिरण्मय मिति हिरण्यस्य मयटि यादिलोपो निपात्यते ।

हिरण्यस्य विकारः ।

## ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि । १७५ ।

एतानि छन्दसि निपात्यन्ते । ऋतौभवम् ऋत्व्यम् । वास्तौभवम् वास्त्व्यम् । वस्तौ भवः, वास्त्वः माध्वीर्नः सन्त्वोषधीः । हिरण्यम् ।

इति षष्ठाऽध्यायस्य चतुर्थः पादः ।

# अथ सप्तमाऽध्यायस्य प्रथमः पादः

## युवोरनाकौ । १ ।

अङ्गनिमित्तयोरनुनासिकयोर्युवोरनाकौ । एयासश्रन्थो युच् । अर्चना । ण्वुल्तृचौ । पावकः । याजकः । वासुदेवार्जुनाभ्यां वुन् । वासुदेवकः । अनुनासिकयणो रिति किम् । ऊर्णाया युस् । ऊर्णायुः ।

(१)
## आयनेयीनीयियः फढखच्छघां प्रत्ययादीनाम् । २ ।

प्रत्ययादीनां फढखच्छघामायन् एय् ईन् ईय इय् एते आदेशाः । नडादिभ्यः फक् । नाडायनः । चारायणः । स्त्रीभ्यो ढक् । सौपर्णेयः । वैनतेयः । कुलात्खः । कुलीनः । आढ्यकुलीनः । वृद्धाच्छः । गार्गीयः । क्षत्राद्घः । क्षत्रियः । प्रत्ययग्रहणं किम् । फक्कति । ढौकते । खनति । छिनत्ति । घूर्णते । आदिग्रहणं किम् । ऊरुदघ्नम् । एते आयनादयः प्रत्ययोपदेशकाल एव भवन्ति । कृतेष्वेतेषु प्रत्ययाद्युदात्तत्वं भवति ।

## झोऽन्तः । ३ ।

प्रत्ययावयवस्य झस्यान्तादेशः । भवन्ति । पचन्ति । यजन्ति । प्रत्ययस्य किम् । उज्झिता । उज्झितुम् ।

## अदभ्यस्तात् । ४ ।

---

(१)—आयनीनोर्नकारस्यनेत्वम् । फिनोनित्करणसामर्थ्यात् । फकारादिष्वकार उच्चारणार्थः । तेन ढक्फिनादीनामादेशः सिध्यति ।

अभ्यस्तात्परस्यझस्याऽत् (१)। ददति । दधति । जक्षति । जाग्रति ।

## आत्मनेपदेष्वनतः । ५ ।

अनकारात्परस्याऽऽत्मनेपदेषु झस्याऽदादेशः । चिन्वते । चिन्वताम्। अचिन्वत । आत्मनेपदेषु किम् । चिन्वन्ति । अनत इति किम्। च्यवन्ते ।

## शीङो रुट् । ६ ।

शीङः परस्य झादेशस्यातोरुडागमः । शेरते । शेरताम् । अशेरत । रुडयं परादिः क्रियते, स यदि झकारस्यैव स्याददादेशो न स्यादित्यत एवाय मादेशस्यागमो विधीयते । सानुबन्धग्रहणमयङ्लुगर्थम् । तेनेह न भवति । व्यतिशेश्यते ।

(२)

## वेत्तेर्विभाषा । ७ ।

वेत्तेः परस्य झादेशस्यातोरुडागमो वा । संविदते । संविद्रते । वेत्ते रिति लुग्विकरणस्येदं ग्रहणम् । इह माभूत् । विन्ते । विन्दाते ।

## बहुलं छन्दसि । ८ ।

छन्दसि रुडागमो बहुलम् । देवा अदुह्र । दुहे लङि झकारस्यादादेशे कृते रुट् । लोपस्त आत्मनेपदेषु इति तकारलोपः । अदृश्रमस्य केतवः ।

## अतो भिस ऐस् । ९ ।

अदन्तादङ्गात्परस्य भिस ऐस् । वृक्षैः प्लक्षैः । अत इति किम् । अग्निभिः । तपरकरणं किम् । खट्वाभिः ।

---

(१)–अन्तादेशापवादोऽयं जुसादेशं तु न बाधते । तेन अददुः । अदधुः ।
(२) वेत्तेरितिलुग्विकरणस्येदं ग्रहणम् । तेनेह न । विन्दते ।

## बहुलं छन्दसि। १०।

छन्दसि विषये भिस ऐस् बहुलम् । देवेभिर्मानुषे जने । नद्यैरिति ।

## नेदमदसोरकोः। ११।

अककारयोरिदमदसोर्भिस ऐस् न। एभिः। अमीभिः। अकोरिति किम्। इमकैः। अमुकैः। अकोरिति एतदेव प्रतिषेधवचनं ज्ञापकं तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति।

## टाङसिङसामिनात्स्याः। १२।

अदन्तादङ्गात्परेषां टादीनामिनादयः। घटेन। घटात्। घटस्य। अत इति किम्। सख्या।

## ङेर्यः। १३।

अदन्तादङ्गात्परस्य ङेर्यः। वृक्षाय(१) प्लक्षाय। अत इति किम्। सख्ये।

## सर्वनाम्नः स्मै। १४।

अदन्तात् सर्वनाम्नः परस्य ङेः स्मै। सर्वस्मै। कस्मै। तस्मै। अत इति किम्। भवते।

## ङसि ङ्योः स्मात् स्मिनौ। १५।

अदन्तात् सर्वनाम्नः परयोङसिङ्योः स्मात्स्मिनौ। सर्वस्मात्। सर्वस्मिन्। अत इत्येव। भवतः। सर्वनाम्न इत्येव। वृक्षात् वृक्षे।

## पूर्वादिभ्यो नवभ्यो वा। १६।

पूर्वादिभ्यो नवभ्यो ङसि ङ्योः स्मात्स्मिनौ वा। पूर्वस्मात्। पूर्वात्। पूर्वस्मिन्। पूर्वे। परस्मात्। परात्। परस्मिन्। परे। अवर-

---

(१) संनिपातलक्षणोविधिरनिमित्तं तद्विघातस्येति परिभाषेयमनित्या कष्टाय क्रमण इत्यादिनिर्देशात्। अतस्सुपिचेति दीर्घः।

स्मात् । अवरात् । अवरस्मिन् । अवरे । दक्षिणस्मात् । दक्षिणात् । दक्षिणस्मिन् । दक्षिणे । एवमुत्तरापराधरस्वान्तरशब्देभ्योऽपि ।

(१)

## जसः शी । १७ ।

अदन्तात्सर्वनाम्नो जसः शी । सर्वे । विश्वे ।

## औङ आपः । १८ ।

आबन्तादङ्गात्परस्यौङः शी । खट्वे । माले । औङित्यौकारविभक्तेः संज्ञा ।

## नपुंसकाच्च । १९ ।

नपुंसकात्परस्यौङः शी । कुण्डे । अत्र यस्येति लोपः प्राप्तः । (श्यां प्रतिषेधो वाच्यः ) इति न भवति । दधिनी । मधुनी ।

## जश्शसोः शिः । २० ।

नपुंसकात्परयोर्जश्शसोः शिः । कुण्डानि । दधीनि । मधूनि । जसा सहचरितस्य शसो ग्रहणादिह न भवति । कणशो ददाति । वनशः प्रविशन्ति ।

## अष्टाभ्य औश् । २१ ।

कृताकारादष्टनो(२) जश्शसोरौश् । अष्टावुत्तिष्ठन्ति । अष्टौ पश्य । तदन्तग्रहणमत्रेष्यते । परमाष्टौ । प्रियाष्टान इत्यत्रात्वस्याभावादौश्त्वं न भवति ।

## षड्भ्यो लुक् । २२ ।

---

(१) दीर्घोच्चारणमुत्तरार्थम् । त्रपुणी । जतुनी । इहत्वत इत्यधिकाराद् गुणेन भवितव्यम् ।

(२) कृताकारस्यानुकरणमष्टा शब्दो न तु विभक्तौ लक्षणवशादात्वं कृतमित्यर्थः । वैकल्पिकश्चेद मष्टन आत्वम्, अष्टनोदीर्घादिति दीर्घग्रहणाज्ज्ञापकात् ।

षड्भ्यः परयोर्जश्शसोर्लुक् । षट् तिष्ठन्ति । पश्य वा । षट्प्रधानात्तदन्तादपि भवति । परमषट् । यत्रतूपसर्जनं षट् तत्र न भवति । प्रियषषः । प्रियपञ्चानः ।

## स्वमोर्नपुंसकात् । २३ ।

नपुंसकात्परयोः स्वमोर्लुक् । मध्वस्ति । मधु पिब ।

## अतोऽम् । २४ ।

अदन्तान्नपुंकात् परयोः स्वमोरम् । ज्ञानम् । धनम् ।

## अद्ड्डतरादिभ्यः पञ्चभ्यः । २५ ।

डतरादिभ्यः पञ्चभ्यः परयोः स्वमोरद्ड् । कतरदस्ति । कतरत्पश्य । कतमत् । इतरत् । अन्यतरत् । अन्यत । पञ्चभ्य इति किम् । नेमं तिष्ठति । डित्करणं किम् । कतरत्तिष्ठतीत्यत्र पूर्वसवर्णदीर्घो माभूत् ।

## नेतराच्छन्दसि । २६ ।

इतरात्परयोः स्वमोरद्ड् न छन्दसि । इतरमितरमण्डमजायत । वार्त्रघ्नमितरम् । (एकतरात्सर्वत्रेति वक्तव्यम्) एकतरन्तिष्ठति । एकतरम्पश्य ।

## युष्मदस्मद्भ्यां ङसोऽश् । २७ ।

युष्मदस्मद्भ्यां परस्य ङसोऽश् । तव । मम । शित्करणं सर्वादेशार्थम् । अन्यथा ह्यादेशव्यपदेशकॢप्त्यर्थमादेरेव स्यात्, ततश्च 'योऽचि' त्येतन्न स्यात् ।

## ङेप्रथमयोरम् । २८ ।

युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चाऽमादेशः । तुभ्यं मह्यं वादीयते । त्वं । युवाम् । यूयम् । त्वाम् । युवाम् । अहम् । आवाम् । वयम् । माम् । आवाम् ।

## शसो न । २९ ।

आभ्याम्परस्य शसो न । आदेः परस्य । संयोगान्तलोपः । युष्मा-

न् देवान् । अस्मान् । युष्मान् ब्राह्मणीः । अस्मान ब्राह्मणकुलानि।

## भ्यसोऽभ्यम् । ३० ।

आभ्यां परस्य भ्यसोऽभ्यम् (१) । युष्मभ्यम् । अस्मभ्यम् ।

## पञ्चम्या अत् । ३१ ।

आभ्याम् परस्य पञ्चम्या भ्यसोऽत् । युष्मत् । अस्मत् ।

## एकवचनस्य च । ३२ ।

आभ्याम् परस्य पञ्चम्या एकवचनस्याऽत् । त्वत् । मत् ।

(२)

## साम आकम् । ३३ ।

आभ्यां परस्य साम आकम् । युष्माकम् । अस्माकम् । ससुट्कनिर्देशस्तु भाविनः सुटोनिवृत्यर्थः ।

## आत औ णलः । ३४ ।

आतः परस्य णल औकारादेशः । पपौ । दध्मौ । अत्रौत्वमेकादेशः ।

## तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् । ३५ ।

आशिषि तुह्योस्तातङ् (३) वा । जीवतात् । जीवतु वा भवान् । जीवतात् । जीव वा त्वम् ।

(४)

## विदेः शतुर्वसुः । ३६

(१) अन्तलोपपक्षे भ्यमादेशे कृते बहुवचनेझल्येदित्येत्वन्तु अङ्गवृत्तपरिभाषया न । अभ्यम्वेति ।

( २ ) सामिति षष्ठीबहुवचनं भाविनः सुटोनिवृत्यर्थमागतसुट्कं गृह्यते। अङ्गसंज्ञानिमित्तस्यान्यस्यासम्भवात् । पररूपनिवृत्यर्थं दीर्घग्रहणम् ।

( ३ ) ङित्करणं गुण वृद्धिप्रतिषेधार्थम् । अनेकाल्त्वात्सर्वादेशः ।

( ४ ) स्थानिवत्वादेवसिद्धे वसोरुगित्करणं, वसोःसम्प्रसारणमित्यत्र कव-

## समासेऽनञ्पूर्वे क्त्वो ल्यप्। ३७।

अनञ्पूर्वे समासे क्त्वो ल्यप्। प्रकृत्य। नानाकृत्य। द्विधाकृत्य।

## क्त्वाऽपि च्छन्दसि। ३८।

छन्दसि विषयेऽनञ्पूर्वे समासे क्त्वः क्त्वा अपिशब्दाल्ल्यबपि। कृष्णं वासो यजमानं परिधापयित्वा। उद्धृत्य जुहोति।

## सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः। ३९।

सुपां स्थाने सु, लुक, पूर्वसवर्ण, आ, आत्, शे, या, डा, ड्या, याच्, आल्, एत आदेशाश्छन्दसि विषये। सु, अनृक्षरा ऋजवः सन्तु पन्थाः। पन्थान इति प्राप्ते लुक्, आर्द्रे चर्म्मन्। लोहिते चर्म्मन्। चर्मणीति प्राप्ते। धीती। मती। धीत्या, मत्या इति प्राप्ते। उभायन्तारौ। उभौ यन्तारौ इति प्राप्ते। नताद्ब्राह्मणाद् निन्दामि। न तान् ब्राह्मणानिति प्राप्ते। न युष्मे वाजबन्धवः। अस्मे इन्द्रा बृहस्पती। युष्मासु। अस्मभ्यमिति प्राप्ते। उरुया। उरुणेति प्राप्ते। नाभा पृथिव्याम्। नाभौ पृथिव्यामिति प्राप्ते। अनुष्ठ्या च्यावयतात्। अनुष्टुभेति प्राप्ते। साधुया। साध्विति सोर्लुकि प्राप्ते। वसन्तायजेत। वसन्त इति प्राप्ते (सुपाञ्च सुपा भवन्तीति वक्तव्यम्) युक्तामाताऽऽसीद्धुरि दक्षिणायाः। दक्षिणस्यामिति प्राप्ते (तिङां च तिङो भवन्तीति वक्तव्यम्) चषालं ये अश्वयूपाय तक्षति। तक्षन्तीति प्राप्ते। (इयाडियाजीकाराणामुपसंख्यानं कर्त्तव्यम्)) दार्वियापरिज्मन्। सुक्षेत्रिया। सुगात्रिया। सुक्षेत्रिणा सुगात्रिणेति प्राप्ते। दृतिं न शुष्कं सरसीशयानम्। सरसिशयानमिति प्राप्ते। (आङ् याजयारां चोपसंख्यानं कर्त्तव्यम्) प्रवाहवा। प्रवाहु-

---

सोरपि सामान्यग्रहणार्थम्। तत्सामर्थ्यादेकानुबन्धग्रहणे न द्व्यनुबन्धकस्येत्येतन्न प्रवर्त्तते।

नेति प्राप्ते । स्वप्नया स चक्षेवनम् । स्वप्नेनेति प्राप्ते । सिन्धुमिव नावया । नावेति प्राप्ते ।

## अमो मश् । ४० ।

छन्दसि विषयेऽमो मश् । वधीं वृत्रम् (१) अवधिषमिति प्राप्ते ।

## लोपस्त आत्मनेपदेषु । ४१ ।

छन्दसि विषय आत्मनेपदेषु तकारस्य लोपः । अदुह्र(२) । अदुह्रतेति प्राप्ते । दक्षिणतः शये । शेत इति प्राप्ते ।

## ध्वमो ध्वात् । ४२ ।

छन्दसि विषये ध्वमो ध्वात् अन्तरे वोष्माणं वारयध्वात् । वारयध्वमिति प्राप्ते ।

## यजध्वैनमिति च । ४३ ।

छन्दसि विषये एनमि परतोयजध्वमिति मलोपो निपात्यते । यजध्वैनं प्रियमेधाः । यजध्वमेनमिति प्राप्ते ।

## तस्य तात् । ४४ ।

छन्दसि विषये तस्य तात् । गात्रंगात्रमस्या नूनं कृणुतात् । कृणुतेति प्राप्ते ।

## तप्तनप्तनथनाश्च । ४५ ।

छन्दसि विषये तस्य तप् , तनप् , तन, थनाः स्युः । शृणोत ग्रावाणः । शृणुतेति प्राप्ते । संवरत्रा दधातन । धत्तेति प्राप्ते । जुजुष्टन । जुषध्वमिति प्राप्ते । व्यत्ययेन परस्मैपदं श्लुश्च । यतिष्ठन । यच्छब्दाच्छान्दसोऽडति । अस्तेस्तस्य थनादेशः ।

## इदन्तो मसि । ४६ ।

---

(१) बहुलं छन्दस्यमाङ् योगेऽपीत्यडागमाभावः ।

(२) बहुलंछन्दसीति रुट् । अतोगुणे इति पररूपम् ।

छन्दसि मस् इदन्तः । इकार उच्चारणार्थः । नमोभरन्त एमसि । त्वमस्माक तवस्मसि । इमः, स्मः, इति प्राप्ते ।

## क्त्वो यक् । ४७ ।

छन्दसि क्त्वो यक् । दत्वाय सविता धियः । दत्त्वेति प्राप्ते ।

## इष्ट्वीनमिति च । ४८ ।

क्त्वाप्रत्ययान्तस्य यजेरीनमन्तादेशो निपात्यते । इष्ट्वीनं देवानाम् । इष्ट्वेति प्राप्ते ।

## स्नात्व्यादयश्च । ४९ ।

स्नात्व्यादयः शब्दा निपात्यन्ते । आदिशब्दः प्रकारे । स्नात्वी मलादिव । स्नात्वेति प्राप्ते । पीत्वीसोमस्य वावृधे । पीत्वेति प्राप्ते ।

## आज्जसेरसुक् । ५० ।

अवर्णान्तात्परस्य जसेरसुक् छन्दसि । ब्राह्मणासः पितरः सोम्यासः । सोम्या इति प्राप्ते ।

## अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि । ५१ ।

अश्वादीनामसुक् क्यचि आत्मप्रीतौ । ( अश्ववृषयोर्मैथुनेच्छायाम् ) अश्वस्यति वडवा । वृषस्यति गौः ( क्षीरलवणयोर्लालसायाम् ) क्षीरस्यति माणवकः । लवणस्यत्युष्ट्रः । अपर आह ( सर्वप्रातिपदिकेभ्यो लालसायामिति वक्तव्यम् ) दध्यस्यति । मध्वस्यतीत्येवमर्थम् । अपर आह ( सुग्वक्तव्यः ) दधिस्यति । मधुस्यतीत्येवमर्थम् ।

## आमि सर्वनाम्नः सुट् । ५२ ।

अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः । सर्वेषाम् । विश्वेषाम् । आदित्येव । भवताम् ।

## त्रेस्त्रयः । ५३ ।

त्रिशब्दस्य त्रयादेश आमि । त्रयाणाम् । त्रीणामित्यपि छन्दसीष्यते । त्रीणामपि समुद्राणाम् ।

## ह्रस्वनद्यापो नुट् । ५४ ।

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः । वृक्षाणाम् । कुमारीणाम् । खट्वानाम् ।

## षट्चतुर्भ्यश्च । ५५ ।

षट्संज्ञकेभ्यश्चतुर्शब्दाच्च परस्यामो नुडागमः । षण्णाम् । चतुर्णाम् । परमषण्णाम् । गौणत्वे तु प्रियषषाम् । प्रियचतुराम् ।

## श्रीग्रामण्योश्छन्दसि । ५६ ।

श्रीग्रामणीभ्यां परस्यामोनुट् छन्दसि । श्रीणामुदारो वरुणोरयीणाम् । सूतग्रामणीनाम् ।

## गोः पादान्ते । ५७ ।

पादान्ते वर्तमानाद्गोशब्दात्परस्यामो नुडागमश्छन्दसि । विद्माहि त्वा सत्पतिं शूरगोनाम् । क्वचिन्न । गवाम् ।

## इदितो नुम् धातोः । ५८ ।

इदितो धातोर्नुम्(१) । स्पन्दते । इदित इति किम् । पचति ।

## शे मुचादीनाम् । ५९ ।

मुचादीनां(२) नुम् शेपरे । मुञ्चति । लुम्पति । ( शेतृम्फादीनामुपसंख्यानम्(३) । तृम्पति । तृम्फति । आदिशब्दोऽत्र प्रकारे तेन नकारानुषक्तास्तृम्फादयः । विधानसामर्थ्यान्नलोपो न ।

## मस्जिनशोर्झलि । ६० ।

मस्जिनशोर्नुम् झलादौ प्रत्यये । मङ्क्ता(४) नंष्टा ।

---

( १ ) उपदेशावस्थायामेवायं तेन, कुण्डा, हुण्डेत्यादि सिद्ध्यति ।

( २ ) मुच्, लुप्, विद्, लिप्, सिच्, कृत्, खिद्, पिश्, एते मुचादयः ।

( ३ ) तृप तृम्फ तृप्तौ । दृफ दृम्फ उत्क्लेशे । गुम्फ ग्रन्थे । उभ उम्भ पूरणे । शुभ शुम्भ शोभार्थे । इत्यत्र येषामनुषङ्गास्ते तृम्फादयः ।

( ४ ) मस्जेरन्त्यात्पूर्वं नुममिच्छन्ति ।

## रधिजभोरचि । ।

रधिजभोर्नुमजादौ प्रत्यये। रन्धयति। जम्भयति। परापि सती वृद्धिर्नुमा बाध्यते, नित्यत्वात्। अचीति किम्। रद्धा। जम्भ्यम्।

## नेट्यलिटि रधेः। ६२।

इडादावलिटि रधेर्नुम् न। रधिता। रधितव्यम्। अलिटीति किम्। ररन्धिम।

## रभेरशब्लिटोः। ६३।

शब्लिड्भिन्नेऽजादौ प्रत्यये रभेर्नुम्। आरम्भकः। आरम्भी। आरम्भम्, आरम्भम्। आरम्भो वर्तते। अशब्लिटोरिति किम्। आरभते। आरेभे। अचीत्येव। आरब्धा।

## लभेश्च। ६४।

लभेर्नुम् शब्लिड्भिन्नेऽजादौ प्रत्यये। साधुलम्भी। लम्भं लम्भम्। लम्भो वर्तते। अशब्लिटोरित्येव। लभते। लेभे। अचीत्येव। लब्धा। लभेश्चेति पृथग्योगकरणमुत्तरार्थम्।

## आङो यि। ६५।

आङ्पूर्वस्य लभेर्नुम् यादौ प्रत्यये। आलम्भ्या गौः। आलम्भ्या वडवा।

## उपात् प्रशंसायाम्। ६६।

उपात्परस्य लभेर्नुम् यादौ प्रत्यये प्रशंसायाम्। उपलम्भ्या विद्या। उपलम्भ्यानि धनानि। प्रशंसायामिति किम्। उपलभ्य मस्माद्वृषलात् किंचित्। "पोरदुपधादि" तियत्प्रत्ययान्तमिदम्।

## उपसर्गात्खल्घञोः। ६७।

उपसर्गात्परस्य लभेर्नुम् खल्घञोः परतः। ईषत्प्रलम्भः। सुप्रलम्भः। दुष्प्रलम्भः। प्रलम्भः। विप्रलम्भः। सिद्धे सति आरम्भो नियमार्थः।

उपसर्गादेव लभेः, खल्घञोः परतो नुमागमो नान्यत्र । ईषल्लभः । लाभो वर्त्तते ।

## न सुदुर्भ्यां केवलाभ्याम् । ६८ ।

केवलाभ्यां(१) सुदुर्भ्यांलभेर्नुम् न खल्घञोः परयोः । सुलभम् । दुर्लभम् । सुलाभः । दुर्लाभः ।

## विभाषाचिण्णमुलोः । ६९ ।

लभेर्नुम्वा चिण्णमुलोः । अलाभि । अलम्भि । लम्भम् २ । लाभं लाभम् । ( चिण्णमुलोरनुपसर्गस्येति वक्तव्यम् ) इह माभूत् । प्रालम्भि । प्रलम्भं प्रलम्भम् ।

## उगिदचां सर्वनामस्थानेऽधातोः । ७० ।

अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम् सर्वनामस्थाने । भवान् । प्राङ् । प्राञ्चौ । प्राञ्चः । उगिदचामिति किम् । दृषत् । दृषदौ । सर्वनामस्थान इति किम् । भवतः पश्य । श्रेयसः पश्य । अञ्चतिग्रहणं नियमार्थम् । अञ्चतेरेव धातोरन्यस्य माभूत् । उखास्रत् । अधातोरिति किम् । अधातुभूतपूर्वस्य यथास्यात् । गोमन्तमिच्छति गोमत्यति, गोमत्यतेरप्रत्ययः, गोमान् । अत्र हि धातुत्वादञ्चतिग्रहणान्न स्यात् ।

## युजेरसमासे । ७१ ।

असमासे युजेर्नुम् सर्वनामस्थाने । युङ् । युञ्जौ । युञ्जः । असमास इति किम् । अश्वयुक् । अत्र युजेरितीकारनिर्देशात् युज समाधावित्यस्य ग्रहणंन भवति । युजमापन्ना ऋषयः ।

## नपुंसकस्य झलचः । ७२ ।

झलन्तस्याऽजन्तस्य नपुंसकस्य नुम् सर्वनामस्थाने । पयांसि । यशांसि । बलानि । त्रपूणि ( बहूर्जिप्रतिषेधो वक्तव्यः ) बहूर्जि ब्राह्मणकुलानि । ( अन्त्यात्पूर्वोनुमेके ) बहूर्ञ्जि ।

---

(१) अति सुलभ इत्याद्यर्थं केवलग्रहणम् ।

## इकोऽचि विभक्तौ । ७३ ।

इगन्तस्य नपुंसकस्य नुमजादौ विभक्तौ । त्रपूणि । त्रपुणा । त्रपुणे१ इक इति किम् । कुण्डे । विभक्ताविति किम् । तौम्बुरवं चूर्णम् ।

## तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य । ७४ ।

भाषितपुंस्कमिगन्तं२ नपुंसकं वा पुंवत्तृतीयादिष्वजादिषु विभक्तिषु । ग्रामणिना-ग्रामण्या वा ब्राह्मणकुलेन । तृतीयादिष्विति किम् । ग्रामणिनी ब्राह्मणकुले । शुचिनी ब्राह्मणकुले । भाषितपुंस्कमिति किम् । त्रपुणे । जतुने । इह कस्मान्न भवति । पीलु वृक्षः, पीलु फलं, पीलुने फलायेति । समानायामाकृतौ यद् भाषितपुंस्कं तुल्ये प्रवृत्तिनिमित्ते तस्य पुंवद्भावो भवति । इह तु वृक्षाकृतिः प्रवृत्तिनिमित्तं पुंसि शब्दस्य । फलाकृति नपुंसके । तदेतदेवं कथं भवति भाषितपुंस्कमिति भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कशब्देनोच्यते । तद्योगादभिधेयमपि यद् नपुंसकं तदपि भाषितपुंस्कम् । तस्य प्रातिपदिके यच्छब्दरूपं तदपि भाषितपुंस्कमिति । इक इत्येव । कीलालपो ब्राह्मणः । कीलालपं ब्राह्मणकुलम् । कीलालपेन ब्राह्मणकुलेन । अचीत्येव । ग्रामणिभ्यां ब्राह्मणकुलाभ्याम् ।

## अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः । ७५ ।

अस्थ्यादीनामुदात्तोऽनङ् टादावचि विभक्तौ । अस्थ्ना । अस्थ्ने । दध्ना । दध्ने । सक्थ्ना । सक्थ्ने । इत्यादि । तदन्तग्रहणात् प्रियास्थ्नेत्याद्यपि । तृतीयादिष्विति किम् । अस्थिनी । दधिनी । अचीत्येव । दधिभ्याम् ।

---

(१) सम्बोधने तु न लुमतेत्यस्यानित्यत्वात्पक्षे सम्बुद्धिनिमित्तो गुणः । हे त्रपो, हे त्रपु ।

(२) भाषितः पुमान् येन शब्देनेत्यर्थे पीलु शब्देऽति प्रसङ्गस्तस्माद् भाषितः पुमान् यस्मिन् प्रवृत्तिनिमित्तरूपेऽर्थे इति बहुव्रीहिः । भाषणक्रियया स्वकरणतयाऽऽक्षिप्त शब्दश्च क्लीबेन समानानुपूर्वीकः समानार्थश्च गृह्यते प्रत्यासत्तेः । ततोऽर्श आद्यच् । एवं च प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिति फलितम् ।

## छन्दस्यपि दृश्यते ।७६।

छन्दस्यप्यस्थ्यादीनामनङ् दृश्यते । यतोविहित स्ततोऽन्यत्रापि भवतीत्यर्थः । इन्द्रो दधीचो अस्थभिः । भद्रं पश्येमाक्षभिः ।

## ई च द्विवचने ।७७।

द्विवचनेऽस्थ्यादीनामुदात्त ईकारादेशश्छन्दसि । अक्षीते इन्द्रपिङ्गले कपेरिव । अक्षीभ्यान्ते नासिकाभ्याम् ।

## नाभ्यस्ताच्छतुः ।७८।

अभ्यस्तात्परो यः शता तदन्तस्य नुम् न । ददत् । ददतौ । दधत् । दधतौ । जाग्रत् । जाग्रतौ ।

## वा नपुंसकस्य ।७९।

अ० तदन्तस्य नपुंसकस्य नुम्वा । दधति ब्राह्मणकुलानि । दधन्ति ब्राह्मणकुलानि वा ।

## आच्छीनद्योर्नुम् ।८०।

अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्य नुम्वा शीनद्योः परतः । तुदती । तुदन्ती । याती कुले । यान्ती कुले । याती ब्राह्मणी । यान्ती ब्राह्मणी । आदिति किम् । कुर्वती । शीनद्यो रिति किम् । तुदताम् ।

## शप् श्यनोर्नित्यम् ।८१।

शप् श्यनोर्योऽवर्णस्तस्मात्परो यः शता तदन्तस्य नित्यं नुम् शीनद्योः । पचन्ती कुले । दीव्यन्ती ब्राह्मणी । नित्यग्रहणं वेत्यस्य निवृत्त्यर्थम् ।

## सावनडुहः ।८२।

अस्य नुम् स्यात्सौ । अनड्वान् । आममोर्नुमश्च समावेश इष्टः ।

## दृक्स्ववस्स्वतवसां छन्दसि ।८३।

एषां नुम् छन्दसि सौ परे । ईदृङ् । तादृङ् । यादृङ् । सदृङ् । स्ववान् । स्वतवान् ।

## दिव औत् । ८४ ।

दिविति प्रातिपदिकस्यौत्सौ परे । द्यौः । दिविति प्रातिपदिकमस्ति निरनुबन्धकम् । धातुस्तु सानुबन्धकः, स इह न गृह्यते । अक्षद्यूः ।

## पथिमथ्यृभुक्षामात् । ८५ ।

एषामात्सौ(१) । पन्थाः । मन्थाः । ऋभुक्षाः ।

## इतोऽत्सर्वनामस्थाने । ८६ ।

पथ्यादीनामितोऽत्सर्वनामस्थाने । पन्थाः । पन्थानावित्यादि ।

## थो न्थः । ८७ ।

पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने । पन्थाः । मन्थाः ।

## भस्य टेर्लोपः । ८८ ।

भसंज्ञकानां पथ्यादीनां टेर्लोपः । पथः । पथा । मथः । मथा ।

## पुंसोऽसुङ् । ८९ ।

पुंसोऽसुङ् सर्वनामस्थाने । पुमान् ।

## गोतो णित् । ९० ।

ओकारान्ताद्विहितं सर्वनामस्थानं णिद्वत् । गौः । गावौ । गावः । तपरकरणं किम् । चित्रगुः ।

## णलुत्तमो वा । ९१ ।

उत्तमो णल् वा णित् । जगाद । जगद ।

## सख्युरसम्बुद्धौ । ९२ ।

सख्युरङ्गात्परं सम्बुद्धिवर्जं सर्वनामस्थानं णिद्वत् । सखायौ । सखायः ।

---

(१) भाव्यमानेन सवर्णानां ग्रहणं नेति नानुनासिकः ।

# अनङ् सौ । ९३ ।

सख्युरङ्गस्याऽनङ् असम्बुद्धौ सौ । सखा । असम्बुद्धाविति किम् । हे सखे ।

# ऋदुशनस्पुरुदंसोऽनेहसां च । ९४ ।

ऋदन्तानामुशनसादीनाञ्चाङ्गानामनङ् असम्बुद्धौ सौ । भ्राता । उशना । पुरुदंसा । अनेहा । असम्बुद्धावित्येव । हे कर्तः । हे अनेहः । हे उशनः । हे पुरुदंसः ।

# तृज्वत्क्रोष्टुः । ९५ ।

क्रोष्टुशब्दस्तृच्प्रत्ययान्तस्येव रूपं लभतेऽसम्बुद्धौ सर्वनामस्थाने । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । सर्वनामस्थान इत्येव । क्रोष्टून् । असम्बुद्धावित्येव । हे क्रोष्टो ।

# स्त्रियाञ्च । ९६ ।

स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते । क्रोष्ट्री गौरीवत् ।

# विभाषा तृतीयादिष्वचि । ९७ ।

अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा क्रोष्टुना । ( नुमचिरतृज्वद्भावेभ्यो नुट्पूर्वविप्रतिषेधेन ) क्रोष्टूनाम् । तृतीयादिष्विति किम् । क्रोष्टून् । अचीति किम् । क्रोष्टुभ्याम् ।

# चतुरनडुहोरामुदात्तः । ९८ ।

अ योराम् सचोदात्तोऽसम्बुद्धौ सर्वनामस्थाने । चत्वारः । अनड्वान् । अनड्वाहौ । तदन्तविधिरत्रेष्यते । प्रियचत्वाः । प्रियचत्वारौ । प्रियानड्वान् । प्रियानड्वाहौ । इत्यादयः । ( अनडुहः स्त्रियाम्वा ) अनडुही अनड्वाही ।

# अम्सम्बुद्धौ । ९९ ।

(१) सूत्रे गकारोऽविवक्षितः, तेन द्योशब्दस्य द्यौरित्यादि रूपाणि ।

अनयोरम् सम्बुद्धौ। हे प्रियचत्वः। हे प्रियानड्वन्।

## ॠत इद्धातोः। १००।

ॠकारान्तस्य धातोरित्। किरति। गिरति। आस्तीर्णम्। विस्तीर्णम्। धातोरिति किम्। पितॄणाम्।

## उपधायाश्च। १०१।

धातोरुपधाया ॠत इत्। कीर्तयति। कीर्तयतः। कीर्तयन्ति।

## उदोष्ठ्यपूर्वस्य। १०२।

अङ्गावयवौष्ठ्यपूर्वो य ॠत्तदन्तस्य धातोरुत्। पुपूर्षति। मुमूर्षति। बुबूर्षति। इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन। आस्तरणम्। आस्तारकः।

## बहुलं छन्दसि। १०३।

छन्दसिविषय ॠकारान्तस्याङ्गस्य बहुलमुत्। यतोविहित स्ततोऽन्यत्रापि भवतीत्यर्थः। मित्रावरुणौ ततुरिः। दूरेह्यध्वा जगुरिः। यत्रविहितस्तत्र न भवति। पप्रितमम्। क्वचिद्भवत्यपि। पपुरिः।

## इति सप्तमाऽध्यायस्य प्रथमः पादः।

# अथ सप्तमाऽध्यायस्य द्वितीयः पादः

## सिचि वृद्धिः परस्मैपदेषु । १ ।

परस्मैपदे परे सिचि, इगन्ताङ्गस्य वृद्धिः । अचैषीत् । अलावीत् । अकार्षीत् । अन्तरङ्गमपि गुणमेषां वृद्धिर्वचनाद् बाधते । न्यनुवीत्, न्यधुवीदित्यत्र कुटादित्वाद् ङित्वे सति प्रतिषिद्धायां वृद्धावुवङादेशः । परस्मैपदेष्विति किम् । अच्योष्ट ।

## अतोल्रान्तस्य[१] । २ ।

अतःसमीपौ यौ ल्रौ तदन्तस्याङ्गस्यातो वृद्धिः परस्मैपदे सिचि। अक्षारीत् । अज्वालीत् । अतोहलादेरित्यस्यापवादः । अत इति किम् । न्यखोरीत् । ल्रान्तस्येति किम् । मा भवानशीत् । अन्तग्रहणं किम् । अवभ्रीत् ।

## वदव्रजहलन्तस्याचः । ३ ।

एषामचोवृद्धिः परस्मैपदे सिचि । अवादीत् । अव्राजीत् । विकल्पबाधनार्थं वदव्रजग्रहणम् । अभैत्सीत् । अरौत्सीत् । हल्ग्रहणं हल्समुदायपरिग्रहार्थम् । अभाङ्क्षीत् ।

---

(१) ल्रेति पृथक् पदम् । षष्ठ्याः सौत्रो लुक् । ल्रेणाङ्गस्य विशेषणात्तदान्तविधौ ल्रान्तस्याङ्गस्यातोवृद्धिः । कीदृशस्यातः । सन्निधानाद् ल्रंप्रति समीपभूतस्येति । अन्तशब्दः समीपवचनः ।

## नेटि ।४।

इडादौ परस्मैपदे सिचि हलन्तस्याङ्गस्याचो वृद्धिर्न । अदेवीत् । हलन्तस्येत्येव । अलावीत् ।

## (१) ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ।५।

ह्मयान्तस्य क्षणादेर्ण्यन्तस्य श्वयते रेदितश्चाङ्गस्याचो वृद्धिर्न, इडादौ परस्मैपदे सिचि । अग्रहीत् । अस्यमीत् । अव्ययीत् । अक्षणीत् । अश्वसीत् । अजागरीत् । ऊनयीत् । ऐलयीत् । अश्वयीत् । अकुटीत् ।

## ऊर्णोतेर्विभाषा ।६।

ऊर्णोतेरङ्गस्य वृद्धिर्वेडादौ परस्मैपदे सिचि । और्णावीत् । और्णवीत् । विभाषोर्णोरितिङित्त्वाभावपक्षे रूपद्वयम् । ङित्त्वपक्षे तु और्णुवीत् ।

## अतो हलादेर्लघोः ।७।

हलादेर्लघोरतोवृद्धिर्वा, इडादौ परस्मैपदे सिचि । लघोरिति षष्ठार्थम् । अराणीत् । अरणीत् । हलादेरिति किम् । मा भवानदीत् । अत इति किम् अदेवीत् । लघोरिति किम् । अरक्षीत् । इटीत्येव । अपाक्षीत् ।

## नेड्वशि कृति ।८।

वशादेः कृत इण् न । ईश्वरः । दीप्तः । भस्म । याच्ञा । कृतीति किम् । रुदिव ।

## तितुत्रतथसिसुसरकसेषु[2] च ।९।

(१) 'अतोहलादे' रित्यस्यापवादः । जागृ ग्रहणं स्पष्टार्थमित्याद्यन्यतोऽवसेयम् ।

(२) तिना क्तिन्क्तिचोः सामान्येन ग्रहणम् । तु, तुन्, क्थन्, क्सिः, सुक्, क्सरन्, कन्, स, एते औणादिका गृह्यन्ते । (अग्रहादीनामितिवक्तव्यम्) इति वार्त्तिकम् । ग्रहादयो ग्रहप्रकाराः । तेन निगृहीतिरित्यादि ।

एषां कृतामिण् न स्यात् । तन्तिः । दीप्तिः । सक्तुः(१) । पत्रम् वाहनम् । हस्तः । काष्ठम् । कुक्षिः । इक्षुः । अक्षरम् । शल्कः । वत्सः ।

(२)
## एकाच उपदेशेऽनुदात्तात् । १० ।

उपदेशे य एकाजनुदात्तश्च ततःपरस्येण् न । प्रकृत्याश्रयोऽयं प्रतिषेधः । चेता । चेतारौ । चेतारः । पाता । पातारौ । पातारः । इत्यादि ।

---

(१) 'सि तनि गमि मसि सच्यविधाञ्' इत्यादिना तुन् । सक्तुः । 'दाम्नीशस् यु युज्' इति ष्ट्रन् । पत्रम् , 'हसिमृग्' इत्यादिना तन् । हस्तः । काश् धातो रौणादिक एव थः । काष्ठम् । 'उषिसुषि' इत्यादिना क्सिः । कुक्षिः । 'सुकृत्र इषेः' इति इक्षुः । अशेः क्सरन् अक्षरम् । 'इणभीकापाशल्' आदिना कन् । शल्कः । 'वृतृ वदि' आदिना सः । वत्सः ।

(२) उपदेशे इत्युभयान्वयि । अनुदात्ताश्च प्राचीनैः कारिकाभिर्निर्दिष्टास्तद्यथा—
अनिट् स्वरान्तो भवतीति दृश्यतामिमांस्तुसेटः प्रवदन्ति तद्विदः ।
अदन्त मृृदन्त मृतां च वृङ् वृञौ श्विडीङिवर्णेष्वथ शीङ् श्रिञावपि । १ ।
गणस्थमूदन्त मुतांच रुस्नुवौ क्षुवन्तथोर्णोतिमथो युणुक्ष्णवः ।
इति स्वरान्ता निपुणैः समुच्चितास्ततो हलन्तानपि सन्निबोधत । २ ।
शकिस्तु कान्तेष्वनिडेक इष्यते घसिश्च सान्तेषु वसिः प्रसारणी । ३ ।
रभिस्तु भान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे ।
यमिर्यमन्ते ष्वनिडेक इष्यते रमिश्च यश्च श्यनि पठ्यते मनिः । ४ ।
नमिश्चतुर्थो हनिरेव पञ्चमो गमिश्च षष्ठः प्रतिषेध वाचिनाम् । ५ ।
दिहिर्दुहिर्मेहतिरोहती वहिर्नहिस्तु षष्ठो दहतिस्तथा लिहिः ।
इमेऽनिटोऽष्टाविहमुक्तसंशया गणेषु हान्ताः प्रविभज्य कीर्त्तिताः । ६ ।
दिशिं दृशिं दंशिमथो मृशिंस्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम् ।
लिशिं च शान्ताननिटः पुराणगाः पठन्ति पाठेषु दशैव नेतरान् । ७ ।
रुधिः मराधिर्युधि बन्धिसाधयः क्रुधि क्षुधी शुद्ध्यति बुध्यतीव्यधिः ।
इमे तु धान्ता दश येऽनिटो मतास्ततः परं सिद्ध्यति रेव नेतरे । ८ ।
शिषिं पिषिं शुष्यति पुष्यती त्विषिं विषिं श्लिषिं तुष्यति दुष्यती द्विषिम् ।
इमान्दशैवोपदिशन्त्यनिड्विधौ गणेषु षान्तान्कृषिकर्षतीतथा । ९ ।
तपिं तिपिं चापि मथोवपिं स्वपिं लिपिं लुपिं तृप्यतिदृप्यती सृपिम् ।

## श्र्युकः किति । ११ ।

श्रि धातोरेकाच(१) उगन्ताच्च कित इण् न । श्रितः । श्रितवान् । भूतः । भूतवान । भूत्वा । वृतः । वृतवान् । तीर्णः । तीर्णवान् । श्र्युकः किम् । विदितः । कितीति किम् । श्रयिता । ऊर्णोतेस्तु—वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् । आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥ प्रोर्णुतः । प्रोर्णुतवान् ।

## सनि ग्रहगुहोश्च । १२ ।

ग्रहेर्गुहे रेकाच उगन्ताच्च परस्य सन इण् न । जिघृक्षति । जुघुक्षति । रुरूषति । लुलूषति ।

## (२) कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि । १३ ।

क्रादिभ्य एव लिट इण् न । चकृव । चकृम । तुष्टोथ । तुष्टुव । ( कृञोऽसुट इति वक्तव्यम् ) सञ्चस्करिथ ।

## श्वीदितो निष्ठायाम् । १४ ।

श्वयतेरीदितश्च परस्यानिष्ठाया इण् न । शूनः । शूनवान् । लग्नः । लग्नवान् । ओदितश्चेति निष्ठानत्वम् । ओदिन्मध्ये पाठसामर्थ्याद् 'उड्डीनः' इत्यपि ।

## यस्य विभाषा । १५ ।

यस्य क्वचिद्विभाषा इड्विहितस्ततो निष्ठाया इण् न । वृद्धः । वृद्ध-

---

स्वरेण नीचेन शपिं छुपिं क्षिपिं प्रतीहि पान्तान्पठितांस्त्रयोदश । १० ।
अर्दिं हदिं स्कन्दि भिदि च्छिदि क्षुदीन् शदिं सदिं स्विद्यतिपद्यती खिदिम् ।
तुदिं नुदिं विद्यति विन्त इत्यपि प्रतीहि दान्तान्दश पंच चानिटः । ११ ।
पचिं वचिं विचि रिचि रञ्जि पृच्छतीन्निजिं सिचिं मुचि भजि भञ्जि भृज्जतीन् ।
त्यजिं यजिं युजि रुजि सञ्जि मज्जतीन् भुजिं स्वजिं सृजि मृजी विद्ध्यनिट्स्वरान् ।१२

(१) उपदेश इत्यनुवर्तते, तीर्णाद्यर्थम् ।
(२) अत्रत्यो विशेष आख्यातिके द्रष्टव्यः ।

वान्। 'उदितोवे'ति विकल्पो ऽन्यत्र। तनिपतिदरिद्राणामुपसंख्यान मिति पते विभाषितेट्कस्यापि, द्वितीयाश्रितातीतपतितेतिनिपातनादिडागमः।

## आदितश्च ।१६।

आदितः परस्यानिष्ठाया इण्न। मिन्नः। मिन्नवान। चकारोऽनुक्तसमुच्चयार्थः। आश्वस्तः। वान्तः।

## विभाषा भावाऽदिकर्म्मणोः ।१७।

आदितः परस्या भावादिकर्म्मणोर्निष्ठाया इड्वा। मिन्नं मेदितं वाऽनेन। प्रमिन्नः(१)। प्रमेदितो वाऽसौ। सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन। शकितो घटः कर्तुम्। शक्तो घटः कर्तुम्। भावे न भवत्येव। शक्तमनेन। आदिकर्मणि च भवत्येव। अस्तः काण्डः।

## क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमः सक्ताविस्पष्टस्वरानायासभृशेषु ।१८।

मन्थादिषु समुदायेन वाच्येषु क्षुब्धादयोऽष्टौ निपात्यन्ते। क्षुब्धोमन्थश्चेत्। क्षुभितमन्यत्। क्षुब्धो राजेति तु आगमशास्त्रस्यानित्यत्वात्। स्वान्तंमनश्चेत्। स्वनितमन्यत्। ध्वान्तंतमश्चेत्। ध्वनितमन्यत्। लग्नं सक्तश्चेत्। लगितमन्यत्। म्लिष्टमविस्पष्टश्चेत्। म्लेच्छितमन्यत्। विरिब्धः स्वरश्चेत्। विरेभितमन्यत्। फाण्टमनायाससाध्यः कषायविशेषः। फाणितमन्यत्। बाढभृशश्चेत्। बाहितमन्यत्।

## धृषिशसी वैयात्ये ।१९।

वियातस्यभावो वैयात्यम्। वैयात्येऽविनये एव वर्त्तमानाभ्यां धृषिश-

(१) आदिकर्मणि निष्ठा वक्तव्येति निष्ठा। आद्येषु क्षणेषु भूतेषु सर्वस्याः क्रियाया भूतत्वाभावान्निष्ठा न प्राप्नोतीति वचनम्।

सिभ्यां परस्या निष्ठाया इण् न । धृष्टः । विशस्तः । भावादिकर्म्मणोरपि वैयात्ये धृषिर्नास्ति । तयोस्तु धृष्टं, धर्षित मित्यादि ।

## दृढः स्थूलबलयोः । २० ।

स्थूले बलवति च दृढ इति निपात्यते । दृढः स्थूलो बलवान्वा । दृह, दृहि वृद्धौ । क्तस्येडभावः । तस्यढत्वं, हस्यलोपः । इदितो नलोपश्च । स्थूलबलयोः किम् । दृंहितम् ।

## प्रभौ परिवृढः । २१ ।

प्रभावर्थे परिवृढ इति निपात्यते । परिवृढः । प्राग्वन्निपातनं, परिबृंहितोऽन्यः । परिबृहितो वा ।

## कृच्छ्रगहनयोः कषः । २२ ।

एतयोर्वर्त्तमानात्कषः परस्या निष्ठाया इण् न । कष्टोऽग्निः । कष्टं व्याकरणम् । लक्षणयातत्कारणं गृह्यते । ततोऽपि कष्टतराणि सामानि । कष्टानि वनानि । कषितमन्यत् । कृच्छ्र गहनयोः किम् । कषित सुवर्णकम् ।

## घुषिरविशब्दने । २३ ।

अप्रतिज्ञानेर्थे वर्त्तमानाद्घुषेः परस्या निष्ठाया इण् न । घुष्टा रज्जुः । विशब्दनेतु घुषितं वाक्यम् । शब्देनाविष्कृताभिप्रायमित्यर्थः(१) ।

## अर्देः सन्निविभ्यः । २४ ।

संनिविपूर्वाददेः परस्या निष्ठाया इण् न । समर्णः । न्यर्णः । व्यर्णः । अर्देरिति किम् । समेधितः । संनिविभ्यः किम् । अर्दितः ।

## अभेश्चाविदूर्य्ये । २५ ।

अभिपूर्वाददेः परस्या निष्ठाया इण् न । अभ्यर्दितो वृषलः । शीतेन पीडित इत्यर्थः ।

---

(१) गुण:—पाठोऽध्ययन विशेषः स सम्पादित इत्यर्थः ।

## णेरध्ययने वृत्तम् । २६ ।

ण्यन्तस्य वृतेर्निष्ठायामिडभावो णेर्लुक् च निपात्यतेऽध्ययने । वृत्तो गुणो देवदत्तेन । वृत्तं पारायणं देवदत्तेन । अध्ययन इति किम् । वर्तितमन्यत् । केचित्तु वर्तितो गुणो देवदत्तेनेत्यपि वाञ्छन्ति ।

## वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः । २७ ।

दमादीनां ण्यन्तानां निष्ठाया इडभावो वा निपात्यते । दान्तः । दमितः । शान्तः । शमितः । पूर्णः । पूरितः । दस्तः । दासितः । स्पष्टः । स्पाशितः । छन्नः । छादितः । ज्ञप्तः । ज्ञापितः ।

## रुष्यमत्वरसंघुषाऽऽस्वनाम् । २८ ।

रुष्यादिभ्यः परस्या निष्ठाया इड्वा । रुषितः । रुष्टः । आन्तः । अमितः । तूर्णः । त्वरितः(१) । संघुषितः । सङ्घुष्टः । आस्वनितः । आस्वान्तः ।

## हृषेर्लोमसु । २९ ।

लोमसु हृषेः परस्या निष्ठाया इड् वा । उभयत्रविभाषेयम् । हृष्टम् । हृषितं वा लोम । हृष्टाः—हृषिता—वा केशाः । 'हृषु अलीके' इत्युदितत्वान्निष्ठाया मनिट् । 'हृष तुष्टौ । इत्ययं सेट् । तयो रुभयोरिह ग्रहणमित्युभयत्रविभाषेयम् । लोमानि मूर्धजानि अङ्गजानि च सामान्येनेह गृह्यन्ते । लोमस्विति किम । हृष्टो देवदत्त इत्यलीकार्थस्य, हृषितो देवदत्त इति तुष्ट्यर्थस्य । ( विस्मित प्रतिघातयोश्चेति वक्तव्यम् ) हृष्टो देवदत्तः, हृषितो देवदत्तः । विस्मित इत्यर्थः । हृष्टा दन्ता, हृषितादन्ताः । प्रतिहता इत्यर्थः ।

## अपचितश्च । ३० ।

अपपूर्वस्य चायतेर्निष्ठायामिडभावश्चिभावश्च वा निपात्यते । अपचितोऽनेनगुरुः । अपचायितोऽनेनगुरुः । ( क्तिनिनित्यमिति वक्तव्यम् ) अपचितिः ।

---

(१) अस्याऽऽदित्त्वे फलमात्मनेपदमात्रम् ।

## हु ह्वरेश्छन्दसि । ३१ ।

ह्वरतेर्निष्ठायां हु आदेशश्छन्दसि । हुतस्यचाहुतस्य च ।

## अपरिह्वृताश्च । ३२ ।

अपपूर्वस्य ह्वरतेर्निष्ठायां हु आदेशाभावो निपात्यते । अपरिह्वृताः सनुयामवाजम् ।

## सोमे ह्वरितः । ३३ ।

ह्वरतेर्निष्ठायामिडागमो गुणश्च निपात्यते छन्दसिविषये सोमे। मानः सोमो ह्वरितो विह्वरितस्त्वम् ।

## ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीतिच । ३४ ।

एते छन्दसि निपात्यन्ते ।

## आर्द्धधातुकस्येड्वलादेः । ३५ ।

वलादेरार्द्धधातुकस्येट् । लविता । पविता । आर्द्धधातुकस्येति किम् । आस्ते । वस्ते । वलादेरिति किम् । लव्यम् । लवनीयम् । इडिति वर्त्तमाने पुनरिड् ग्रहणं प्रतिषेधनिवृत्त्यर्थम् ।

## स्नुक्रमोरनात्मनेपदनिमित्ते । ३६ ।

अनात्मनेपदिभ्यामेव स्नुक्रमिभ्यां वलादेरार्द्धधातुकस्येट् । प्रस्नविता । प्रक्रमिता । एतयोरात्मनेपदनिमित्तत्वे तु भाव, कर्म, कर्मकर्तृ, कर्मव्यतिहारेषु वृत्त्यादिषु च । अनात्मनेपदनिमित्त इति किम् । प्रस्नोषीष्ट । प्रस्नोष्यते । प्रक्रंस्यते । निमित्तग्रहणं किम् । सीयुडादेस्तत्परस्य च प्रतिषेधार्थम् । ( क्रमेः कर्तरि आत्मनेपदविषयात्कृति प्रतिषेधो वक्तव्यः )

प्रक्रन्ता । उपक्रन्ता । कर्त्तरीति किम् । प्रक्रमितव्यम् । नात्मनेपदविषयादिति किम् । निष्क्रमिता ।

## ग्रहोऽलिटि दीर्घः । ३७ ।

ग्रहेः परस्येटो दीर्घो नतु लिटि । ग्रहीता । ग्रहीतुम् । ग्रहीतव्यम् । अलिटीति किम् । जगृहिव । जगृहिम । प्रकृत एवेहेड् गृह्यते न चिण्वदिट् । ग्राहिता । ग्राहिष्यते ।

## वृतो वा । ३८ ।

वृङ् वृञ्भ्यामॄकारान्ताच्च परस्येटो वा दीर्घो नतु लिटि । वरिता । वरीता । प्रावरिता । प्रावरीता । तरिता । तरीता । वॄत इति किम् । करिष्यति । अलिटीत्येव । तेरिथ । ववरिथ ।

## न लिङि । ३९ ।

वृत इटो न दीर्घो लिङि । वरिषीष्ट । प्रावरिषीष्ट । आस्तरिषीष्ट ।

## सिचि च परस्मैपदेषु । ४० ।

वृत इटो न दीर्घः परस्मैपदेपरे सिचि । प्रावारिष्टाम् । प्रावारिषुः । आस्तारिष्टाम् । आस्तारिषुः । परस्मैपदेष्विति किम् । प्रावरिष्ट । प्रावरीष्ट ।

## इट् सनि वा ४१ ।

वॄतः सन इड्वा । विवरिषति । विवरीषति । वुवूर्षति । विवरिषते(१) । विवरीषते । वुवूर्षते । तितरिषति । तितरीषति । तितीर्षति ।

## लिङ्सिचोरात्मनेपदेषु । ४[illegible] ।

वॄतो लिङ्सिचोरिड्वाऽऽत्मनेपदेषु परतः । वृषीष्ट । वरिषीष्ट । अवृत । अवरिष्ट । अवरीष्ट । आस्तीर्ष्ट । आस्तरिष्ट । आस्तरीष्ट ।

## ऋतश्च संयोगादेः । ४३ ।

(१) 'सनिग्रहे' तिनिषेधे प्राप्ते पक्षे इट् । चिकीर्षतीत्यादौ तु लाक्षणिकत्वान्न ।

संयोगादेर्ऋदन्ताल्लिङ्सिचोरिड्वा स्मृषीष्ट। स्मरिषीष्ट। अस्मृत। अस्मृषाताम्। अस्मरिष्ट। अस्मरिषाताम्। ऋत इति किम्। च्योषीष्ट। अच्योष्ट। संयोगादेरिति किम्। कृषीष्ट। अकृत। आत्मनेपदेष्वित्येव। अस्मार्षीत्।

## स्वरतिसूतिसूयतिधूञूदितो वा[1]।४४।

स्वरत्यादिभ्यः परस्य वलादेरार्द्धधातुकस्येड्वा। स्वर्ता। स्वरिता। प्रसोता। प्रसविता। सोता। सविता। धोता। धविता। गोप्ता। गोपिता। वेति वर्तमाने पुनर्वाग्रहणं लिङ्सिचोर्निवृत्त्यर्थम्। सूति सूयत्यो र्विकरण निर्देशः 'षू प्रेरणे' इत्यस्य निवृत्त्यर्थं। धूञिति सानुबन्धकस्य निर्देशो 'धू विधूनने' इत्यस्य निवृत्त्यर्थः। स्वरते रित्येतस्माद् विकल्पात् 'ऋद्धनोः स्ये' इत्येतद् भवति विप्रतिषेधेन। स्वरिष्यति। क्त्विति तु प्रत्यये 'श्र्युकः किति' इति नित्यः प्रतिषेधो भवति पूर्वविप्रतिषेधेन। स्वृत्वा। सूत्वा। धूत्वा।

## रधादिभ्यश्च।४५।

रधादिभ्यः(२) परस्य वलादेरिड्वा। रधिता। रद्धा। नंष्टा। नशिता।

## निरः कुषः।४६।

निरितिपूर्वात्कुषेः परस्य वलादेरिड्वा। निष्कोष्टा। निष्कोषिता। निरकोषीत्। निरकुक्षत्। निर इति किम्। कोषिता।

## इण्निष्ठायाम्।४७।

---

(१) षू प्रेरणे इत्यस्य धू विधूनने इत्यस्य च निवृत्तये विकरणनिर्देशोऽनुबन्धनिर्देशश्च। अन्यथानिरनुबन्धकत्वात्तयोरेव ग्रहणं स्यात्। सूङित्युक्तेऽपि लुग्विकरणपरिभाषया सूतेर्ग्रहणं न स्यात्। अस्या अस्तित्वेऽयमेव विकरणनिर्देशोज्ञापकः।

(२) रधिर्नशिस्तृपिद्दृपी, द्रुहि ष्णुहि मुहि ष्णिहिः। रधादयोऽमी पठिता दिवादिष्वष्ट कृतिभिः। ररन्धिवेत्यादौ क्रादिनियमान्नित्यमिट्।

निरिति पूर्वस्य कुषे र्निष्ठाया इट् । निष्कुषितः । निष्कुषितवान् । नित्यार्थं पुनरिड् ग्रहणम् । अत्रैव नित्यो विकल्प एवोत्तरत्र ।

## तीषसहलुभरुषरिषः । ४८ ।

इषादिभ्यः(१) परस्य तादेरार्द्धधातुकस्येड्वा । एष्टा । एषिता । सहिता । सोढा । लोभिता । लोब्धा । रोषिता । रोष्टा । रेष्टा । रेषिता । तीति किम् । एषिष्यति । ( इषेस्तकारे श्यन्प्रत्ययात्(२) प्रतिषेधो वक्तव्यः ) तेनेह न । प्रेषिता । प्रेषितुम् । प्रेषितव्यम् ।

## सनीवन्तर्द्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् । ४९ ।

इवन्तादिभ्यः परस्य सन इड्वा । दिदेविषति । दुद्यूषति । सिसेविषति । सुस्यूषति । अर्दिधिषति । ईर्त्सति । बिभ्रज्जिषति । बिभ्रक्षति । बिभर्ज्जिषति । बिभर्क्षति । दिदम्भिषति । धिप्सति । धीप्सति । उच्छिश्रयिषति । उच्छिश्रीषति । सिस्वरिषति । सुस्वूर्षति । यियविषति । युयूषति । प्रोर्णुनुविषति । प्रोर्णुनूषति । भौवादिकस्य भृञः । बिभरिषति । बुभूर्षति । ज्ञीप्सति । जिज्ञपयिषति । अमितस्तु जिज्ञापयिषति । सिषासति । सिसनिषति । तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः । तितांसति तितंसति । िततनिषति । पिपतिषति । पित्सति । दिदरिद्रिषति । दिदरिद्रासति । सनीति किम् । देविता भ्रष्टा ।

## क्लिशः क्त्वानिष्ठयोः । ५० ।

क्लिशः परयोः क्त्वानिष्ठयोरिड्वा । क्लिष्ट्वा । क्लिशित्वा । क्लिष्टः । क्लिशितः । क्लिष्टवान् । क्लिशितवान् ।

---

(१) क्रैयादिकस्य तौदादिकस्य च ग्रहणम् ।
(२) बहुव्रीहिरयम् ।

## पूङश्च ।५१।

पूङः परयोः क्त्वानिष्ठयो रिड्वा। पूत्वा। पवित्वा 'श्र्युकः किती' ति प्राप्ते विकल्पः। पूतः। पवितः। पूतवान्। पवितवान्।

## वसति क्षुधोरिट् ।५२।

वसतिक्षुधिभ्यां परयोः क्त्वानिष्ठयो र्नित्यमिट्। उषित्वा। उषितः। उषितवान्। क्षुधित्वा। क्षुधितः। क्षुधितवान्।

## अञ्चेः पूजायाम् ।५३।

पूजार्थादञ्चेः परयोः क्त्वानिष्ठयो र्नित्यमिट्। 'उदितोवे' तिविकल्पः; यस्यविभाषेति निषेधश्च न। अञ्चित्वा। अञ्चितः। अञ्चितवान्। पूजायां किम्। उदक्तमुदकं कूपात्। उद्धृतमित्यर्थः।

## लुभोविमोहने ।५४।

विमोहनार्थाल्लुभेः(१) परयोः क्त्वानिष्ठयो र्नित्यमिट्। लुभित्वा। लोभित्वा। लुभितः। लुभितवान्। विमोहनेकिम्। लुब्धः। लुब्ध्वा। लुभित्वा। लोभित्वा। अत्र गार्ध्यमर्थः।

## जृव्रश्च्योः क्त्वि ।५५।

जृव्रश्चिभ्यां परस्य क्त्व इट्। जरित्वा। जरीत्वा। व्रश्चित्वा। क्त्वा ग्रहणं निष्ठानिवृत्त्यर्थम्।

## उदितो वा ।५६।

उदितः परस्य क्त्व इड् वा। शमित्वा। शान्त्वा। तमित्वा। तान्त्वा।

## सेऽसिचि कृतचृतछृदतृदनृतः ।५७।

कृतादिभ्यः परस्य सिज्भिन्नस्य सादेरार्द्धधातुकस्येड्वा। कर्त्स्यति। कर्तिष्यति। अकर्त्स्यत्। अकर्तिष्यत्। चिकर्त्सति। चिकर्तिषति। इत्यादि

---

(१) विमोहन माकुलीकरणम्।

स इति किम् । कर्तिता । असिचीति किम् । अकर्तीत् ।

## गमेरिट् परस्मैपदेषु । ५८ ।

गमेः परस्य सादेरार्द्धधातुकस्य नित्यमिट् परस्मैपदे(१) परे । गमिष्यति । अगमिष्यत् । जिगमिषति । गमेरिति किम् । चेष्यति । परस्मैपदेष्विति किम् । संगंसीष्ट । संगंस्यते । संजिगंसिष्यते ।

## न वृद्भ्यश्चतुर्भ्यः । ५९ ।

वृतादिभ्यश्चतुर्भ्यः(२) परस्य सादेरार्द्धधातुकस्य इण् न परस्मैपदेषु । वर्त्स्यति । अवर्त्स्यत् । विवृत्सति । विवृत्सिता । विवृत्स त्वम् । वृतिर्वृधिः शृधिः स्यन्दिश्चत्वारोऽमी वृतादयः । परस्मैपदेष्वित्येव । वर्तिषीष्ट ।

## तासि च क्लृपः । ६० ।

क्लृपः परस्य तासेः सादेरार्द्धधातुकस्य इण् न परस्मैपदेषु । कल्प्ता । कल्प्स्यति । अकल्प्स्यत् । चिक्लृप्सति । चिक्लृप्सिता । चिक्लृप्स त्वम् । परस्मैपदेष्वित्येव । कल्पितासे । कृत्यपि परस्मैपदलुकि च प्रतिषेधो भवति । चिक्लृप्सिता ।

## अचस्तास्वत्थल्यनिटो नित्यम् । ६१ ।

तासौ नित्यानिटोऽजन्तस्य धातोस्थलि तास्वदिण न । ययाथ । चिचेथ । अच इति किम् । भेत्ता । तास्वदिति किम् । लूत्वा । थलीति किम् । पाता ।

## उपदेशेऽत्वतः । ६२ ।

तासौ नित्यानिट उपदेशेऽत्वतस्थलि तास्वदिण् न । पपक्थ । इयष्ठ ।

---

(१) परस्मपदग्रहणं तङानयोरभावस्योपलक्षणम् । तेन जिगमिषितारावित्यादौ कृत्यपि; जिगमिष त्वमित्यत्र परस्मैपदलुक्यपि ।

(२) ऊदिल्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यान्नवृद्भ्य इति निषेधः । स्यन्त्स्यति, इति प्राचीनाः ।

## ऋतो भारद्वाजस्य । ६३ ।

तासौ नित्यानिट ऋकारान्तस्यैव थलि तास्वदिण्न(१) भारद्वाजमते । सस्मर्थ । अयमत्र संग्रहः । अजन्तोऽकारवान् वायस्तास्यनिट् थलिवेडयम् । ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ।

## बभूथाततन्थजगृभ्मववर्थेति निगमे । ६४ ।

बभूथेत्यादाविडभावो निपात्यते निगमे । बभूविथ । आतेनिथ । जगृहिम । ववरिथ(२) । इति भाषायाम् ।

## विभाषा सृजिदृशोः । ६५ ।

सृजिदृशिभ्यां थल इड्वा । ससर्जिथ । सस्रष्ठ । ददर्शिथ । दद्रष्ठ ।

## इडत्त्यर्तिव्ययतीनाम् । ६६ ।

अत्त्यर्त्यादिभ्य स्थल इट् । आदिथ । आरिथ । संविव्ययिथ ।

## वस्वेकाजाद्घसाम् । ६७ ।

कृतद्विर्वचनेभ्य एकाज्भ्य आकारान्तेभ्यो घसेश्च परस्य वसोरिट् नान्येषाम्(३) । आदिवान् । आरिवान् । आत् । ददिवान् । जक्षिवान् ।

(४)

## विभाषा गमहनविदविशाम् । ६८ ।

गमादिभ्यो वसोरिड्वा । जग्मिवान् । जगन्वान् 'मोनो धातो' रिति नकारः । जघ्निवान् । जघन्वान् । विविदिवान् । विविद्वान् । विविशिवान् ।

---

(१) सिद्धे सत्यारम्भो नियमार्थः । तेन पेचिथ । ययिथेत्यादि ।

(२) क्रादिसूत्रादेव प्रतिषेधे सिद्धे नियमार्थं, निगम एव न भाषायामिति ।

(३) क्रादिनियमात् प्रतिषेधाभावाच्च य इट् प्रसक्तः स नियम्यते । बिभिद्वान् । बभूवान् । शिश्रिवान् ।

(४) परेण विशिना साहचर्य्यात् तौदादिकस्यैवग्रहणाद्वेत्तेर्विविद्वानित्येव ।

विविश्वान् । ( दृशेश्च ) ददृशिवान् । ददृश्वान् ।

## सनिंससनिवांसम् ।६९।

सनिपूर्वस्य सनोतेः सनतेर्वा वसौ इडागम एत्वाभ्यासलोपश्च निपात्यते । छन्दसीत्येव । लोकेतु सेनिवासमिति । अञ्जित्वाऽग्ने सनिंससनिवांसम् ।

## ऋद्धनोः स्ये ।७०।

ऋदन्ताद्धन्तेश्च परस्य-स्यस्येट् । करिष्यति । हनिष्यति ।

## अञ्जेः सिचि ।७१।

अञ्जेः परस्य सिच इट् । आञ्जीत् । ऊदित्त्वाद् विकल्पः प्राप्तः । सिचीति किम् । अङ्क्ता । अञ्जिता । ऊदित्वाद् विभाषा इड् भवति ।

## स्तुसुधूञ्भ्यः परस्मैपदेषु ।७२।

स्वादिभ्यः परस्मैपदेपरे सिच इट् । अस्तावीत् । असावीत् । अधावीत् । परस्मैपदेष्विति किम् । अस्तोष्ट । असोष्ट । अधोष्ट । अधविष्ट ।

## यमरमनमातां सक् च ।७३।

यमादीनामादन्तानाञ्च सक् एभ्यः परस्य सिच इट् परस्मैपदेषु । अयंसीत् । व्यरंसीत् । अनंसीत् । अयासीत् । परस्मैपदेष्वित्येव । अयंस्त ।

(१)

## स्मिपूङ्रञ्ज्वशां सनि ।७४।

स्म्यादिभ्यः परस्य सन इट् । सिस्मयिषते । पिपविषते । अरिरिषति । अञ्जिजिषति । अशिशिषते । अशेरूदितो ग्रहणादश्नोतेर्नित्यमिडागमः । पूङस्तु पुपूषतीत्येव ।

## किरश्च पञ्चभ्यः ।७५।

किरादिभ्यः पञ्चभ्यः परस्य सन इट् । चिकरिषति । जिगरिषति ।

(१) ऋ, अञ्जू, अशू इत्येते गृह्यन्ते ।

दिदरिषते। दिधरिषते। पिप्रच्छिषति। पञ्चभ्य इति किम्। मिमृक्षति।

## रुदादिभ्यः सार्वधातुके।७६।

रुदादिभ्यः पञ्चभ्यः परस्य वलादेः सार्वधातुकस्येट्। रोदिति। स्वपिति। श्वसिति। प्राणिति। जक्षिति। सार्वधातुक इति किम्। स्वप्ता। वलादेरित्येव। रुदन्ति।

## ईशः से।७७।

ईशः परस्य से इत्यस्येट्। ईशिषे।

## ईडजनोर्ध्वे च।७८।

ईडजनिभ्यां परस्य सार्वधातुकस्य ध्वे, चात् से इत्यस्य चेट्। ईडिषे। ईडिष्व। ईडिध्वे। ईडिध्वम्। जनिषे। जनिष्व। जनिध्वे। जनिध्वम्। जनिरयं छन्दसि। ध्वेशब्दे ईशेरपीडागम इष्यते। ईशिध्वम्। ईडीशिजनां सेध्वयो रित्येकमेव सूत्रं न पठितं, विचित्रा हि सूत्रस्य कृतिः पाणिने रिति। ध्वे इति कृतटेरेत्वस्य ग्रहणात्, लङि ध्वमि न भवितव्य मिटा। लोटिपुनरेकदेशविकृतस्यानन्यत्वाद् भवितव्यमिटा।

## लिङः सलोपो ऽनन्त्यस्य।७९।

सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः कः पुनरन्त्यो लिङः सकारः। यो यासुट् सुट् सीयुटाम्। कुर्य्यात्। कुर्वीत। अनन्त्यस्येति किम्। कुर्युः। सार्वधातुक इत्येव। क्रियात्। क्रियास्ताम्। कृषीष्ट।

## अतो येयः।८०।

अतः परस्य सार्वधातुकावयवस्य यास इय्। भवेत्। अत इति किम्। चिनुयात्। तपरकरणं किम्। यायात्। सार्वधातुक इत्येव। चिकीर्ष्यात्।

## आतो ङितः।८१।

अतः परस्य ङितामाकारस्येय्। पचेते। पचेथे। अत इति किम्। पचन्ति। यजन्ति। ङित इति किम्। पचावहै। अत इत्येव। चिन्वते। तपरकरणं किम्। मिमाते।

## आने मुक् । ८२ ।

अतोऽङ्गस्यमुक् आनेपरे । पचमानः । यजमानः । अकारमात्रभक्तोऽयं मुक् अदुपदेशग्रहणेन गृह्यते इति अदुपदेशादिति लसार्वधातुकानुदात्तत्वं भवति ।

## ईदासः । ८३ ।

आसः परस्य आनस्येत् । आसीनो यजते । अत्र पञ्चम्या परस्य षष्ठी कल्प्यते ।

## अष्टन आ विभक्तौ । ८४ ।

अष्टन आत्वं स्याद्विभक्तौ । अष्टाभिः । अष्टाभ्यः । तदन्तविधिश्चात्रेष्यते । प्रिया अष्टौ येषां ते प्रियाष्टानः । प्रियाष्टौ ।

## रायो हलि । ८५ ।

राय आत्वं हलि विभक्तौ । राभ्याम् । हलीति किम् । रायौ । विभक्ताविति किम् । रैत्वं । रैता ।

## युष्मदस्मदोरनादेशे । ८६ ।

अनयोरात्स्यादनादेशे हलि विभक्तौ । युष्माभिः । अस्माभिः । युष्मासु । अस्मासु । अनादेश इति किम् । अस्मत् । युष्मत् ।

## द्वितीयायाञ्च । ८७ ।

युष्मदस्मदोरा द्वितीयायां परतः । त्वाम् । माम् । युवाम् । आवाम् । युष्मान् । अस्मान् ।

## प्रथमायाश्च द्विवचने भाषायाम् । ८८ ।

प्रथमायाश्च द्विवचने युष्मदस्मदोरादेशो भाषायाम् । युवाम् । आवाम् । छन्दसि तु युवम् ।

---

(१) वैकल्पिकं चेदमष्टन आत्वमष्टनोदीर्घादित्यत्र दीर्घग्रहणादष्टाभ्य औशित्यत्र च दीर्घनिर्देशात् ।

## योऽचि ।८९।

युष्मदस्मदो यः स्यादनादेशेऽजादौ विभक्तौ । त्वया । मया । त्वयि । मयि । युवयोः । आवयोः । अचीति किम् । युवाभ्याम् । अनादेश इत्येव । त्वद् गच्छति ।

## (१) शेषे लोपः ।९०।

आत्वयत्वनिमित्तेतरविभक्तौ युष्मदस्मदो लोपः। त्वम् । अहमित्यादि ।

## मपर्य्यन्तस्य ।९१।

अधिकारोऽयम् । युवाम् । आवाम् ।

## युवावौ द्विवचने ।९२।

द्व्यर्थे वर्तमानयोर्युष्मदस्मदो र्मपर्य्यन्तस्य युवावौ स्तः । युवाम् । आवाम् । युवाभ्याम् । आवाभ्याम् ।

## यूयवयौ जसि ।९३।

युष्मदस्मदो र्मपर्य्यन्तस्य यूयवयौ स्तो जसि । यूयम् । वयम् । परमयूयम् । परमवयम् । अतियूयम् । अतिवयम् । तदन्तविधिरत्र । पदाङ्गाधिकारे तस्य च तदन्तस्य च ग्रहणं भवतीति परिभाषया ।

## त्वाहौ सौ ।९४।

युष्मदस्मदो र्मपर्य्यन्तस्य त्वाहौ स्तः सौ । त्वम् । अहम् । परमत्वम् । परमाहम् ।

## तुभ्यमह्यौ ङयि ।९५।

---

(१) पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि । यान्यद्विवचनान्यत्र तेषु लोपो विधीयते ॥ शेष ग्रहणं विस्पष्टार्थम् । शेषे लोपे कृते स्त्रियां टाप् कस्मान्न भवति, त्वं ब्राह्मणी । संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य । अलिङ्गे वा युष्मदस्मदी इति । केचित्तु शेषे लोपं टिलोप मिच्छन्ति । कथं वक्ष्यमाणादेशापेक्षः शेषः, ते इति । तत्रायं लोपः इति टिलोपो भवति ।

युष्मदस्मदो र्मपर्य्यन्तस्य तुभ्यमह्यौ स्तो ङयि । तुभ्यम् । मह्यम् । परमतुभ्यम् । अतिमह्यम् ।

## तवममौ ङसि । ९६ ।

युष्मदस्मदो र्मपर्य्यन्तस्य तवममौ स्तो ङसि । तव । मम । परमतव । परमम ।

## त्वमावेकवचने । ९७ ।

एकार्थवाचिनोर्युष्मदस्मदो र्मपर्य्यन्तस्य त्वमौ स्तो विभक्तौ । त्वाम् । माम् त्वया । मया । ( समस्यमाने द्व्येकत्व वाचिनीयुष्मदस्मदी । समासार्थोऽन्यसंख्यश्चेत् स्तो युवावौ त्वमावपि । १ । सुजसङेङस्सु परत आदेशाः स्युः सदैव ते । त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि । २ । एते परत्वाद् बाधन्ते युवावौ विषये स्वके । त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः । ३ । द्व्येक संख्यः समासार्थो बह्वर्थे युष्मदस्मदी । तयो रद्व्येकतार्थत्वान्न युवावौ त्वमौ न च । ४ । ) त्वां मां वातिक्रान्त इति विग्रहे । अतित्वम् । अत्यहम् । अतित्वाम् । अतिमाम् । अतियूयम् । अतिवयम् । अतित्वाम् २ । अतिमाम् २ । अतित्वान् । अतिमान् । अतित्वया । अतिमया । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वाभिः । अतिमाभिः । अतितुभ्यम् । अतिमह्यम् । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वभ्यम् । अतिमभ्यम् । ङसिभ्यसोः । अतित्वत् २ । अतिमत् २ । भ्यामिप्राग्वत् । अतितव । अतिमम । अतित्वयोः । अतिमयोः । अतित्वासु । अतिमासु । युवामावां वातिक्रान्त इति विग्रहे सुजसङेङस्सु प्राग्वत् । औ अम् औट् सु । अतियुवाम् ३ । अत्यावाम् ३ । अतियुवान् । अत्यावान् । अतियुवया । अत्यावया । अतियुवाभ्याम् ३ । अत्यावाभ्याम् ३ । अतियुवाभिः । अत्यावाभि । भ्यसि । अतियुवभ्यम् । अत्यावभ्यम् । ङसिभ्यसोः । अतियुवत् २ । अत्यावत् २ । ओसि । अतियुवयोः२ । अत्यावयोः२ । अतियुवाकम् । अत्यावाकम् । अतियुवयि । अत्यावयि । अतियुवासु । अत्यावासु । युष्मानस्मान्वेति विग्रहे—सुजसङेङस्सु प्राग्वत् । औ अम् औट् सु । अतियुष्माम् ३ । अत्यस्माम् ३ । अतियुष्मान् । अत्यस्मान् । अतियुष्मया । अत्यस्मया । अतियुष्माभ्याम् ३ । अत्यस्माभ्याम् ३ । अति-

युष्माभिः। अत्यस्माभिः। भ्यसि। अतियुष्मभ्यम्। अत्यस्मभ्यम्। ङसि भ्यसोः। अतियुष्मत् २। अत्यस्मत् २। ओसि। अतियुष्मयोः। २। अत्यस्मयोः। २। अति युष्माकम्। अत्यस्माकम्। अतियुष्मयि। अत्यस्मयि। अतियुष्मासु। अत्यस्मासु।

## प्रत्ययोत्तरपदयोश्च ।९८।

एकार्थवाचिनो युष्मदस्मदोस्त्वमौ स्तः प्रत्यये उत्तरपदे(१) च परतः। तवाऽयं त्वदीयः। मदीयः। त्वत्पुत्रः। मत्पुत्रः। त्वन्नाथः। मन्नाथः। त्वत्तरः। मत्तरः। त्वामिच्छति। त्वद्यति। मद्यति। त्वमिवाचरति त्वद्यते। मद्यते। इत्यादि।

## त्रिचतुरोः स्त्रियां तिसृचतसृ ।९९।

स्त्रियां वर्तमानयो(२) स्त्रिचतुरोस्तिसृचतसृ इति स्यातां विभक्तौ। तिस्रः। चतस्रः। (तिसृभावे संज्ञायां कन्युपसंख्यानम्) तिसृका नाम ग्रामः। (चतसर्याद्युदात्तनिपातनं कर्तव्यम्) चतस्रः पश्येत्यत्र चतुरश्शसीत्यन्तोदात्तत्वं माभूत्।

## अचि र ऋतः ।१००।

तिसृचतस्रोर्ऋतः स्थाने रोऽचि विभक्तौ(३)। तिस्रः। चतस्रः।

## जराया जरसन्यतरस्याम् ।१०१।

जराया जरस् वा अचि विभक्तौ। जरसा दन्ताः शीर्यन्ते जरया वा। प-

---

(१) लुको बहिरङ्गत्वे तु पूर्वं विभक्तावादेशयोरसतोरपि, एतद्वचनं ज्ञापकं "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते" इति। तेन गोमत्प्रिय इत्यादौ नुमादि लुका बाध्यते।

(२) स्त्रियामित्यस्य त्रिचतुरोर्विशेषणान्नेह-प्रियास्त्रय स्त्रीणि वा यस्याः सा प्रियत्रिरिति।

(३) गुणदीर्घोत्वानामपवादः। प्रियतिस्रि, प्रियतिस्रौ, प्रियतिस्र इत्यत्र "ऋतोङि" ति गुणस्य, तिस्रः पश्येत्यत्र पूर्वसवर्णदीर्घस्य, प्रियतिस्रः स्वमित्यत्र "ऋतउदि" त्यस्य चापवादः।

दाङ्गाधिकारे तस्य तदन्तस्य च ग्रहणादतिजराय, अतिजरसे वा देहि। निर्दिश्यमानस्यादेशा भवन्तीति जराशब्दस्यैवादेशः । ह्रस्वेऽनिर्दिश्यमानेऽपि एकदेशविकृतमनन्यवदिति जरस् ।

## त्यदादीनामः । १०२ ।

त्यदादीनामः स्याद्विभक्तौ । त्यदादीनां द्विपर्य्यन्तानामकारवचनम् । तेन भवदादौ न । स्यः । त्यौ । त्ये । सः । तौ । ते । नेह । भवान् ।

## किम कः । १०३ ।

किमः को विभक्तौ । कः । कौ । के । साकच्कस्याप्ययमादेशः। तेनाकार एव किमो न विधीयते किमोदिति ।

## कुतिहोः । १०४ ।

किमः कुस्तादौ हादौ च विभक्तौ । कुतः । कुत्र । कुह । तिहोरितीकार उच्चारणार्थः ।

## क्वाति । १०५ ।

किमः क्वोऽति विभक्तौ । क्व ।

## तदोः सः सावनन्त्ययोः । १०६ ।

त्यदादीनामनन्त्ययोस्तदोः सः सौ । स्यः । सः । एषः । असौ ।

## अदस औ सुलोपश्च । १०७ ।

अदसः सस्य औः सोर्लोपश्च । असौ । ( सौ औत्वप्रतिषेधः साकच्काद्वा वक्तव्यः साच्च परस्य उत्वं वक्तव्यम् ) असुकः । असकौ । ( उत्तरपदभूतानां त्यदादीनामकृतसन्धीनामादेशा वक्तव्याः ) परमाहम् । परमायम् ।

## इदमो मः । १०८ ।

इदमो मान्तादेशः सौ । इयम् । अयम् । त्यदाद्यत्वापवादः ।

## दश्च । १०९ ।

इदमो दस्य मो विभक्तौ । इमम् । इमौ ।

## यः सौ । ११० ।

इदमो दस्य यः सौ । इयम् । उत्तरसूत्रे पुंसीति वचनात् स्त्रियामयं यकारः ।

## इदोऽय् पुंसि । १११ ।

इदोऽय् सौ पुंसि । अयम् । पुंसीति किम् । इयं ब्राह्मणी ।

## अनाप्यकः । ११२ ।

अककारस्येदम इदोऽन् आपि विभक्तौ । अनेन । अनयोः । अक इति किम् । इमकेन । आपीति प्रत्याहार स्तृतीयैक वचनात्प्रभृति सुपः पकारेण ।

## हलि लोपः । ११३ ।

अककारस्येदम इदो लोपो हलि विभक्तौ । आभ्याम् । नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे । इति सर्वस्यायमिद्रूपस्य लोपः ।

## मृजेर्वृद्धिः । ११४ ।

मृजेरङ्गस्येको वृद्धिः । मार्ष्टुम् । मार्ष्टव्यम् । धातोः कार्यमुच्यमानं धातुप्रत्यय एवेति कंसपरिमृड्भ्यामित्यादौ न ।

## अचो ञ्णिति । ११५ ।

अजन्ताङ्गस्य वृद्धिर्ञ्णिति च गौः । कारः । कारकः । सखायौ ।

## अत उपधायाः । ११६ ।

उपधाया अतो वृद्धिर्ञ्णिति । पाकः । रागः । पाचयति । याजयति अत इति किम् । भेदयति । उपधाया इति किम् । चकासयति ।

## तद्धितेष्वचामादेः । ११७ ।

अङ्गस्याचामादेरचो वृद्धिर्ञिति णिति तद्धिते । गार्ग्यः । दाक्षिः । औपगवः । शैवः ।

## किति च । ११८ ।

अङ्गस्याचामादेरचो वृद्धिः किति तद्धिते । आक्षिकः । प्राग् वहतेष्ठक् । नाडायनः । नडादिभ्यः फक् ।

## इतिसप्तमाध्यायस्य द्वितीयः पादः ।

---

# अथ तृतीयपादारम्भः।

## देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् ।१।

देविकादीनामचामादेरात् ञिति णिति किति तद्धिते। दाविकम्(१) पूर्वदेविकायां भवः पूर्वदाविकः। प्राचां ग्रामनगराणामित्युत्तरपदवृद्धिः। शांशपः(२)। दित्यौह इदं दात्यौहम्। दीर्घसत्रेभवं दार्घसत्रम्। श्रेयसिभवं श्रायसम्। ( वहीनरस्येत्वं वक्तव्यम् ) वैहीनरिः(३)।

## केकयमित्रयुप्रलयानां यादेरियः ।२।

केकयादीनां यादेरियो ञिति णिति किति च। कैकेयः(४)। मैत्रेयिकया(५) श्लाघते। प्रालेयं(६) जलम्।

## नय्वाभ्यां पदान्ताभ्यां पूर्वौतुताभ्यामैच् ।३।

पदान्ताभ्यां य्वाभ्यांपरस्याचामादेरचो वृद्धिर्न, ताभ्यां पूर्वमैजागमो-

---

(१) उदाहरणेषु भवार्थादावणादिकं बोध्यम्।

(२) विकारार्थे पलाशादित्वादण् पक्षे अनुदात्तादिलक्षणो वा अञ् शिंशपाया विकारः शांशपश्चमस इति विग्रहः।

(३) वहोऽस्यास्तीतिवही स चासौ नरश्चेति विग्रहः। केचित्तु विहीनो नरो विहीनर स्तस्यापत्य मिति वैहीनरिः।

(४) अपत्यार्थे "जनपदशब्दा" दित्यञ् केकयस्यापत्यं कैकेयः।

(५) गोत्र चरणेति वुञ्। मित्रयुभावेन श्लाघते इति विग्रहः।

(६) आगतार्थेऽण्। प्रलया दागतं प्रालेय मुदक मिति विग्रहः।

ञिति णिति किति च। व्याकरणमधीते वैयाकरणः। सौवश्वः(१)।

## द्वारादीनाञ्च ।४।

द्वारादीनां यवाभ्यामुत्तरपदस्या चामादेरचो वृद्धिर्न पूर्वौतु ताभ्या मैजागमौ भवतः। द्वारेषु नियुक्तो दौवारिकः। द्वारपालस्येदं दौवारपालम्। स्वरमधिकृत्य कृतो ग्रन्थः सौवरः। स्वस्तीत्याह सौवस्तिकः।

## न्यग्रोधस्य च केवलस्य ।५।

केवलस्य न्यग्रोधस्य यकारात्परस्याचामादेर्वृद्धिर्न ततः प्रागैच् ञिति णिति किति। न्यग्रोधस्य विकारो नैयग्रोधश्चमसः। केवलस्येति किम्। न्यग्रोधमूले भवा न्याग्रोधमूलाः शालयः। न्यग्रोधयतीति न्यग्रोध इति व्युत्पत्तिपक्षे नियमार्थ मव्युत्पत्तिपक्षे विध्यर्थम्।

## न कर्मव्यतिहारे ।६।

कर्मव्यतिहारे द्योत्ये उक्तन्न। व्यावक्रोशी। व्यावहासी। णचः स्त्रियामञित्यञ्, तदन्तान् ङीप्।

## स्वागतादीनाञ्च ।७।

स्वागतादीनामुक्तन्न। स्वागतमित्याह स्वागतिकः। स्वध्वरेण व्यवहारेण वा चरति–स्वाध्वरिकः। व्यावहारिक इत्यादि।

## श्वादेरिञि ।८।

श्वादेरिञिपरे उक्तन्न। श्वभस्त्रस्यापत्यं श्वाभस्त्रिः। द्वारादिषु श्वशब्दपाठो ज्ञापकस्तदादिविधेः। श्वादंष्ट्रिः। (इकारादि ग्रहणञ्चकर्तव्यं श्वागणिकाद्यर्थम्) श्वागणिकः। (तदन्तस्य चान्यत्रापि तद्धिते प्रतिषेधो वक्तव्यः) श्वाभस्त्रेः स्वं श्वाभस्त्रम्।

## पदान्तस्यान्यतरस्याम् ।९।

पदशब्दान्तस्य श्वादेरङ्गस्योक्तं वा। श्वापदस्येदं श्वापदम्। शौ-

(१) अपत्येऽर्थेऽण्। स्वश्वस्यापत्यं सौवश्वः।

वापदं वा।

## उत्तरपदस्य ।१०।

अधिकारोऽयं हनस्तोचिण्णलोरित्यतः प्राक्।

## अवयवादृतोः ।११।

अवयववाचिनः परस्य ऋतुवाचिन उत्तरपदस्याचामादेरचो वृद्धि र्ञिति णिति किति तद्धिते। पूर्वं वर्षाणां तत्र भवम् पूर्ववार्षिकम्(१)। पूर्वं हेमन्तस्य पूर्वहैमनम्।

## सुसर्वार्द्धाज्जनपदस्य ।१२।

सुसर्वार्द्धेभ्यः परस्य जनपदवाचिन उत्तरपदस्याचामादेरचो वृद्धि र्ञिति णिति किति च तद्धिते। सुपाञ्चालकः(२)। सर्वपाञ्चालकः। अर्द्ध पाञ्चालकः।

## दिशोऽमद्राणाम् ।१३।

दिग्वाचिनः परस्य मद्रभिन्नस्य जनपदवाचिन उत्तरपदस्याचामादेरचो वृद्धि र्ञिति णिति किति च। पूर्वपाञ्चालकः।

## प्राचां ग्रामनगराणाम् ।१४।

प्राचां देशे दिशः परेषां ग्रामनगराणामचामादेरचोवृद्धि र्ञिति णिति किति च। पूर्वैषुकामशमः। भवार्थेऽण्। पूर्वपाटलिपुत्रकः। भवार्थे-वुञ्।

## संख्यायाः संवत्सर संख्यस्य च ।१५।

संख्यायाः परस्य संवत्सरस्य संख्यावाचिन श्चाचामादेरचोवृद्धि र्ञिति

---

(१) एकदेशिसमासः। भवार्थे वर्षाभ्यष्ठक्, हेमन्ताच्च, सर्वत्राण् चेत्यण्। ऋतोर्वृद्धिमद् विधाववयवादिति तदन्तविधिः। अवयववाचिनः परस्मादृतुवाचिनः शब्दाद्वृद्धिनिमित्ते प्रत्यये विधीयमाने तदन्तविधिरिति तदर्थः।

(२) 'अवृद्धादपि' इति वुञ्। सुसर्वार्द्ध दिक् शब्देभ्यो जनपदस्येति तदन्त-विधिः।

णिति किति च तद्धिते। द्वि साम्वत्सरिकः(१)। द्विषाष्टिकः।

## वर्षस्याभविष्यति। १६।

संख्याया उत्तरस्य वर्षस्याचामादेरचोवृद्धि ञिति णिति किति च तद्धिते, भविष्यति न। द्वे वर्षे ऽधीष्टो भृतो भूतो वा द्विवार्षिकः। भविष्यति तु त्रीणि वर्षाणि भावीति त्रैवर्षिकम्।

## परिमाणान्तस्यासंज्ञाशाणयोः। १७।

संख्यायाः परस्य परिमाणवाचिनोऽचामादेरचो वृद्धि भवति, संज्ञायां शाणेचोत्तरपदे, न। द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः(२)।

## जे प्रोष्ठपदानाम्। १८।

प्रोष्ठपदानामुत्तरपदस्याचामादेरचोवृद्धि ञिति णिति किति च तद्धिते जातार्थे। प्रोष्ठपदासु जातः प्रोष्ठपादः। युक्तः काल इत्यर्थेऽण्। तस्य लुबविशेष इति लुप्। ततो जातार्थे 'सन्धिवेलादि' सूत्रेणाण्। (बहुवचननिर्देशात्पर्य्यायोऽपि गृह्यते) भद्रपादः।

## हृद्भगसिन्ध्वन्ते पूर्वपदस्य च। १९।

हृदाद्यन्तेऽङ्गे पूर्वोत्तरपदयोरचामादेरचोवृद्धि ञिति णिति किति च तद्धिते। सुहृदस्येदं सौहार्दम्। सुभगस्य भावः सौभाग्यम्। सुभगाया अपत्यं सौभागिनेयः। सक्तुसिन्धुषुभवाः साक्तुसैन्धवाः।

## अनुशतिकादीनाञ्च। २०।

अनुशतिकादीनां पूर्वोत्तरपदयोरचामादेरचोवृद्धि ञिति णिति किति च तद्धिते। आनुशातिकम्(३)। आनुहौडिकः(४)। आकृतिगणोऽयम्।

---

(१) द्वौ संवत्सरावधीष्ट इत्यादि विग्रहः।

(२) अत्र परिमाणग्रहणेन कालपरिमाणस्याग्रहणान्तेन द्वैसमिक इत्युत्तरपदवृद्धिर्न।

(३) इदमर्थेऽण्। अनुशतिकस्येदमिति विग्रहः।

(४) चरतीत्यर्थे ठक्। अनुहोडेन चरतीति विग्रहः।

## देवताद्वन्द्वे च । २१ ।

देवताद्वन्द्वे पूर्वोत्तरपदयोरचामादेरचो वृद्धि र्ञिति णिति किति च तद्धिते । अग्निमरुतौ देवते अस्या आग्निमारुती । सूक्तहविः सम्बन्धी देवताद्वन्द्वो गृह्यते । तेनेह न-ब्राह्मप्रजापत्यम् ।

## नेन्द्रस्य परस्य । २२ ।

परस्येन्द्रस्योक्तन्न(१) । सोमेन्द्रौ देवते अस्य सौमेन्द्रः ।

## दीर्घाच्च वरुणस्य । २३ ।

दीर्घादुत्तरस्य वरुणस्योक्तन्न । इन्द्रावरुणौ देवते अस्यैन्द्रावरुणम् ।

## प्राचां नगरान्ते । २४ ।

प्राचां देशे नगरान्तेऽङ्गे पूर्वोत्तरपदयोरचामादेरचो वृद्धिः ञिति णिति किति च तद्धिते । सुह्मनगरे भवः सौह्मनागरः । प्राचामिति किम् । मद्रनगरमुदक्तु तत्र भवो माद्रनगरः ।

## जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् । २५ ।

जङ्गलाद्यन्तस्याङ्गस्यपूर्वपदस्याचामादेरचोवृद्धिरुत्तरपदस्य तु वा ञिति णिति किति च । कुरुजङ्गलेषु भवाः कौरुजङ्गलाः । कौरुजाङ्गला वा । वैश्वधेनवम् । वैश्वधैनवम् । सौवर्णवलजः । सौवर्णवालजो वा ।

## अर्द्धात्परिमाणस्य पूर्वस्य तु वा । २६ ।

अर्द्धात्परस्य परिमाणवाचिन उत्तरपदस्याचामादेरचोवृद्धिः पूर्वपदस्य तु वा ञिति णिति किति च । अर्द्धद्रोणेन क्रीतमार्द्धद्रौणिकम् । अर्द्धद्रौणिकम् ।

## नातःपरस्य(२) । २७ ।

---

(१) ज्ञापकमिदं-पूर्वोत्तरपदयोः कार्य्यस्य पश्चादेकादेश इति तेन पूर्वैषुकामशमः ।

(२) तपरः किम् । अर्द्धखार्यां भवा अर्द्धखारी । अर्द्धखारीभार्य इत्यत्र "वृद्धिनिमित्तस्ये" ति पुंवद्भावनिषेधो न स्यात् ।

अर्द्धात्परस्य परिमाणस्यातोवृद्धिर्न पूर्वस्य तु वा ञिति णिति किति च तद्धिते । आर्द्धप्रस्थिकः । अर्द्धप्रस्थिकः । अत इति किम् । आर्द्धकौडविकः ।

## प्रवाहणस्य ढे । २८ ।

प्रवाहणस्योत्तरपदस्याचामादेरचोवृद्धिर्ढे परे पूर्वपदस्य तु वा । प्रवाहणस्यापत्यं प्रावाहणेयः(१) । प्रवाहणेयः ।

## तत्प्रत्ययस्य च । २९ ।

ढक् प्रत्ययान्तस्य प्रवाहणस्योत्तरपदस्याचामादेरचो वृद्धिः पूर्वपदस्य तु वा । प्रवाहणेयस्यापत्यं प्रावाहणेयिः । प्रवाहणेयिः ।

## नञः शुचीश्वर क्षेत्रज्ञकुशलनिपुणानाम् । ३० ।

नञः परेषां शुच्यादीनामचामादेरचोवृद्धिः पूर्वपदस्य तु वा ञिति णिति किति च तद्धिते । अशौचम् । आशौचम् । अनैश्वर्यम् । भावेष्यञ् ब्राह्मणादित्वात् । अक्षैत्रज्ञ्यम् । आक्षैत्रज्ञ्यम् । अकौशलम् । आकौशलम् । अनैपुणम् । आनैपुणम् ।

## यथातथयथापुरयोः पर्यायेण । ३१ ।

नञः परयोर्यथातथयथापुरयोः पूर्वोत्तरपदयोः पर्यायेणाचामादेरचोवृद्धिर्ञिति णिति किति च । आयथातथ्यम् । अयाथातथ्यम् । आयथापुर्यम् । अयाथापुर्यम् । ब्राह्मणादिष्वेतौ । अयथातथाभावोऽयथापुराभाव इति च विग्रहः । सूत्रे सौत्रत्वाद्ध्रस्वः ।

## हनस्तोऽचिण्णलोः । ३२ ।

ञ्णितीत्येव वर्त्तते । हन्तेस्तश्चिण्णल्भिन्ने ञिति णिति च । घातयति घातकः । घातः । अचिण्णलोः किम् । अघानि । जघान । धातोः कार्यमुच्यमानं तत्प्रत्यये विज्ञायते । इह न भवति । वात्रघ्नमितरत् ।

---

( १ ) अपत्येऽर्थे शुभ्रादिभ्यश्चेति ढक् । वृत्तौ व्यधिकरणे षष्ठ्यौ ।

## आतोयुक् चिण् कृतोः । ३३ ।

आतो युक् चिणि, ञिति णिति च कृति । अदायि। दायः । दायकः। चिण् कृतोः किम् । ददौ । दधौ । चौडिः बालाकिः । बाह्वादित्वादिञ् । ज्ञा देवता अस्य ज्ञः ।

## नोदात्तोपदेशस्य मान्तस्यानाचमेः । ३४ ।

उदात्तोपदेशस्याचमिभिन्नस्यमान्तस्याङ्गस्योक्तन्न चिणि ञिति णिति च कृति । अशमि । अतमि । शमकः । तमकः । शमः । तमः । ( अनाचमिकमिवमीनामितिवक्तव्यम् आचामकः । वामः । कामः । उदात्तोपदेशस्येति किम् । यामकः । रामकः । मान्तस्येति किम् । चारकः ।

## जनिवध्योश्च । ३५ ।

जनिवध्योर्यदुक्तं तन्न चिणि ञिति णिति च कृति । अजनि । जनकः अवधि । वधकः । जनः । वधः । वधिरयमकृत्यन्तरम् । भक्षकश्चेन्न विद्येत वधकोऽपि न विद्यते । इति प्रयोगो दृश्यते ।

## अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ । ३६ ।

अर्त्यादीनामङ्गानां पुक्स्याण्णौ । अर्पयति । ह्रेपयति । व्लेपयति । रेपयति । क्नोपयति । क्ष्मापयति । दापयति ।

## शाच्छासाह्वाव्यावेपां युक् । ३७ ।

शादीनां युङ्णौ(१) । शाययति । छाययति । अवसाययति । ह्वाययति । संव्याययति । वाययति । पाययति । ( णि प्रकरणे धूञ् प्रीञोर्नुग्वक्तव्यः ) धूनयति । प्रीणयति । ( पातेर्लुग्वचनम्२ ) पालयति ।

---

( १ ) पुङ्निवृत्त्यर्थमिदम् । लक्षणप्रतिपदोक्तपरिभाषा ऽत्र नाश्रीयत इत्यनेन ज्ञाप्यते । तेन ज्ञापयतीत्यादि सिद्धम् ।

( २ ) पा रक्षणे इत्यस्येत्यर्थः ।

## वो विधूनने जुक् । ३८ ।

कम्पनेऽर्थे वातेर्जुक् णौ । पक्षेणोपवाजयति । विधूनने किम् । आवापयति केशान् ।

(३)

## लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने । ३९ ।

स्नेहद्रवे क्रमाल्लीलोर्नुग्लुकौ वा, णौ । विलीनयति । विलाययति । विलालयति । विलापयति वा घृतम् । स्नेहविपातन इति किम् । जतु विलापयति । । जटाभिरालापयति ।

## भियो हेतुभये षुक् । ४० ।

हेतुभये ईकारान्तस्य भियः षुङ्णौ । मुण्डो भीषयते(४) ।

## स्फायो वः । ४१ ।

स्फायो वो णौ । स्फावयति ।

## शदेरगतौ तः । ४२ ।

अगत्यर्थस्य शदेस्तो णौ । पुष्पाणि शातयति । अगताविति किम् । गाः शादयति गोविन्दः ।

## रुहः पोऽन्यतरस्याम् । ४३ ।

रुहेः पो वा णौ । व्रीहीन् रोपयति । रोहयति वा ।

## प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः । ४४ ।

प्रत्ययस्थककाराव्यवहितपूर्वस्यात इत्स्यादापि स आप् सुपः परो न चेत् । जटिला एव जटिलिका । सर्विका । कारिका । प्रत्ययग्रहणं किम् । शक्नोतीति शका । कादिति किम् । नन्दना । पूर्वस्येति किम् ।

---

( ३ ) ला इत्यनेन ला आदाने इति लीलीङोः कृतात्त्वयोश्च ग्रहणम् । आत्वपक्षे नुक् तु न । ली ई इति ईकारप्रश्लेषात् ।

( ४ ) अन्यत्र मुण्डो भापयते । बिभेतेर्हेतुभये इत्यात्वे वा । हेतुभये किम् ? कुञ्चिकयैनं भाययति ।

पट्टुका । अत इति किम् । गोका । तपरकरणं किम् । राका । आपीति किम् । कारकः । ( मामकनरकयोरुपसंख्यानम् ) मामिका । नरान् कायति नरिका । ( त्यक्त्यपोश्च ) वक्ष्यमाणविकल्पापवादः । दाक्षिणात्यिका । इहत्यिका ।

## न यासयोः । ४५ ।

प्रत्ययस्थयोर्यासयोरत इन्न पूर्वविषये । यका । सका । यासेति निर्देशो न तन्त्रम् । यकाम् । तकाम् । ( त्यकनश्च निषेधः ) उपत्यका । अधित्यका । ( पावकादीनां छन्दस्युपसंख्यानम् ) हिरण्यवर्णाः शुचयः पावकाः । अक्षकाः । अलोमकाः । लोकेतु । पाविका । अलोमिका । ( आशिषि चोपसंख्यानम् ) जीवतात् । जीवका । नन्दतात् । नन्दका । ( उत्तरपदलोपे चोपसंख्यानम् ) देवदत्तिका । देवका । ( क्षिपकादीनाञ्चोपसंख्यानम् ) क्षिपका । ( तारकाज्योतिष्युपसंख्यानम् ) तारका । अन्यत्रतु तारयतीति तारिका । ( वर्णकातान्तवे उपसंख्यानम् ) तन्तूनां विकारस्तान्तवम् । वर्णका प्रावरणभेदः । अन्यत्र वर्णिका । ( वर्तकाशकुनौ प्राचामुपसंख्यानम् ) अन्यत्र वर्त्तिका । ( अष्टका पितृदैवत्ये ) अन्यत्र अष्टिका खारी ( वासूतकापुत्रकावृन्दारकाणामुपसंख्यानम् ) सूतिका(१) । सूतका पुत्रिका । पुत्रका । इत्यादि ।

## उदीचामातः स्थाने यकपूर्वायाः(२) । ४६ ।

यकपूर्वस्य प्रत्ययस्थानिकस्याऽत इद्वा । आर्य्यका । आर्यिका । चटकका । चटकिका । ( यकपूर्वत्वे धात्वन्तप्रतिषेधः ) सुनयिका । सुपाकिका ।

---

(१) पुत्रिकाशब्दे ङीन इवर्णस्य पक्षेऽकारो ऽन्यत्र त्वबाधनार्थमकारस्यैव पक्षे ऽकारः ।

(२) स्त्रीत्वनिर्देश आतः स्त्रीप्रत्ययस्य प्रतिपत्त्यर्थस्तेनेह न । शुभंयातीति शुभंयाः । अज्ञाता सा शुभंयिका ।

## भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि ।४७।[(१)]

नञ्पूर्वाणां केवलानामपि च भस्त्रादीना मातःस्थानिकस्यात इद्वा पूर्वविषये । अभस्त्रका । अभस्त्रिका । एषका । एषिका । अजका । अजिका । इत्यादि ।

## अभाषितपुंस्काच्च ।४८।

अभाषितपुंस्काद्विहितस्याऽऽतःस्थानिकस्याऽत इद्वा पूर्वविषये । खट्वका खट्विका । अखट्वका । अखट्विका । बहुव्रीहेर्भाषितपुंस्कत्वात्ततो बिहितस्य नित्यम् । शैषिके कपि तु विकल्पः ।

---

(१) अत्र सूत्रे इदं बोध्यम् । स्वेत्यन्त्यं लुप्तषष्ठीकम् । अङ्गत्वात्तदन्तविधिनैव नञ्पूर्वाणामनञ्पूर्वाणां केवलानां च संग्रहे सिद्धे नञ्पूर्वाणामपीति स्पष्टार्थम् । भस्त्राग्रहणमुपसर्जनार्थम् । अनुपसर्जनस्य तु 'अभाषितपुंस्काच्च' इत्यनेन सिद्धम् । एवं चोपसर्जनेऽस्य चारितार्थ्येन अनुपसर्जने "आदाचार्याणाम्" इत्यस्यबाधे मानाभावेन पक्षे आत्वं भवत्येव । एषा द्वा एतयोस्तु सपूर्वयोर्नेत्वम् । अन्तर्वर्तिनीं विभक्तिमाश्रित्या-सुप इति प्रतिषेधात् । न सु एतद् सु इतिस्थिते अकचिकृतेऽकचः प्रागेव वा नञ्तत्पुरुषे 'अन्तरङ्गानपि' इति न्यायेनत्यदाद्यत्वप्रवृत्तेः प्रागेव सामासिके लुकि विशिष्टात् पुनः सुपि-त्वदाद्यत्वे पररूपेच कृते ततष्टाप् । सच आद्यसुपः पर इति भावः । अज्ञाता एषा एषका, न एषका अनेषका । अज्ञाता अनेषा-अनेषकेति वा । परमैषका । अद्वके । परमद्वके । भ-स्त्रादीनान्तु सपूर्वाणामपीत्वं भवत्येव । तत्रटाप कप्रत्ययात्परत्वेन सुपः परत्वाभावात् "असुपः" इति निषेधाप्रवृत्तेः । आतःस्थाने इत्यनुवृत्तं स्वशब्दस्यातो विशेषणं नतु द्वैषयोरसम्भवात्, नाप्यन्येषामव्यभिचारात् ( सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थ-वदितिन्यायेन तयोः सतोरेव सार्थक्यम् ) स्वशब्दस्त्वनुपसर्जनमात्मीयवाची अकजर्हः एवं च तदकारस्याऽतः स्थानिकत्वाभाव इति भावः । अर्थान्तरेतु आत्मज्ञातिधन-रूपेष्वर्थेषु तु न स्त्री ( स्त्रीलिङ्गः स्वशब्दः ) संज्ञोपसर्जनी भूतोहि कप्रत्ययान्तत्वादुदा-हरणम् । न च संज्ञाभूतस्याभाषित पुंस्काच्चेत्यनेनसिद्धः "संज्ञापूरण्योश्च' इति निषेधेन संज्ञाया अपि भाषित पुंस्कत्वावगमात् । एवं चात्मीयायां-स्विका । परमस्विकेतिनित्य मेवे-त्वम् । भस्त्राया निष्क्रान्ता—निर्भस्त्रिका । निर्भस्त्रका । एषका । एषिका । कृतषत्व निर्दे-शस्य विवक्षितत्वान्नेह विकल्पः-एतिके । एतिका । अजका । अजिका । ज्ञका । ज्ञिका । द्विके । द्वके । निःस्विका । निःविका । ( स्वस्यानिष्क्रान्ता इति विग्रहः ) सर्वमेतद्दीक्षित हरदत्त नागेशादि ग्रन्थेषु स्पष्टम् ।

## आदाचार्य्याणाम् ।४९।

अभाषितपुंस्काद्विहितस्यातःस्थानिकस्यात आद्वा । खट्विका । खट्वाका ।

## ठस्येकः ।५०।

प्रत्ययावयवस्य ठस्येकः स्यात् । धार्मिकः ।

## इसुसुक्तान्तात्कः ।५१।

इसन्ता दुसन्ता दुगन्तात्तान्ताच्च परस्य प्रत्यावयवस्य ठस्य कः स्यात्। सार्पिष्कः(१) । धानुष्कः । नैषादकर्षुकः । मातृकः । औदश्वित्कः । (दोष उपसंख्यानम्) दोर्भ्याञ्चरति दौष्कः ।

## चजोः कु घिण्यतोः ।५२।

चजोः कुत्वं घिति ण्यति च । पाकः । त्यागः । पाक्यम् ।

## न्यङ्क्वादीनाञ्च ।५३।

न्यङ्क्वादीनां कुत्वं स्यात् । न्यङ्कुः(२) । मद्गुः । दूरेपाकः । फलेपाकः ।

## हो हन्तेर्ञ्णिन्नेषु ।५४।

ञितिणितिनकारे च परे हन्तेर्हस्य कुत्वम् । घातः । घातयति । घ्नन्ति हकारोनकारस्य विशेषणम् । ह इति किम् । प्रहारः ।

## अभ्यासाच्च ।५५।

अभ्यासात्परस्य हन्तेर्हस्य कुत्वम् । जिघांसति जङ्घन्यते । अभ्यासनिमित्ते प्रत्यये हन्तेरङ्गस्य योऽभ्यासस्तस्मादेवैतत्कुत्वम् । नेह हननीयितु मिच्छति जिहननीयिषति ।

---

(१) प्रतिपदोक्त परिभाषया आशिषा चरति आशिषिक इत्यत्र ।

(२) नावञ्चते रिति उप्रत्ययः । मिमस्जिभ्य उ रिति मस्जेरुप्रत्ययः। दूरे पच्यते स्वयमेव पचाद्यच् निपातनाद् वृद्धिः । तत्पुरुषेकृतीति सप्तम्या अलुक्।

## हेरचङि[१] । ५६ ।

अभ्यासात् परस्य हिनोतेर्हस्य कुत्वन्नतु चङि । जिघीषति । जेघीयते । प्रजिघाय । अचङीति किम् । प्राजीहयद् दूतम् ।

## सन् लिटोर्जेः । ५७ ।

अभ्यासात् परस्य जयतेर्जस्य कुत्वं सनि लिटि च । जिगीषति । जिगाय । सन् लिटो रिति किम् । जेजीयते । जिनातेः सम्प्रसारणे कृते यद्यपि जिर्वति तथापि लाक्षणिकत्वात्तस्य न भवति जिज्यतुः ।

## विभाषा चेः । ५८ ।

अभ्यासात् परस्य चिनोतेश्चस्य वा कुत्वं सनि लिटि च । चिकीषति । चिचीषति । चिकाय । चिचाय । सन् लिटो रित्येव । चेचीयते ।

## न क्वादेः । ५९ ।

कवर्गादेर्धातोश्चजोः कुत्वन्न । कूजः । खर्जः । कूज्यम् । खर्ज्यम् । गर्ज्यम् ।

## अजिव्रज्योश्च । ६० ।

अजिव्रज्योः कुत्वन्न । समाजः । परिव्राजः । परिव्राज्यम् । चकारोऽनुक्तसमुच्चयार्थस्तेन वाज इत्याद्यपि । अजेस्तु अजेर्व्यघञपोरिति वीभावस्य विधानाण्ण्यति नास्त्युदाहरणम् ।

## भुजन्युब्जौ पाण्युपतापयोः । ६१ ।

पाण्युपतापयोरभिधेययोर्भुज, न्युब्ज, इत्येतयोः कुत्वाभावो गुणाभावश्च निपात्यते । भुज्यतेऽनेन भुजः पाणिः । हलश्चेति घञ् । न्युब्जिताः शेरतेऽत्रेति न्युब्ज उपतापः । हलश्चेति घञ् । पाण्युपतापयोरिति किम् । भोगः । समुद्गः ।

---

(१) अचङीति ज्ञापकं—हेरर्थधिकस्यापि कुत्वमित्यस्य । तेन प्रजिघाययिषतीति सिद्धम् ।

## प्रयाजानुयाजौ यज्ञाङ्गे ।६२।

यज्ञाङ्गे-एतयोः कुत्वाभावो निपात्यते। पञ्चप्रयाजाः(१)। त्रयोऽनुयाजाः। यज्ञाङ्ग इति किम्। प्रयागः। अनुयागः।

## वञ्चेर्गतौ ।६३।

गत्यर्थस्य वञ्चेः कुत्वन्न। वञ्च्यं वञ्चन्ति वणिजः। गताविति किम्। वङ्क्यं काष्ठम्। कुटिल मित्यर्थः।

## ओक उचः के ।६४।

उचः के परे ओक इति (कुत्वं गुणश्च) निपात्यते। घञि तु स्वरे भेदः स्यात्। न्योकः शकुन्तः। न्योको वृक्षः। कर्त्तरि इगुपधलक्षणः क। अधिकरणादौ तु कारकान्तरे 'घञर्थे कविधानम्' इति कः(२)।

## ण्य आवश्यके ।६५।

आवश्यके ऽर्थे ण्ये चजोः कुत्वन्न। अवश्यपाच्यम्। अवश्य वाच्यम्। आवश्यक इति किम्। पाक्यम्। वाक्यम्। रेक्यम्।

## यजयाचरुचप्रवचर्चश्च ।६६।

यजादीनां कुत्वन्न, ण्ये। याज्यम्। याच्यम्। रोच्यम्। प्रवाच्यम्। अर्च्यम्। (ण्यति प्रतिषेधे त्यजेरुपसंख्यानम्) त्याज्यम्।

## वचोऽशब्दसंज्ञायाम् ।६७।

वचो ण्यति कुत्वन्नाशब्दसंज्ञायाम्। वाच्यमाह। अशब्द संज्ञायामिति किम्। अवघुषितं वाक्यम्।

## प्रयोज्यनियोज्यौ शक्यार्थे ।६८।

प्रनिपूर्वस्य युजेर्ण्यति कुत्वाभावो निपात्यते शक्यार्थे। प्रयोक्तुं

---

(१) उपलक्षण मेतत्। तेन एकादशोपयाजा इत्याद्यपि।
(२) दिवौकसः। जलौकसः। इत्येवमादावप्य सुनि प्रत्यये 'उणादयो बहुल' मिति कुत्वं द्रष्टव्यम्।

शक्यः प्रयोज्यः। नियोक्तुं शक्यो नियोज्यः। शक्यार्थ इति किम्। प्रयोग्यः।

## भोज्यं भक्ष्ये। ६९।

भुजेर्ण्यति कुत्वं भक्ष्ये(१)। भोज्य ओदनः। भोज्या यवागूः। भक्ष्य इति किम्। भोग्यः कम्बलः।

## घोर्लोपो लेटि वा। ७०।

घुसंज्ञकस्य लोपो वा(२) लेटि। दधद्रत्नानि दाशुषे। नच भवति। यदग्निरग्नये ददात्।

## ओतः श्यनि। ७१।

ओदन्तस्य लोपः श्यनि। शो, श्यति। षो, अवस्यति। दो, अवद्यति।

## क्सस्याचि। ७२।

क्सस्य लोपोऽजादौ प्रत्यये। अधुक्षाताम्। अधुक्षाथाम्। अधुक्षि। अचीति किम्। अधुक्षत। ककारवत उपादानं किम्। इह मा भूत्। उत्सौ। वत्सौ।

## लुग्वादुहदिहलिहगुहामात्मनेपदे दन्त्ये। ७३।

दुहादीनां क्सस्य लुग्वादन्त्ये(३) तङि। अदुग्ध। अधुक्षत। अदुग्धाः। अधुक्षथाः। अधुग्ध्वम्। अधुक्षध्वम्। अदुह्वहि। अधुक्षावहि। अदिग्ध। अधिक्षत। अलीढ। अलिक्षत। अगूढ। अघुक्षत। दुहादीनामिति किम्। व्यत्यरुक्षत। आत्मनेपदे इति किम्। अधुक्षत्। दन्त्य इति किम्। अधुक्षामहि।

---

१ भक्ष्यमत्राभ्यवहार्यमात्रम्।

२ आटारूपे सिद्धेऽपि "आगम शासनस्या नित्यत्व ज्ञापनायेदं वा ग्रहणम्।

३ लोप इत्यनुवर्तमानेऽपि लुगिति सर्वादेशार्थं, तच्च वक्ष्यर्थम्। अन्यत्रत्वन्त्यलोपेऽपि 'झलो झलि' इति सलोपे सिद्धमिष्टम्। अत्र दन्त्योष्ठ्योऽपि दन्त्यग्रहणेन गृह्यते। अन्यथा "तौ" इत्येव वदेत्।

## शमामष्टानां दीर्घः श्यनि । ७४ ।

अष्टानां शमादीनां दीर्घः श्यनि । शाम्यति । ताम्यति । दाम्यति । श्राम्यति । क्षाम्यति । क्लाम्यति । माद्यति । अष्टानामिति किम् । असति । श्यनीति किम् । भ्रमति । वा भ्राशेति श्यनो विकल्पः ।

## ष्ठिवुक्लमुचमां शिति । ७५ ।

ष्ठिवादीनां दीर्घः शिति । ष्ठीवति । क्लामति । ( दीर्घत्वमाङि्चम इति वक्तव्यम् ) आचामति । नेह । चमति । उच्चमति ।

## क्रमः परस्मैपदेषु । ७६ ।

क्रमोदीर्घः परस्मैपदे शिति । क्रामति । क्रामतु । परस्मैपदेष्विति किम् । आक्रमते आदित्यः ।

## इषुगमियमां छः । ७७ ।

इषुगमियमां[1] छः शिति । इच्छति । गच्छति । प्रयच्छति । इषेरुदितो ग्रहणम् । इह माभूत् । इष्यति । इष्णाति ।

## पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठ मनयच्छपश्यर्च्छधौशीयसीदाः । ७८ ।

पा घ्रा ध्मा स्था म्ना दाण् दृशि अर्ति सर्ति शद सद इत्येतेषां पिब जिघ्र धम तिष्ठ मन यच्छ पश्य ऋच्छ धौ शीप सीद इत्येते आदेशा भवन्ति शिति परतः । पिबति । पिबादेशोऽदन्तस्तेन लघूपधगुणो न । जिघ्रति । धमति । तिष्ठति । मनति । यच्छति । पश्यति । ऋच्छति । धावति । शीयते । सीदति । सर्ते र्वे गितायां गतावेव धावादेशोऽन्यत्र तु अनुसरतीत्याद्येव ।

## ज्ञाजनोर्जा । ७९ ।

ज्ञाजनोर्जा शिति । जानाति । जायते । जनेर्दैवादिकस्य ग्रहणम् ।

---

१ तौदादिकस्यैव ग्रहणमित्यन्यत्र निरूपितम् ।

## प्वादीनां ह्रस्वः ।८०।

प्वादीनां (क्र्यादिकानां २४ संख्याकानां) ह्रस्व शिति। पुनाति।

## मीनातेर्निगमे ।८१।

मीनातेर्ह्रस्वः शिति निगमविषये। प्रमिणन्तिः व्रतानि। हिनुमीनेति-णत्वम्। निगम इति किम्। प्रमीणाति।

## मिदेर्गुणः ।८२।

मिदवैङ्गस्येको गुणः शिति। मेद्यति। मेद्यतः। शितीत्येव। मिद्यते।

## जुसि च ।८३।

इगन्तस्याङ्गस्यगुणो जुसि। अजुहवुः। अबिभयुः।

## सार्वधातुकार्द्धधातुकयोः ।८४।

इगन्ताङ्गस्य गुणो भवति सार्वधातुकार्द्धधातुकयोः। नयति। भवति। तरति। नेता। स्तोता। कर्ता। सार्वधातुकार्द्धधातुकयोरिति किम्। अग्नित्वम्। अग्निकाम्यति।

## जाग्रोऽविचिण्णल्ङित्सु ।।८५।

जागर्तेरिकोगुणो नतुविचिण्णल्ङित्सु। जागरयति। जजागरतुः(१)। अविचिण्णल्ङित्स्विति किम्। जॄ स्तॄ जागृभ्यो विन। जागृविः। चिण्। अजागारि। णल्। जजागार। ङित्।

## पुगन्तलघूपधस्य च ।८६।

पुगन्तस्य लघूपधस्यचाङ्गस्येको गुणो(२) भवति सार्वधातुकार्द्धधातुकयोः। ह्रेपयति। भेदयति।

---

(१) वृद्धि विषये प्रतिषेधविषये चायं गुण आरभ्यते। कृते तस्मिन् यदि वृद्धिः स्यात् (अत उपधाया इत्यनेन) गुणोऽनर्थकः स्याच्चिण्णलोश्च प्रतिषेध इति। पर्युदासोऽत्र बोध्यस्तेन विचिण्णादिषु विधि प्रतिषेधयोरभावस्ततोऽन्यत्र विधानमात्रम्। अतः अजागरुः, अहं जजागरेत्यत्र लक्षणान्तरेण गुणो भवत्येव।

(२) सार्वधातुकादिकर्मिको विशेषणं नत्वङ्गस्य, तेन भिनत्ति इत्यादौ न गुणः।

## नाभ्यस्तस्याचि पिति सार्वधातुके । ८७ ।

अभ्यस्तस्येकोनगुणोऽजादौ पिति सार्वधातुके । नेनिजानि । अनेनिजमित्यादि । अभ्यस्तस्येति किम् । वेदानि । अचीति किम् । नेनेक्ति । सार्वधातुक इति किम् । निनेज । लघूपधस्येत्येव । अजुहवम् । ( अभ्यस्तानामुपधाह्रस्वत्वमचीतिवक्तव्यम् ) पस्पशाते । चाकशीति । वावशीतीति दर्शनात् ( बहुलं छन्दसीतिवक्तव्यम् ) लेटि जुजोषदितिदर्शनात् ।

## भूसुवोस्तिङि । ८८ ।

एतयोर्नगुणस्तिङि(१) सार्वधातुके । अभूत् । सुवै । तिङीति किम् । भवति । सार्वधातुक इत्येव । व्यतिभविषीष्ट ।

## उतोवृद्धिर्लुकि हलि । ८९ ।

लुग्विषये उकारान्तस्य वृद्धिर्हलादौ(२) पिति सार्वधातुके नत्वभ्यस्तस्य । यौति । यौषि । यौमि । लुकीति किम् । सुनोति । हलीति किम् । यवानि । पितीत्येव । युतः ।

## ऊर्णोतेर्विभाषा । ९० ।

ऊर्णोतेर्वावृद्धिर्हलादौ पिति सार्वधातुके । ऊर्णौति । ऊर्णोति । हलीत्येव । प्रोर्णवानि ।

## गुणोऽपृक्ते । ९१ ।

ऊर्णोते गुणोऽपृक्ते हलादौ पिति सार्वधातुके । और्णोत् । और्णोः । हलीति वर्त्तमाने यदपृक्तग्रहणं क्रियते तेन ज्ञायते, अत्रत्येषा परिभाषा 'यस्मिन्विधिस्तदादावल् ग्रहणे' इति ।

## तृणह इम् । ९२ ।

---

( १ ) बोभवीतीत्यत्र तु नायं निषेधः । 'बोभूतुतेतिक्ते' इतिसूत्रे गुणाभावस्य निपातनात् ।

( २ ) स्तुयादित्यादौतु । 'ङिच्च पिन्न, पिच्च ङिन्नेत्युक्तेरातिदेशिकेन ङित्त्वेन पित्त्वस्य बाधान्न वृद्धिः ।

तृणह इत्यस्येम् हलादौ पिति सार्वधातुके। तृणेढि। तृणेक्षि। अतृणेट्। हलीति किम्। तृणहानि। पितीत्येव। तृण्ढः। तृणह इति आगत श्नमूको गृह्यते श्नमिकृते इमागमो यथा स्यात्।

## ब्रुव ईट्। ९३।

ब्रुवः परस्य हलादेः पितः सार्वधातुकस्य ईट्। ब्रवीति। ब्रवीषि। ब्रवीमि। अब्रवीदित्यादि। हलीत्येव। ब्रवाणि। पितीत्येव। ब्रूतः।

## यङो वा। ९४।

यङन्तात्परस्य हलादेः पितः सार्वधातुकस्य ईड् वा। पापचीति। पापक्ति। जङ्गमीति। जङ्गन्ति।

## तुरुस्तुशम्यमः सार्वधातुके। ९५।

त्वादिभ्यः परस्य हलादेः सार्वधातुकस्य ईड् वा। उत्तवीति। उत्तौति। उपरवीति। उपरौति। उपस्तवीति। उपस्तौति। शाम्यध्वम्(१)। शमीध्वम्। अभ्यमति। अभ्यमीति।

## अस्तिसिचोऽपृक्ते। ९६।

अस्तेः, सिचश्च परस्यापृक्तस्य सार्वधातुकस्य ईट्। अकार्षीत्। आसीत्। अपृक्त इति किम्। अस्ति। अकार्षम्।

## बहुलं छन्दसि। ९७।

पूर्वोक्तं छन्दसि बहुलम्। आप एवेदं सलिलं सर्वमाः(२)। अहर्वासीत् न रात्रिः। गोभिरक्षाः। प्रत्यञ्चमत्साः।

## रुदश्च पञ्चभ्यः। ९८।

रुदादिभ्यः परस्यापृक्तस्य हलादेः सार्वधातुकस्येट्। अरोदीत्। अरो-

(१) शम्यमी 'बहुल छन्दसि' इति विकरणलुकि सति हलादि सार्वधातुकमनन्तरं भवति। सूत्रे पुनः सार्वधातुक इत्यपिदर्थम्।

(२) अस्तेः=आः। क्षरतेः=अक्षाः। त्सरतेः=अत्साः इति रूपम्।

दीः। अस्वपीत्। अस्वपीः। अश्वसीत्। अश्वसीः। प्राणीत्। प्राणीः। अजक्षीत्। अजक्षीः। पञ्चभ्य इति किम्। अजागर्भवान्। अपृक्त स्येत्येव रोदिति।

## अड् गार्ग्यगालवयोः। ९९।

रुदादिभ्यः पञ्चभ्यः परस्य अपृक्तस्यहलादेः सार्वधातुकस्य अड्वा। अरोदत्। अरोदः। इत्यादि।

## अदः सर्वेषाम्। १००।

अदः परस्यापृक्तसार्वधातुकस्याऽट् सर्वेषामाचार्य्याणां मतेन। आदत्। आदः। अपृक्तस्येत्येव। अत्ति।

## अतो दीर्घो यञि। १०१।

अदन्तस्याङ्गस्य दीर्घो यञादौ सार्वधातुके। भवामि। अत इति किम्। चिनुवः। यञीति किम्। पचतः। सार्वधातुक इत्येव। अङ्गना। केशवः।

## सुपि च। १०२।

अदन्तस्याङ्गस्य दीर्घो यञादौ सुपि। घटाय। घटाभ्याम्। अत इत्येव अग्निभ्याम्। यञीत्येव। वृक्षस्य।

## बहुवचने झल्येत्। १०३।

अदन्ताङ्गस्य एद् झलादौ बहुवचने सुपि। वृक्षेभ्यः। बहुवचन इति किम्। वृक्षाभ्याम्। झलीति किम्। वृक्षाणाम्। सुपीत्येव। यजध्वम्।

## ओसि च। १०४।

अदन्ताङ्गस्य एदोसिपरे। वृक्षयोः।

## आङि चापः। १०५।

आबन्तस्यैदाङि ओसि च। मालया। मालयोः। आप इति पितो ग्रहणं किम्। कीलालपा ब्राह्मणेन। ङ्याब्ग्रहणेऽदीर्घग्रहण मिति वचनादिह न। अतिखट्वेन ब्राह्मणकुलेन।

## सम्बुद्धौ च । १०६ ।

आबन्तस्याङ्गस्य एत्सम्बुद्धौ । हे खट्वे । हे बहुराजे ।

## अम्बार्थनद्योर्ह्रस्वः । १०७ ।

अम्बार्थानां नदीसंज्ञकानाञ्च ह्रस्वः संबुद्धौ । हे अम्ब । हे कुमारि । (डलकवतीनां प्रतिषेधः) हे अम्बाडे । हे अम्बाले । हे अम्बिके । (छन्दसि वा) हे अम्बाड । हे अम्बाडे । (तलह्रस्वत्वं वा ङिसम्बुद्ध्योः) देवते देवतायाम्वा भक्तिः । हे देवत । हे देवते । (मातॄणांमातच्(१) पुत्रार्थमर्हते) देवकीमात ।

## ह्रस्वस्य गुणः । १०८ ।

ह्रस्वान्तस्याङ्गस्य गुणः सम्बुद्धौ । हे अग्ने । हे वायो । हे नदि इत्येवमादीनां ह्रस्वविधानसामर्थ्याद् गुणाने । यदि गुण इष्टः स्यात् । अम्बार्थानां ह्रस्व इत्युक्ते नदीह्रस्वयोर्गुण इत्येवब्रूयात् ।

## जसि च । १०६ ।

ह्रस्वान्तस्याङ्गस्य गुणो जसि । अग्नयः । वायवः । (जसादिषु छन्दसि वा वचनं प्राङ्णौ चङ्युपधायाः) तत्प्रयोजनम् । अम्बेदर्विशतक्रत्वः पश्वे भृत्यः किकिदीव्या । अम्ब । दर्वी । शतक्रतवः । पशवे भृत्यः । किकिदीविना–इति पक्षे ।

## ऋतो ङि सर्वनामस्थानयोः । ११० ।

ऋदन्ताङ्गस्य गुणो ङि सर्वनामस्थानयोः । मातरि । मातरौ । मातरः मातरम् । मातरौ ।

## घेर्ङिति । १११ ।

(१) मातॄणां मातजादेशः सम्बुद्धौ, अर्हन्तं पुत्रमभिधातुमित्यर्थः । नद्यृतश्चेति समासान्तापवादः ।

घि संज्ञकस्य गुणो ङिति सुपि। वायवे। वायोः। घेरिति किम्। सख्ये। ङितीति किम्। अग्निभ्याम्। सुपीत्येव। पट्वी।

## आण्नद्याः। ११२।

नद्यन्तात्परस्य ङित आडागमः। कुमार्य्याः। ब्रह्मबन्ध्वै।

## याडापः। ११३।

आबन्तात्परस्य ङितोयाट्। विद्यायाः। खट्वायै।

## सर्वनाम्नःस्याड्ढ्स्वश्च। ११४।

आबन्तात्परस्य सर्वनाम्नो ङितः स्याडापश्च ह्रस्वः। सर्वस्यै। यस्यै। तस्यै। विश्वस्यै। आप इत्येव। भवति। भवते।

## विभाषा द्वितीयातृतीयाभ्याम्। ११५।

आभ्यां परस्य ङितः स्याडापश्च ह्रस्वो वा। द्वितीयस्यै। द्वितीयायै। तृतीयस्यै। तृतीयायै।

## ङेराम्नद्याम्नीभ्यः। ११६।

नद्यन्तादाबन्तान्नीशब्दाच्च परस्य ङेराम्। कुमार्य्याम्। ब्रह्मबन्ध्वाम्। खट्वायाम्। ग्रामण्याम्।

## इदुद्भ्याम्। ११७।

इदुद्भ्यां नदीसंज्ञकाभ्यांपरस्य ङेराम्। मत्याम्। धेन्वाम्।

## औत्। ११८।

इदुद्भ्यां परस्य ङेरौत्। इकारान्त मुदाहरणम्। सख्यौ। पत्यौ। यन्न नदीसंज्ञं नापि घिसंज्ञमिकारान्तं तदिहोदाहरणम्।

## अच्च घेः। ११९।

घिसंज्ञकाभ्या मिदुद्भ्यां परस्य ङेरौद्घेश्चात्। अग्नौ। वायौ। धेनौ। मतौ।

## आङो नाऽस्त्रियाम् । १२० ।

घिसंज्ञकात्परस्याङो ना नतु स्त्रियाम् । अग्निना । वायुना । अस्त्रियामिति किम् । कृत्या । धेन्वा ।

## इति सप्तमाध्यायस्य तृतीयः पादः ।

# अथ सप्तमाध्यायस्य चतुर्थपादारम्भः

## णौ चङ्युपधाया ह्रस्वः । १ ।

चङ् परे णौ यदङ्गन्तस्योपधाया ह्रस्वः । अचूचुरच्चन्द्रमसोभिरामताम् । अपीपचत् । अत्र द्विर्वचनोपधाह्रस्वत्वं, तत्र कृते द्विर्वचनम् । इह तु, मा भवानटिटदिति नित्यत्वाद् द्वितीयस्य द्विर्वचनं प्राप्नोति । तथा सति ह्रस्वभाविनोऽङ्गस्याकारस्योपधात्वं विहित मिति ह्रस्वो न स्यात् । नैष दोषः । ओणे ऋदित्करणं ज्ञापकं, नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन बाध्यत इति । णाविति किम् । चङ्युपधाया ह्रस्व इत्युच्यमानेऽलीलवदित्यत्र वचनसामर्थ्यादन्तरङ्गामपि वृद्धिमादेशं च बाधित्वा ह्रस्वः स्यात् । अपीपचदित्यादौ तु न स्यात् । चङीति किम् । कारयति । उपधाया इति किम् । अचकाङ्क्षत् । ( उपधाह्रस्वत्वे णेर्णिच्युपसंख्यानम् ) वादितवन्तं प्रयोजितवान्—अवीवदद्वीणां परिवादकेन । योऽसौ णौ णिलोप स्तस्य स्थानिवद्भावेनाग्लोपित्वादङ्गस्य ह्रस्वो न प्राप्नोति ।

## नाग्लोपिशास्वृदिताम् । २ ।

अग्लोपिनामङ्गानां शासेर्ऋदिताञ्च चङ् परे णौ उपधाया ह्रस्वो न । मालामाख्यत्—अममालत् । अत्यरराजत् । अशशासत् । अबबाधत् । अगेव यत्र केवलो लुप्यते तत्र स्थानिवद्भावादपि सिद्धम् । हलचोरादेशे तु न सिद्ध्यतीति तदर्थमेतद्वचनम् ।

## भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् । ३ ।

भ्राजादीनामुपधाया ह्रस्वो वा चङ् परे णौ। अबभ्राजत्। अबिभ्रजत्। अबभासत्। अबीभसत्। अबभाषत्। अबीभषत्। अदिदीपत्। अदीदिपत्। अजिजीवत्। अजीजिवत्। अमिमीलत्। अमीमिलत्। अपिपीडत्। अपीपिडत्। (काण्यादीनांवेतिवक्तव्यम्[१]) अचकाणत्। अचीकणत्।

## लोपः पिबतेरीच्चाभ्यासस्य ।४।

पिबतेरुपधाया लोपोऽभ्यासस्येकारश्च चङ्परेणौ। अपीप्यत्। लोपे सति स्थानिवद्भावाद्द्वित्वम्। 'शाच्छा से' ति युक्।

## तिष्ठतेरित् ।५।

तिष्ठतेरुपधाया इत्स्याच चङ् परे णौ। अतिष्ठिपत्।

## जिघ्रतेर्वा ।६।

जिघ्रतेरुपधाया इद्वा चङ् परे णौ। अजिघ्रिपत्।

## उर्ऋत् ।७।

उपधाया ऋदर्णस्य ऋद्वा चङ् परे णौ। इररारामपवादः। अचीकृतत्। अचिकीर्तत्। अवीवृतत्। अववर्तत्। अमीमृजत्। अममार्जत्। तपरकरणं दीर्घेऽपि स्थानिनि ह्रस्व एव यथा स्यात्। अचीकृतदिति। न चायं भाव्यमानः, किन्तु आदेशान्तरनिवृत्त्यर्थं स्वरूपमेवैतदभ्यनुज्ञायते।

## नित्यं छन्दसि ।८।

उपधाया ऋवर्णस्य ऋन्नित्यं छन्दसि। अवीवृधत् पुरोडाशेन।

## दयतेर्दिगि लिटि ।९।

दयतेर्दिगिस्याल्लिटि। द्वित्वापवादः। दिग्ये। दिग्याते। दिग्यिरे। दयते रिति दीङोग्रहणं, न तु दय दान इत्यस्य। तस्य हि लिटि आम् विहितः।

(१) कण, रण, भण, श्रण,लुप, हेठाः, ण्यन्ताः; काण्यादयः षड् भाष्योक्ताः।

## ऋतश्चसंयोगादेर्गुणः । १० ।

संयोगादेर्ऋदन्ताङ्गस्य गुणो लिटि । सस्वरतुः । सस्वरुः । ऋत इति किम् । चिक्षियतुः । संयोगादेः किम् । चक्रतुः । लिटीत्येव । स्मृतः । ( संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थम् ) सञ्चस्करतुः(१) । सञ्चस्करुः ।

## ऋच्छत्यृताम् । ११ ।

ऋच्छतेर्ऋधातोर्ऋकारान्तानाञ्च गुणो लिटि । आनर्च्छ । आनर्च्छतुः । आर । आरतुः । जगरतुः । जगरुः ।

## शृदृप्रां ह्रस्वो वा । १२ ।

एषां ह्रस्वो वा लिटि । विशश्रतुः । विशशरतुः । शश्रुः । शशरुः । ददरुः । दद्रुः । पप्रतुः । पपरतुः ।

## केऽणः । १३ ।

के परेऽणो ह्रस्वः । ज्ञका । कुमारिका । अण इति किम् । गोका, नौका । एकेत्यादौ 'उणादयो बहुलमि' ति बहुलवचनान्न । ' 'न कपी' ति प्रतिषेध सामर्थ्यात् कनोऽपि सानुबन्धकस्येह ग्रहणम् ।

## न कपि । १४ ।

कप्यणो न ह्रस्वः । बहुकुमारीकः । कपिकृते पुनः समासस्ते न गोस्त्रि-योरिति न । बहुबन्धूकः ।

## आपोन्यतरस्याम् । १५ ।

कपि आवन्तस्य वा ह्रस्वः । बहुखट्वका । बहुखट्वाका ।

## ऋदृशोऽङि गुणः । १६ ।

---

(१) पूर्वं धातुः साधनेन पश्चादुपसर्गेणेति मते, लिटिद्वित्वे, उपसर्गयोगे पुनः सुट् एवं च सुटो बहिरङ्गत्वेनासिद्धत्वाद् "ऋतश्चसंयोगादे" रितीडागमो न भवति, सं-कृषीष्टेत्यादौ ।

ऋवर्णान्तस्य दृशेश्चाङि गुणः । अहन्तेभ्योऽकरन्नमः । जरा । अदर्शत् । अदर्शताम् ।

## अस्यतेस्थुक् । १७ ।

अस्यतेस्थुगङि । आस्थत् ।

## श्वयतेरः । १८ ।

श्वयतेरकारादेशोऽङि । अश्वत् ।

## पतः पुम् । १६ ।

पतेःपुमङि । अपप्तत् । अपप्तताम् । लृदित्वादङ् ।

## वच उम् । २० ।

वच उमङि । अवोचत् ।

## शीङः सार्वधातुके गुणः । २१ ।

शीङो गुणः सार्वधातुके । शेते । शयाते । शेरते । सार्वधातुक इति किम् । शिश्ये ।

## अयङ् यि क्ङिति । २२ ।

शीङोऽयङ् यादौ क्ङिति । शय्यते । शाशय्यते । शय्या । प्रशय्य । यीति किम् । शिश्ये । क्ङितीति किम् । शेयम् ।

## उपसर्गाद्ध्रस्व ऊहतेः । २३ ।

उपसर्गादूहतेरणोह्रस्वो यादौ क्ङिति । समुह्यते । समुह्य गतः । उपसर्गादिति किम् । ऊह्यते । ऊहते रिति किम् । समोह्यते । यीत्येव । समूहितम् । क्ङितीति किम् । अभ्यूह्योऽयमर्थः । अण इत्येव । आ ऊह्यते ओह्यते ।

## एतेर्लिङि । २४ ।

उपसर्गात् परस्य एतेरणोह्रस्वोयादौ लिङि । उदियात्(१) । उपसर्गा-

(१) आशिषि लिङि 'अकृत्सार्वधातुकयो' रिति दीर्घे कृते ह्रस्वोऽनेन भवति ।

दित्येव। ईयात्। अण इत्येव। आ ईयात् एयात्।

## अकृत्सार्वधातुकयोर्दीर्घः। २५।

अजन्ताङ्गस्य दीर्घो यादौ क्ङिति नतु कृत्सार्वधातुकयोः। भृशायते। सुखायते। चीयते। चेचीयते। चीयात्। अकृदिति किम्। प्रकृत्य। परत्वाद्दीर्घत्वेन तुको बाधः स्यात्। असार्वधातुक इति किम्। चिनुयात्। क्ङितीत्येव। उरुया।

## च्वौ च। २६।

अजन्ताङ्गस्य दीर्घश्च्वौ। शुक्लीकरोति। शुचीभवति। शुचीस्यात्।

## रीङ् ऋतः। २७।

ऋकारान्तस्य रीङ् कृत्सार्वधातुकभिन्ने यादौ च्वौ च। पित्रीकरोति। पित्रीयते। पित्र्यम्। ऋत इति तपरकरणं किम्। चेक्रीयते। क्ङितीत्येतन्निवृत्तं तेनेहापि भवति। पितुरागतं पित्र्यम्।

## रिङ् शयग्लिङ्क्षु। २८।

ऋकारान्तस्य रिङ्(१) शे यकि यादावसार्वधातुके लिङि च। आद्रियते। म्रियते। क्रियते। ह्रियते। क्रियात्। ह्रियात्। असार्वधातुक इत्येव। बिभ्रियात्। यीत्येव। कृषीष्ट।

## गुणोऽर्त्तिसंयोगाद्योः। २९।

अर्तेः संयोगादेर्ऋदन्तस्याङ्गस्य च गुणो यकि यादावसार्वधातुके। अर्य्यते। अर्य्यात्। स्मर्यते। स्मर्य्यात्। इह संस्क्रियते, संस्क्रियात् इति सुटो बहिरङ्गलक्षणस्यासिद्धत्वादभक्तत्वाद्वा संयोगादित्वमङ्गस्य नास्तीति गुणो न प्रवर्त्तते। यीत्येव स्मृषीष्ट। असार्वधातुक इत्येव। इयृयात्।

## यङि च।

(१) रीङिति प्रकृते पुनर्वचनं दीर्घनिवृत्त्यर्थम्।

अर्त्तेः संयोगादे ऋदन्तस्य चाङ्गस्य गुणो यङि । अराय्र्यते । सास्मर्यते१ । ( यङ् प्रकरणे हन्तेर्हिंसार्थस्य घ्नीभावो वक्तव्यः ) जेघ्नीयते । हिंसायामिति किम् । जङ्घन्यते ।

## ई घ्राध्मोः । ३१ ।

घ्राध्मोरीः स्याद्यङि । जेघ्रीयते । देध्मीयते ।

## अस्य च्वौ । ३२ ।

ई इति वर्त्तते । अस्य ईः च्वौ । शुक्लीकरोति, भवति, स्याद्वा(२) ।

## क्यचि च । ३३ ।

अस्य ईः क्यचि । घटमिच्छति । घटीयति । मालीयति ।

## अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु । ३४ ।

अशनायादिषु ईत्वाभावादि निपात्यते बुभुक्षादिषु । अशनायति । बुभुक्षा चेत् । अशनीयत्यन्यत्र । उदकमिच्छति, उदन्यति । पिपासा चेत् । उदकीयत्यन्यत्र । धनायति । गर्द्धश्चेत् । धनीयत्यन्यत्र ।

## नच्छन्दस्यपुत्रस्य । ३५ ।

पुत्रभिन्नस्यावर्णस्य न ईत्वदीर्घौ छन्दसि । मित्रमिच्छति मित्रयुः । ( अपुत्रादीनामिति वक्तव्यम् ) जनीयन्तोन्वग्रवः ।

## दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति । ३६ ।

एतानि छन्दसि निपात्यन्ते । दुष्टमिच्छति दुरस्युः । दुष्टीयत्यन्यत्र । द्रविणमिच्छति द्रविणस्युः । द्रविणीयत्यन्यत्र । वृषमिच्छति

---

( १ ) ( सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्योयङ्वाच्यः ) इति यङ् । यकारपररेफस्य न द्वित्वनिषेधः । अराय्र्यते इति भाष्योदाहरणात् ।

( २ ) दोषाभूतमहः, दिवाभूता रात्रि रित्यत्र तु नायं प्रवर्त्तते । "अव्ययस्य च्वावीत्वंने" ति निषेधात् ।

वृषण्यति । वृषीयत्यन्यत्र । रिष्टमिच्छति रिषण्यति । रिष्टीयति अन्यत्र ।

## अश्वाघस्यात् ।३७।

अश्वाघयोरात्क्यचि छन्दसि । अश्वायन्तो मघवन् । मात्वावृका अघाय वोविदन् ।

## देवसुम्नयोर्यजुषि काठके ।३८।

देवसुम्नयोराच्छन्दसि क्यचि यजुषि काठके । देवायन्तो यजमानाय । सुम्नायन्तो हवामहे ।

## कव्यध्वरपृतनस्यर्चिलोपः ।३९।

ऋग्विषये कव्यादीनां लोपः क्यचि । कव्यन्तः सुमनसः । अध्वर्यन्तः । पृतन्यन्तः ।

## द्यतिस्यतिमास्थामित्ति किति ।४०।

द्यत्यादीनामित् तादौ किति । निर्दितः । अवसितः । मितः । स्थितः ।

## शाच्छोरन्यतरस्याम् ।४१।

शाच्छोरिद्वा तादौ किति । निशितवान् । निशातवान् । अवच्छितम् । अवच्छातम् । ( इयते रित्वं व्रते नित्यमिति वक्तव्यम् ) संशितो ब्राह्मणः । संशितव्रत इत्यर्थः । व्रतविषयकयत्नवानित्यर्थः । व्यवस्थितविभाषात्वात् सिद्धम् ।

देवत्रातो गलो ग्राह इति योगे च सद्विधिः ।
मिथस्तेन विभाष्यन्ते गवाक्षः संशितव्रतः ॥

## दधातेर्हिः ।४२।

दधातेर्हिस्तादौ किति । हितः । हित्वा ।

## जहातेश्च क्त्वि ।४३।

जहातेर्हिः क्त्वि । हित्वा राज्यं वनङ्गतः ।

## विभाषा छन्दसि ।४४।

जहाते र्हिर्वा छन्दसि क्त्वि । हित्वा हात्वा(१) वा शरीरङ्गतः।

## सुधित, वसुधित, नेमधित, धिश्व, धिषीय च ।४५।

सुधितादीनि छन्दसि निपात्यन्ते। गर्भं माता सुधितम् । सुहितमिति प्राप्ते । वसुधितमग्नौ जुहोति । वसुहितमितिप्राप्ते । इत्यादि।

## दोदद्घोः ।४६।

घुसंज्ञकस्य दोदत्स्यात्तादौ किति । दत्तः । दत्तवान् । घोः किम्। दातं बर्हिः । 'दाप् लवने' इत्यस्यैतद्रूपम् ।

## अच उपसर्गात्तः ।४७।

अजन्तादुपसर्गात्परस्य घुसंज्ञकस्य तः स्यात्तादौ किति । प्रत्तम्। नीत्तम् । परीत्तम् ।

## अपो भि ।४८।

अपस्तो भादौ प्रत्यये । अद्भिः । अद्भ्यः । (मासश्छन्दस्युपसंख्यानम्) माद्भिः । माद्भ्यः । (स्वतवसोर्मास उषसश्च छन्दसि त इष्यते) स्ववद्भिः। स्वतवद्भिः । माद्भिरिष्ट्वा इन्द्रो वृत्रहा । समुषद्भिरजायथाः ।

## सः स्यार्द्धधातुके ।४९।

सस्य तः सादावार्द्धधातुके । वत्स्यति । विवत्सति । जिघत्सति । स इति किम् । वक्ष्यति । सीति किम् । घासः । आर्द्धधातुक इति किम्। आस्से । वस्से ।

## तासस्त्योर्लोपः ।५०।

तासस्त्योः सस्य लोपः सादावार्द्धधातुके । भवितासि । असि । अस्ते-

(१) ईत्वाभावश्छान्दसः ।

रकारसकारयो लुप्तयोः से इति प्रत्ययमात्रमेतत्पदम्। तेन सात्पदाद्योरिति षत्वं न भवति।

## रि च ।५१।

तासस्त्योर्लोपो रादौ प्रत्यये। भवितारौ। कर्त्तारौ। अध्येतारः।

## ह एति ।५२।

तासस्त्योः सस्य हः स्यादेतिपरे। कर्त्ताहे। हर्त्ताहे। व्यतिहे।

## यीवर्णयोर्दीधीवेव्योः ।५३।

दीधीवेव्योर्लोपो यादाविवर्णादौ च। आदीध्यगतः। आवेव्यगतः। आदीधिता। आवेविता।

(१)

## सनि मीमाघुरभलभशकपतपदामच इस्।५४।

एषामच इस् सादौ सनि। मित्सति। प्रमित्सति। मित्सते। दित्सति आरिप्सते। आलिप्सते। शिक्षति। पित्सति। पित्सते। सनीति किम्। दास्यति। सीत्येव। पिपतिषति। तनिपतीतिपतेरिडागमविकल्पः। (इस्त्वं सनि राधो हिंसायामिति वक्तव्यम्) प्रतिरित्सति। अन्यत्र-आरिरात्सति।

## आप्ज्ञप्य्धामीत् ।५५।

एषामच ईत्सादौ सनि। ईप्सति। ज्ञीप्सति। ईर्त्सति। (ज्ञपेरित्वमनन्तस्येति वक्तव्यम्) सनीति किम्। प्राप्स्यति। सीति किम्। जिज्ञपयिषति। अर्दिधिषति। सनीवन्तेर्द्धेति ज्ञपेऋधेश्चेटो विकल्पः।

## दम्भ इच्च ।५६।

दम्भेरच इच्चादीत्सादौ सनि। धिप्सति। धीप्सति। सीत्येव।

---

(१) लक्षण-प्रतिपदोक्त परिभाषाया अनित्यत्वात् डुमिञ्, मीञ्, अनयोर्द्वयोर्ग्रहणम्। गामादाग्रहणेष्वविशेष इति माङ्मेङोः दोदाणोः।

दिदम्भिषति ।

## मुचोऽकर्मकस्य गुणो वा । ५७ ।

अकर्मकस्य मुचो वा गुणः सादौ सनि । मोक्षते वत्सः स्वयमेव । मुमुक्षते वा । अकर्मकस्येति किम् । मुमुक्षति वत्सं देवदत्तः । कर्म्मकर्तरि मुचिरकर्मको भवति । कर्मविशेषस्य वा विवक्षायाम् ।

## अत्र लोपोऽभ्यासस्य । ५८ ।

सनिमीमेत्यादावभ्यासस्यलोपः सादौ सनि । तथैवोदाहृतम् ।

## ह्रस्वः । ।

अभ्यासस्याचो ह्रस्वः । यान्तं वने रात्रिचरी डुढौके । तुत्रौके । (अभ्यासस्यानचि) । अभ्यासस्य यदुच्यते अनचि तद्भवतीति वक्तव्यम् । चराचरः । चलाचलः । पतापतः । अत्र हलादिः शेषो न भवति ।

## हलादिः शेषः । ६० ।

अभ्यासस्यादिर्हल् शिष्यतेऽन्यो हललुप्यते । बभूव । पपाच । आट ।

## शर्पूर्वाः खयः । ६१ ।

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्तेऽन्ये हलो लुप्यन्ते । पस्पर्शे । पिस्पन्दिषते । शर्पूर्वा इति किम् । पपाच । खय इति किम् । सस्नौ । ( शर्पूर्वशेषे खर्पूर्वग्रहणं कर्त्तव्यम् ) उचिच्छिषति(१) ।

## कुहोश्चुः । ६२ ।

अभ्यासस्य कुहोश्चुः स्यात् । चकार । चखान । जघान ।

## न कवतेर्यङि । ६३ ।

कवतेरभ्यासस्य चुत्वन्न यङि । कोकूयते ।

---

( १ ) उच्छेरन्तरङ्गत्वात्तुकि कृते द्विर्वचनं, तत्र हलादिः शेषे सत्यभ्यासे तकारस्य श्रवणं प्रसज्येतेति ।

## कृषेश्छन्दसि । ६४ ।

कृषेरभ्यासस्य चुत्वन्न यङि छन्दसि । करीकृष्यते । लांकेतु च रीकृष्यते ।

## दाधर्त्तिदर्द्धर्त्तिदर्द्धर्षिबोभूतुतेतिक्तेऽलर्ष्याऽपनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च । ६५ ।

दाधर्त्यादीन्यष्टादश छन्दसि निपात्यन्ते । अत्र यल्लक्षणेनानुपपन्नं तत्सर्वं निपातनात् सिद्धम् ।

## उरत् । ६६ ।

अभ्यासस्य ऋतोऽत् स्यात् । ववृते । नर्नर्त्ति । नरिनर्त्ति । नरीनर्त्ति ।

## द्युतिस्वाप्योः सम्प्रसारणम् । ६७ ।

द्युतिस्वाप्योरभ्यासस्य सम्प्रसारणम् । दिद्युते । सुष्वापयिषति ।

## व्यथो लिटि । ६८ ।

व्यथोऽभ्यासस्य सम्प्रसारणं लिटि । विव्यथे । लिटीति किम् । वाव्यथ्यते ।

## दीर्घ इणः किति । ६९ ।

इणोऽङ्गस्याभ्यासस्य दीर्घः किति लिटि । ईयतुः । ईयुः । कितीति किम् । इयाय ।

## अत आदेः । ७० ।

अभ्यासस्यादेरतो दीर्घो लिटि । पररूपापवादः । आट । आटतुः ।

---

(१) विकरणनिर्देशः कौतेः कुर्वतेश्च निवृत्त्यर्थः ।

## तस्मान्नुड् द्विहलः ।७१।

दीर्घीभूतादतः परस्य द्विहलो धातोर्नुट् । आनर्च । आनर्चतुः । आनर्छ । आनर्छतुः । ऋकारस्यैकदेशो रेफो हल् ग्रहणेन गृह्यते । तेनात्रापि । आनृधतुः । आनृधुः । द्विहल इति किम् । आट ।

## अश्नोतेश्च ।७२।

दीर्घीभूतादतः परस्य अश्नोतेर्नुट् । खं प्रावृषेण्यैरिवचानशेऽद्रैः । अश्नोते रिति विकरण निर्देशोऽश्नाते र्माभूदिति । आश । आशतुः ।

## भवतेरः ।७३।

भवतेरभ्यासस्य अः स्याल्लिटि । बभूव । बभूवे । लिटीति किम् । बुभूषति ।

## ससूवेति निगमे ।७४।

निगमे ससूवेति निपात्यते । सूते र्लिटि परस्मैपदं वुगागमोऽभ्यासस्य चात्वं निपात्यते । सुषुवे इति भाषायाम् ।

## निजां त्रयाणां गुणः श्लौ ।७५।

त्रयाणां निजादीनामभ्यासस्य गुणः श्लौ । नेनेक्ति । वेवेक्ति । वेवेष्टि । श्लाविति किम् । निनेज ।

## भृञामित् ।७६।

त्रयाणां भृञादीनामभ्यासस्येत् श्लौ । बिभर्ति । मिमीते । जिहीते । त्रयाणामित्येव । जहाति । श्लावित्येव । बभार ।

## अर्तिपिपर्त्योश्च ।७७।

अर्तिपिपर्त्योरभ्यासस्येत् श्लौ । इयर्त्ति धूमम् । पिपर्त्ति सोमम् ।

## बहुलं छन्दसि ।७८।

अभ्यासस्येद्बहुलं छन्दसि श्लौ । पूर्णां विवष्टि वशेरेतद्रूपम् । जनिमा विवक्ति । क्वचिन्न । ददातीत्येवं ब्रूयात् ।

## सन्यतः ।७९।

सनिपरेऽभ्यासस्यात इत् । पिपासति । पिपक्षति । तिष्ठासति । सनीति किम् । पपाच । अत इति किम् । लुलूषति । तपरकरणं किम् । पापच्यतेः सन् । पापचिषते ।

## ओः पुयण्ज्यपरे ।८०।

सनि परे यदङ्गं तदवयवाभ्यासोकारस्येत्वं स्यात् पवर्गयण् जकारेष्ववर्णे परतः । पवर्गे परे । पिपविषति । बिभावयिषति । यण् परे । यियविषति । रिरावयिषति । लिलावयिषति । जपरे । जु इति सौत्रो धातुः । जिजावयिषति । एतदेव पुयण्ज्यपर इति वचनं ज्ञापकमद्विर्वचननिमित्तेऽपि णौ स्थानिवद् भवतीति । ओरिति किम् । पापच्यतेः । पापचिषति । अपरे किम् । बुभूषति । पुयण्जीति किम् । ऊर्णुनविषति ।

## स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ।८१।

स्रवत्यादीनामभ्यासस्येद्वापूर्वविषये । सिस्रावयिषति । सुस्रावयिषति । शुश्रावयिषति । शिश्रावयिषति । द्रवति । दिद्रावयिषति । दुद्रावयिषति । प्रवति । पिप्रावयिषति । पुप्रावयिषति । प्लवति । पिप्लावयिषति पुप्लावयिषति । च्यवति । चुच्यावयिषति । चिच्यावयिषति । वचनसामर्थ्यादेकेन यणा व्यवधान माश्रीयते । अपर इत्येव । सुस्रूषति ।

## गुणो यङ् लुकोः ।८२।

इगन्तस्याभ्यासस्य गुणो यङि यङ् लुकि च । चेचीयते । पोपूयते । बोभवीति ।

## दीर्घोऽकितः ।८३।

अकितोऽभ्यासस्य[1] दीर्घो यङि यङ् लुकि च । पापच्यते । वावश्यते ।

---

(१) अकित इत्यस्य प्रत्युदाहरणे "यंयम्यते" इत्यादावपवादत्वान्नुकिकृतेऽभ्यासस्यानज-

वावच्यते । पापचीति । यायजीति । अकित इति किम् । यंयम्यते ।

## नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ।८४।

वञ्च्वादीनामभ्यासस्यनीग् यङि यङ् लुकि च । वनीवच्यते । वनीवञ्चीति । सनीस्रस्यते । सनीस्रंसीति । दनीध्वस्यते । दनीध्वंसीति । बनीभ्रस्यते । बनीभ्रंसीति । चनीकस्यते । चनीकसीति । पनीपत्यते । पनीपतीति । पनीपद्यते । पनीपदीति । चनीस्कद्यते । चनीस्कन्दीति ।

## नुगतोऽनुनासिकान्तस्य ।८५।

अनुनासिकान्तस्याभ्यासस्यातो नुग् यङि यङ् लुकि च । तन्तन्यते । तन्तनीति । जङ्गम्यते । जाङ्गमीति । ( अनुस्वारागमो वक्तव्यः ) ( पदान्तवच्च ) रंरम्यते । यंयम्यते । यँयम्यते । अत इति किम् । तेतिम्यते । अनुनासिकान्तस्येति किम् । पापच्यते । तपरकरणं भूतपूर्वस्यापि दीर्घस्य निवृत्त्यर्थम् । बाभाम्यते ।

## जपजभदहदशभञ्जपशां च ।८६।

जपादीनामभ्यासस्यनुग् यङि यङ् लुकि च । जञ्जप्यते । जञ्जपीति । जञ्जभ्यते । जञ्जभीति । दन्दह्यते । दन्दहीति । दन्दश्यते । दन्दशीति । बम्भज्यते । बम्भजीति । पम्पश्यते । पम्पशीति ।

## चरफलोश्च ।८७।

चरफलोरभ्यासस्य नुग् यङि यङ् लुकि च । चञ्चूर्यते । चञ्चुरीति । पम्फुल्यते । पम्फुलीति ।

## उत्परस्यातः ।८८।

चरफलोरभ्यासात्परस्यात उत् यङि यङ् लुकि च । चञ्चूर्यते । चञ्चुरीति । पम्फुल्यते । पम्फुलीति । परस्येति किम् । अभ्यासस्य माभूत् । अत इति किम् । अलोऽन्त्यस्य माभूत् । उदिति तपरकरणं चंचूर्ति, पम्फु-

न्तत्वादेव दीर्घत्वाभावे सिद्धेऽकित इतिज्ञापयति–'अभ्यासविकारेष्वपवादा नोत्सर्गान् बाधन्ते' इति । तेन डौढौक्यते इत्यादि सिध्यति ।

लीति, अत्र लघूपधगुणनिवृत्त्यर्थम्।

## ति च। ८९।

चरफलोरतउत्वादौ प्रत्यये। चरणं चूर्तिः। प्रफुल्तिः। प्रफुल्ताः। यङ्लुकोरभ्यासस्य चेति इह न सम्बध्यतेऽनुवर्त्तमानमपि।

## रीगृदुपधस्यच। ९०।

ऋदुपधस्याङ्गस्य योभ्यासस्तस्यरीक् यङि यङ्लुकि च। मरीमृज्यते। वरीवृत्यते। वरीवृतीति। (रीगृत्वत इति वक्तव्यम्) वरीवृश्च्यते। वरीवृश्चीति।

## रुग्रिकौच लुकि। ९१।

ऋदुपधस्याङ्गस्य योऽभ्यासस्तस्यरुग्रिकौ चाद्रीक् यङ्लुकि। वर्वर्त्ति। वरिवर्त्ति। वरीवर्त्ति। (मर्मृज्यमानास इत्युपसंख्यानम्) मर्मृज्यते। मर्मृज्यमानासः।

## ऋतश्च। ९२।

ऋदुपधस्याङ्गस्य योभ्यासः तस्य रुग्रिकौ चाद्रीक् यङ्लुकि। चर्कर्त्ति। चरिकर्त्ति। चरीकर्त्ति।

किरतिं चकरीतान्तं पचतीत्यत्र यो नयेत्।
प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन संग्रहः॥

तत्रेयं प्राप्तिस्तत्प्रकरणसामर्थ्यादङ्ग विशेषणम्। ऋत इत्येततथाचा प्राप्तिः किरते रुगादीनाम्।

## सन्वल्लघुनिचङ्परे ऽनग्लोपे। ९३।

चङ्परे णौ यदङ्गं तदवयवस्य लघुपरस्याभ्यासस्य सन्वत्कार्य्यं, णावग्लोपेऽसति। अचीकमत। अपीपवदित्यादि। लघुनीत्येव। अततक्षत्।

## दीर्घो लघोः। ९४।

लघोरभ्यासस्य दीर्घः सन्वद्भावविषये। अपीपठत्। लघोरिति किम्।

अबिभ्रजत् । पर इत्येव । अचकभत । अनग्लोप इत्येव । अचकथन् । चङीत्येव । अहं पपच ।

## अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् ।९५।

स्मादीनामभ्यासस्यात्सन्वद्भावविषये । असस्मरत्(१) । अददरत् । अतत्वरत् । अपप्रथत् । अमम्रदत् । अतस्तरत् । अपस्पशत् । सन्वद्भावादित्त्वं प्राप्तमनेन बाध्यते । तपरकरणसामर्थ्यादति कृते 'दीर्घो लघो' रित्यपि न भवति अददरत् ।

## विभाषा वेष्टिचेष्ट्योः ।९५।

वेष्टिचेष्ट्योरभ्यासस्याद्वा सन्वद्भावविषये । अववेष्टत् । अविवेष्टत् । अचचेष्टत् । अचिचेष्टत् ।

## ई च गणः ।९७।

गणयतेरभ्यासस्येच्चादच्चङ्परेदणौ । अजीगणद्दाशरथं न वाक्यम् । अजगणत् । गणयतिरदन्तः ।

## इति सप्तमाध्यायस्य चतुर्थः पादः ।

समाप्तश्चायमध्यायः ।

---

(१) इत्त्वबाधनार्थं स्मरत्यादिग्रहणेन "येन नाव्यवधान" मिति न्यायोऽत्र नाश्रीयते । तेन अचित्रणदित्यादि । चङ्पर इति णिजातेर्निमित्तत्वेनाद्लोपा सदन्यस्याको लोपो गृह्यते । तेन वादितवन्तं प्रयोजितवान् अवीवदद् वीणां परिवादकेनेत्यादौ न दोषः ।

# अथ अष्टमाध्यायस्य प्रथमः पादः

## सर्वस्य द्वे ।१।

सर्वस्येति च द्वे इति चैतदुभयमधिकृतं वेदितव्यं 'पदस्ये' त्यतः प्राक् । वक्ष्यति । 'नित्यवीप्सयोः' इति । तत्र सर्वस्य स्थाने द्वे भवतः । के द्वे भवतः । ये शब्दतश्चार्थतश्चोभयथान्तरतमे ते भवतः । एकस्य पचति शब्दस्य द्वौ पचतिशब्दौ भवतः । पचति पचति । ग्रामो ग्रामो रमणीयः ।

## तस्य परमाम्रेडितम् ।२।

द्विरुक्तस्य परमाम्रेडितम् । चौर चौर ३ घातयिष्यामि त्वाम् । आम्रेडितप्रदेशा 'आम्रेडितं भर्त्सने' इत्येवमादयः ।

## अनुदात्तञ्च ।३।

यदाम्रेडितमनुदात्तञ्च तत् । भुङ्क्ते भुङ्क्ते । अविद्यमानोदात्तमनुदात्तमित्यन्वर्थस्वीकारेण स्वरितोऽपि निषिध्यते ।

## नित्यवीप्सयोः ।४।

आभीक्ष्ण्येचार्थे वीप्सायाञ्च सर्वस्य पदस्य द्वित्वं स्यात् । अथ केषु नित्यता । तिङ्क्षु अव्यये कृत्सु च । कुत एतत् । आभीक्ष्ण्यमिह नित्यता । आभीक्ष्ण्यं च क्रियाधर्मः । यां क्रियां कर्ता प्राधान्येनाऽनुपरमन् करोति तदिह नित्यम् । पचति पचति । भुक्त्वा भुक्त्वा व्रजति । अथ केषु वीप्सा । सुप्सु वीप्सा । का पुनः सा । व्याप्तिविशेषविषया प्रयोक्तुरिच्छा । वृक्षं वृक्षं सिञ्चति । ग्रामो ग्रामो रमणीयः ।

## परेर्वर्जने । ५ ।

वर्जने परेर्द्वित्वम् । परिपरि वङ्गेभ्यो वृष्टो देवः । ( परेर्वर्जने वावचनम् ) परिवङ्गेभ्यः ।

## प्रसमुपोदः पादपूरणे । ६ ।

प्रादीनां द्वित्वं स्याद्द्वित्वेन पादपूर्त्तिश्चेत् । प्रप्रायमग्निर्भरतस्य शृण्वे । संसमिद्युवसे । वृषम् । उपोपमे परामृश । किन्नो दुदुहर्षसेदात वाउ । छन्दस्येवैतत् ।

## उपर्यध्यधसः सामीप्ये । ७ ।

उपर्य्यादीनां द्वे स्तः सामीप्ये विवक्षिते । उपर्युपरि ग्रामम् । अध्यधिसुखम् । अधोधोलोकम् । सामीप्य इति किम् । उपरि शिरसो घटं धारयति । औत्तराधर्यमेव विवक्षित न सामीप्य मिति द्विर्न भवति ।

## वाक्यादेरामन्त्रितस्याऽसूयासंमतिकोपकुत्सनभर्त्सनेषु । ८ ।

एकार्थः पदसमूहो वाक्यम् । असूयादिषु वाक्यादेरामन्त्रितस्य द्वे । तत्र परगुणानामसहनमसूया । पूजा संमतिः । कोपः क्रोधः । निन्दनं कुत्सनम् । अपकारशब्दैर्भयोत्पादनं भर्त्सनम् एते च प्रयोक्तृधर्मा नाभिधेयधर्माः । असूयादिषु 'स्वरितमाम्रेडितेऽसूया संमति कोप कुत्सनेषु इति पूर्व पदस्य प्लुतः । भर्त्सनेतु 'आम्रेडित भर्त्सने' इति प्लुतः । वाक्यादेरिति किम् । अन्तस्य माभूत् । शोभन खल्वसि मानवक । आमन्त्रितस्येति किम् । उदारो देवदत्तः । असूयादिष्विति किम् । देवदत्त गामभ्याज शुक्लाम् । सुन्दर ३ सुन्दर वृथा ते सौन्दर्य्यम् । सम्मतौ । देव ३ देव वन्द्योसि । कोपे । दुर्विनीत ३ दुर्विनीत इदानीं ज्ञास्यसि । कुत्सने । धानुष्क ३ धानुष्क वृथाते धनुः । भर्त्सने । चौर३ चौर घातयिष्यामि त्वाम् ।

## एकं बहुब्रीहिवत् । ९ ।

एकमिति द्विरुक्तं सद्बहुब्रीहिवत्स्यात् । तेन सुब्लोपपुंवद्भावौ ।

एकैकमक्षरम्। एकैकयाऽऽहुत्या। सर्वनामसंज्ञा प्रतिषेधस्वरसमासान्ताः समासाधिकारविहिते बहुव्रीहौ विज्ञायन्ते। तेनातिदेशिके बहुव्रीहौ न भवन्ति। एकैकस्मै। 'न बहुव्रीहौ' इति प्रतिषेधो न भवति। बहुव्रीहिरेव यो बहुव्रीहि रिति विज्ञानात्। नन। सुसु। 'नञ् सुभ्याम्' इत्यन्तोदात्तत्वं न भवति। ऋक् ऋक्। पूः पूः। 'ऋक्पूरब्धू' रिति समासान्तो न भवति।

## आबाधे च। १०।

आबाधन माबाधः पीडेति यावत्। आबाधे वर्तमानस्य द्वे बहुव्रीहिवच्च। गतगतः। नष्टनष्टः। गतगता।

## कर्मधारयवदुत्तरेषु। ११।

इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत्कार्य्यम्। कर्मधारयत्वे प्रयोजनं सुब्लोप पुंवद् भावान्तोदात्तत्वानि। सुब्लोपः। पटुपटुः। पुंवद्भावः। मृदु मृद्वी। अन्तोदात्तत्वम्। पटुपटुः।

## प्रकारेगुणवचनस्य। १२।

प्रकारोभेदः सादृश्यम्। सादृश्येवर्तमानस्य गुणवचनस्य द्वे। पटु पट्वी। पटुपटुः। पटुसदृश ईषतपटुरिति यावत्। (आनुपूर्व्ये द्वे वाच्ये) मूले मूले स्थूलाः। अग्रे अग्रे सूक्ष्माः। (स्वार्थेऽवधार्यमाणेऽनेकस्मिन्द्वे भवत इति वक्तव्यम्) अस्मात्कार्षापणादिह भवद्भ्यां माषं माषं देहि। (चापले द्वे भवत इति वक्तव्यम्) अहिरहिः। बुद्ध्यस्वबुद्ध्यस्व (क्रिया समभिहारे द्वे भवत इति वक्तव्यम्) स भवान् लुनीहि लुनीहीत्येवायल्लुनाति। पुनीहि पुनीहीत्येवायं पुनाति (डाचि च द्वे भवत इति वक्तव्यम्) पटपटायते। अव्यक्तानुकरणडाजन्तस्यैवेष्यते। नेह द्वितीयाकरोति। (पूर्वपरयोरर्थातिशयविवक्षायां द्वे भवत इति वक्तव्यम्) पूर्वं पूर्वं पुष्यन्ति। प्रथमं प्रथमं पच्यन्ते। (डतरडतमयोः सम सम्प्रधारणायांस्त्रीनिगदेभावे द्वे भवत इति वक्तव्यम्) उभाविमावाढ्यौ कतरा कतरा अनयोराढ्यता। सर्व इमे आढ्याः कतमा कतमा एषामाढ्यतेति (कर्मव्यतिहारे सर्वनाम्नो

द्वे भवत इति वक्तव्यम् ) ( समासवच्च बहुलम् ) अन्योन्यमिमे ब्राह्मणा भोजयन्ति । अन्योन्यस्य भोजयन्ति । इतरेतरस्य भोजयन्ति। ( स्त्रीनपुंसकयोरुत्तरपदस्य वाऽऽम् भावो वक्तव्यः ) अन्योन्याम् । अन्योऽन्यम् । इतरेतराम्—इतरेतरं वा इमे ब्राह्मण्यौ कुले वा भोजयतः। सर्वविभक्तीनामादेशोऽम् ।

## अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् । १३ ।

प्रियसुखयोर्वा द्वित्वमकृच्छ्रे गम्ये। दुःखाभावोऽकृच्छ्रम् । प्रियप्रियेण ददाति प्रियेण वा । सुखसुखेन ददाति सुखेन वा । अकृच्छ्र इति किम् । प्रियः पुत्रः । सुखोरथः ।

## यथास्वे यथायथम् । १४ ।

यथा शब्दस्य द्वित्वं नपुंसकता च निपात्यते यथास्वे गम्ये । ज्ञाताः सर्वे पदार्था यथायथम्, यथा स्वभावमित्यर्थः ।

## द्वन्द्वं रहस्यमर्य्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु । १५ ।

द्विशब्दस्य द्वित्वम्पूर्वपदस्याम् भावोऽत्वश्चोत्तरपदस्य क्लीवत्वञ्च निपात्यते रहस्यादिष्वर्थेषु । तत्र रहस्यं द्वन्द्व शब्दवाच्यमितरे विषयीभूताः। द्वन्द्वं मन्त्रयते । रहस्यमित्यर्थः । मर्यादा स्थित्यनतिक्रमः । आचतुर हीमे पशवो द्वन्द्वं मिथुनायन्ते । माता पुत्रेण मिथुनं गच्छति । पौत्रेण प्रपौत्रेणापि । व्युत्क्रमणं भेदः । द्वन्द्वं व्युत्क्रान्ताः । द्विवर्गसम्बन्धेन पृथगवस्थिता द्वन्द्वं व्युत्क्रान्ता इत्युच्यन्ते । द्वन्द्व यज्ञपात्राणि प्रयुनक्ति धीरः। अभिव्यक्तौ द्वन्द्वं नारदपर्वतौ । द्वावप्यभिव्यक्तौ साहचर्येणेत्यर्थः अन्यत्रापि द्वन्द्व मित्येतद् दृश्यते । द्वन्द्वं युद्धं वर्तते । द्वन्द्वानि सहते धीरः ।

## पदस्य । १६ ।

अधिकारोऽयमापदान्ताधिकारात् । वक्ष्यति 'संयोगान्तस्यलोपः' । पचन् । यजन् । पदस्येति किम् । पचन्तौ ।

## पदात् ।१७।

अधिकारोऽयं कुत्सने च सुपीत्यतः प्राक्। वक्ष्यति । आमन्त्रितस्य च। पचसि देवदत्त। पदादिति किम्। देवदत्त पचसि।

## अनुदात्तं सर्वमपादादौ ।१८।

पदात्परस्यापादादौ वर्त्तमानस्यपदस्यसर्वमनुदात्तं स्यात्। अधिकारोऽयमापादपरिसमाप्तेः। पचसि देवदत्त। अपादादाविति किम्। यत्ते नियतं रजसं मृत्यो।

## आमन्त्रितस्य च ।१९।

पदात् परस्यापादादौ वर्तमानस्य आमन्त्रितस्य सर्वमनुदात्तं स्यात्। पचसि देवदत्त। (समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः) तेनेह न। ओदन पच तव भविष्यति। ममभविष्यति। (पश्यार्थैश्च प्रतिषेधः समान वाक्य इति प्रकृत्य वक्तव्यः) ग्रामस्तव स्वं संप्रेक्ष्य गतः।

## युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थ-योर्वान्नावौ ।२०।

पदात् परयोरपादादौ वर्तमानयोः षष्ठ्यादिविशिष्टयोर्युष्मदस्मदोरनुदात्तौ वान्नावौ स्तः।

## बहुवचनस्य वस्नसौ ।२१।

पदात् परयोरपादादौ वर्त्तमानयोः षष्ठ्यादिबहुवचनान्तयोर्युष्मदस्मदोर्वस्नसौ स्तः।

## तेमयावेकवचनस्य ।२२।

पदात् परयोरपादादौ वर्तमानयोः षष्ठ्याद्येकवचनान्तयोर्युष्मदस्मदोः तेमे इत्येतौस्तः।

## त्वामौ द्वितीयायाः ।२३।

पदात् परयोरपादादौ वर्तमानयो द्वितीयैकवचनान्तयोर्युष्मदस्मदोः त्वामौस्तः। श्रीशस्त्वावतु मापीह दत्तात्तेमेपि शर्म्म सः। स्वामी तेमेपि स

हरिः पातु वामपि नौ विभुः॥१॥सुखंवान्नौ ददात्वीशः पतिर्वामपि नौ हरिः। सोऽव्याद्वोनः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः ॥२॥ ( युष्मदस्मदोरन्यतरस्यामनन्वादेश इति वक्तव्यम् ) ग्रामे कम्बलस्तव स्वम्। ग्रामे कम्बलस्ते स्वम्। ग्रामे कम्बलं मे स्वम्। अपर आह। ( सर्व एव वान्नावादयोऽनन्वादेशे वा वक्तव्याः ) कम्बलस्ते स्वम्। कम्बलस्तव स्वम्। कम्बलो मे स्वम्। कम्बलो मम स्वम्।

## नचवाहाहैवयुक्ते । २४।

चादिभिर्योगे युष्मदस्मदोरेते आदेशा न स्युः। हरिस्त्वां मां चावतु। कथं त्वां मां वा न रक्षेत्। स त्वां ह पश्यति। मां ह पश्यति। ग्रामस्तवाह स्वम्। ग्रामस्तवैव स्वम्।

## पश्यार्थैश्चानालोचने । २५।

अचाक्षुषज्ञानार्थे योगे युष्मदस्मदो रेते आदेशा न। चेतसा त्वां समीक्षते।

## सपूर्वायाः प्रथमाया विभाषा । २६।

विद्यमानपूर्वात्प्रथमान्तात्परयोर्युष्मदस्मदो रेते आदेशा वा स्युः। भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम्। त्वामेति वा।

## तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः।२७।

कुत्सनाभीक्ष्ण्ययोर्वर्तमानानि तिङन्तात्पराणि गोत्रादीनि अनुदात्तानि स्युः। जलपति गोत्रम्। जलपति २ गोत्रम्।

## तिङ्ङतिङः । २८।

अतिङन्तात्परं तिङन्तमनुदात्तं स्यात्। छात्रः पठति।

## न लुट् । २९।

अतिङन्तात्परं लुडन्तं तिङन्तं नानुदात्तम्। श्वः कर्त्ता।

## निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् । ३०।

यदादिभिर्निपातैर्युक्तं तिङन्तं नानुदात्तम् । यत्करोषि । यदि पठसि । इत्यादय उदाहर्तव्याः ।

## न ह प्रत्यारम्भे । ३१ ।

प्रत्यारम्भे न ह युक्तं तिङन्तं नानुदात्तम् । चोदितस्य प्रतिषेधयुक्त आरम्भः प्रत्यारम्भः । न ह भोक्ष्यसे । नहाध्येष्यसे ।

## सत्यं प्रश्ने । ३२ ।

प्रश्ने सत्यं युक्तं तिङन्तं नानुदात्तम् । सत्यं भोक्ष्यसे । इदं मध्योदात्तम् ।

## अङ्गाप्रातिलोम्ये । ३३ ।

अप्रातिलोम्येऽङ्गयुक्तं तिङन्तं नानुदात्तम् । अङ्ग कुरु । अङ्ग पच । अन्तोदात्तं पदम् ।

## हि च । ३४ ।

अप्रातिलोम्ये हियुक्तं तिङन्तं नानुदात्तम् । सहि कुरु । सहि पच । सहि पठ वा ।

## छन्दस्यनेकमपि साकांक्षम् । ३५ ।

छन्दसि हि युक्तमनेकमपि साकाङ्क्षं तिङन्तं नानुदात्तम् । अनृतं हि वदति । पाप्मा एनं विपुनाति ।

## यावद्यथाभ्याम् । ३६ ।

यावद्यथायुक्तं तिङन्तं नानुदात्तम् । यावद्भुङ्क्ते । यथा भुङ्क्ते ।

## पूजायां नानन्तरम् । ३७ ।

पूजायां यावद्यथायुक्तमनन्तरं तिङन्तं नानुदात्तम् न स्यात् । द्वौ प्रतिषेधौ प्रकृतार्थं गमयतः । यावद्यथा वा पठति । वदति वा शोभनम् ।

## उपसर्गव्यपेतञ्च । ३८ ।

पूजायामुपसर्गेण व्यवहितं तिङन्तं नानुदात्तं न। यावत्प्रपठति शोभनम्। यथा वा।

## तुपश्यपश्यताहैः पूजायाम् ।३९।

पूजायां त्वादियुक्तं तिङन्तं नानुदात्तम्। माणवकस्तु पठति शोभनम्। पश्य मृगो धावति। शोभनमित्यादि।

## अहो च ।४०।

पूजायाम् अहो युक्तं तिङन्तं नानुदात्तम्। अहो देवदत्तः पचति शोभनम्।

## शेषे विभाषा ।४१।

अहो युक्तं तिङन्तं शेषे विभाषा नानुदात्तम्। कष्टमहो करिष्यसि। शेषो ऽपूजा। असूयावचनमेतत्।

## पुराचपरीप्सायाम् ।४२।

पुरायुक्तं तिङन्तमनुदात्तं वा त्वरायाम्। अधीष्व बाल पुरा विद्योतते विद्युत्।

## नन्वित्यनुज्ञैषणायाम् ।४३।

ननुयुक्तं तिङन्तमनुदात्तं न सम्मतिप्रार्थनायाम्। अनुगच्छामि भोः। अनुजानीष्व मां गमनम्प्रतीत्यर्थः।

## किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ।४४।

क्रियाप्रश्ने वर्तमानेन किमा युक्तमनुपसर्गप्रतिषेधार्थकं तिङन्तं नानुदात्तम्। किं द्विजः पचत्याहोस्विद् गच्छति। किं देवदत्तः शेते आहोस्विदधीते।

## लोपे विभाषा ।४५।

क्रिया प्रश्ने किमो लोपे अनुपसर्गं तिङन्तमप्रतिषिद्धमनुदात्तं वा। पाठं पठति आहोस्वित् क्रीडति। धातुस्वरेण पक्षे आद्युदात्तः।

## एहि मन्ये प्रहासे लृट् ।४६।

एहि मन्ये युक्तं लृडन्तं तिङन्तं नानुदात्तं प्रहासे गम्ये । एहि मन्ये रथेनया स्यसि नहि यास्यसि यातस्तेन पिता । मध्योदात्तम् ।

## जात्वपूर्वम् ।४७।

अविद्यमानपूर्वं जातुयुक्तं तिङन्तं नानुदात्तम् । जातु भोक्ष्यसे करिष्यसि वा ।

## किंवृत्तञ्चचिदुत्तरम् ।४८।

अविद्यमानपूर्वेणचिदुत्तरेण किं वृत्तेन युक्तं तिङन्तमनुदात्तं । विभक्त्यन्तं डतरडतमान्तं किमोरूपं किंवृत्तम् । कश्चित् कतरश्चित् कतमश्चिद्वा भुङ्क्ते ।

## आहो उताहो चानन्तरम् ।४९।

अपूर्वाभ्यामाहो उताहोभ्यां युक्तमनन्तरं तिङन्तमनुदात्तं न । आहो उताहो वा भुङ्क्ते ।

## शेषे विभाषा ।५०।

आहो उताहो इत्येताभ्यां तिङन्तमनुदात्तं वा शेषे । आहो देवदत्तः पचति । उताहो देवदत्तः पचति ।

## गत्यर्थलोटालृण् न चेत्कारकं सर्वान्यत् ।५१।

गत्यर्थलोटा युक्तं लृडन्तं तिङन्तं नानुदात्तं यदि सर्वं कारकमन्यन्न । आगच्छ देवदत्त ग्रामं द्रक्ष्यस्येनम् । उह्यन्तां देवेन शालयस्तेनैव भोक्ष्यन्ते ।

## लोट् च ।५२।

गत्यर्थलोटा युक्तं लोडन्तं तिङन्तमनुदात्तं न यदि सर्वंकारकमन्यन्न । आगच्छ देवदत्त ग्रामम्पश्य ।

## विभाषितं सोपसर्गमनुत्तमम् ।५३।

गत्यर्थलोटा युक्तं सोपसर्गमनुत्तमं तिङन्तमनुदात्तं वा यदि सर्वकारकमन्यन्न। आगच्छ देवदत्त ग्रामं प्रविश।

## हन्त च ।५४।

हन्त युक्तं लोटायुक्तं सोपसर्गमनुत्तमं तिङन्तमनुदात्त वा। हन्त प्रविश २।

## आम एकान्तरमामन्त्रितमनन्तिके ।५५।

आमः परमेकपदान्तरितममामन्त्रितनानुदात्तमनन्तिके। आं पचसि देवदत्त ३।

## यद्धि तु परं छन्दसि ।५६।

यद्, हि, तु, पर तिङन्तमनुदात्तं न छन्दसि। उदसृजो यदङ्गिरः। इन्दवो वा मुशन्ति हि। आख्यास्यामि तु ते।

## चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः।५७।

अगतेः परं तिङन्तमनुदात्तं न, चादिषु परतः। देवः पचति चन। देवः पचति चिन्। देवः पचतीव। देवः पचति गोत्रम्। देवदत्तः पचति कल्पम्। देवदत्तः पचति २ वा।

## चादिषु च ।५८।

चवाहाहैवेषु परं तिङन्तमगते नानुदात्तम्। देव पचति च खादति च। देवः पचति वा खादति वा। देवः पचति ह खादति ह। देवः पचत्यह। देवः पचत्येव खादत्येव

## चवायोगे प्रथमा ।५९।

चवायुक्तं प्रथमान्तं तिङन्तमनुदात्तं न। गाश्चचारयति वीणांवा वादयति।

## हेतिक्षियायाम् ।६०।

ह युक्ता प्रथमा नानुदात्ता क्षियायां गम्यमानायाम्। क्षियेति धर्मव्यतिक्रमः। स्वयं ह रथेन याति। उपाध्यायं पदातिं गमयति।

## अहेति विनियोगे च ।६१।

अहयुक्ता प्रथमा नानुदात्ता विनियोगे चात्क्षियायाम्। नाना प्रयोजनो नियोगो विनियोगः। त्वमहग्रामं गच्छ। क्षियायाम्। स्वयमह रथेन याति उपाध्यायं पदातिं गमयति।

## चाहलोपएवेत्यवधारणम् ।६२।

चाहलोपे प्रथमा नानुदात्ता यद्यवधारणार्थ एव शब्दः प्रयुज्यते। देव एव ग्रामं गच्छतु। देव एवारण्यं गच्छतु। ग्राममरण्यञ्च गच्छत्वित्यर्थः। अह। देव ग्रामं गच्छतु। इन्द्र एवारण्यम्।

## चादिलोपे विभाषा ।६३।

चादि लोपे प्रथमा अनुदात्ता वा। शुक्लाव्रीहयो भवन्ति। वा लोपे। व्रीहिभिर्यजेत। यवैर्यजेत।

## वैवावेति च च्छन्दसि ।६४।

वैवावाभ्यां युक्ता प्रथमा तिङ्विभक्तिरुदात्ता वा छन्दसि। अहर्वै देवानामासीत्। रात्रिर्वै असुराणाम्। वाव। अयं वाव हस्त आसीत्। नेतर आसीत्।

## एकान्याभ्यां समर्थाभ्याम् ।६५।

समर्थाभ्यामेकान्याभ्यां युक्ता प्रथमानुदात्ता वा छन्दसि। प्रजामेकां जिन्वति। पक्षे आद्युदात्तस्पदम्। तयोरन्यः पिप्पलं स्वाद्वत्ति।

## यद्वृत्तान्नित्यम् ।६६।

यद्वृत्तात्परं(१) तिङन्तं नित्यं नानुदात्तम्। यो भुङ्क्ते। यदयं वायुर्वाति। प्रथमा छन्दसीति च निवृत्तम्। यत्कामास्ते जुहुम। (यथाकाम्येवेति वक्तव्यम्) यत्र क्वचन यजन्ते।

[१] यत्र पदे यच्छब्दस्ततः परमित्यर्थः।

## पूजनात्पूजितमनुदात्तम् । ६७ ।

पूजनवाचिभ्यः परं पूजितमनुदात्तम् । काष्ठाध्यापकः । काष्ठादयोऽद्भुतपर्यायाः सन्तः पूजनवचना भवन्ति ( काष्ठादिभ्यः पूजनादिभ्य इति वक्तव्यम् ) नेह । शोभनोऽध्यापकः । ( मलोपश्च वक्तव्यः ) दारुणाध्यापकः[१] ।

## सगतिरपि तिङ् । ६८ ।

पूजनवाचिभ्यः काष्ठादिभ्यः परं सगति, केवलं वा पूजनतिङन्तं नानुदात्तम् । यत्काष्ठं प्रपचति ।

## कुत्सने च सुप्यगोत्रादौ । ६९ ।

गोत्रादिभिन्ने कुत्सने सुबन्ते परे सगति केवलं तिङन्तमनुदात्तम् । पचति पूति । ( क्रियायाः कुत्सन इति वक्तव्यम् ) तेनेह न । पचति पूतिर्देवदत्तः । अत्र हि कर्तुः कुत्सनम् । ( पूतिश्चानुबन्धोद्रष्टव्यः[२] ) पचति पूतिः ( विभाषितश्चापि बह्वर्थम् ) पचन्ति पूति ।

## गतिर्गतौ । ७० ।

गतौ परतो गतिरनुदात्तास्यात् । अभ्युद्धरति ।

## तिङि चोदात्तवति । ७१ ।

उदात्तवति तिङन्ते गतिरनुदात्तः । यत्प्रपचति ।

## आमन्त्रितं पूर्वमविद्यमानवत् । ७२ ।

पूर्वमामन्त्रितमविद्यमानवत्स्यात् । कानि प्रयोजनानि । आमन्त्रित तिङ् निघात युष्मदस्मदादेशाभावाः । देवदत्त यज्ञदत्तेत्यत्रामन्त्रितस्येति निघातो न । देवदत्त पचसि, इत्यत्र तिङ्ङतिङ इति न ।

---

[१] दारुणमध्यापक इत्येव मसमासो बोध्यः ।
[२] तेनान्तोदात्तता ।

## नामन्त्रिते समानाधिकरणे सामान्यवचनम् । ७३ ।

समानाधिकरण आमन्त्रिते परे पूर्वं सामान्यवचनमामन्त्रितान्तम-विद्यमानवन्न । अग्ने गृहपते ।

(१)

## विभाषितं विशेष वचने बहुवचनम् । ७४ ।

विशेषवचने समानाधिकरणे आमन्त्रिते पूर्वं बहुवचनान्तमामन्त्रितान्त मविद्यमानवत् वा । देवाः शरण्याः । ब्राह्मणाः वैय्याकरणाः ।

इत्यष्टमाध्यायस्य प्रथमः पादः ।

---

(१) भाष्यरीत्यायं पाठः

# अथाष्टमाध्यायस्य द्वितीय पादारम्भः

## पूर्वत्रासिद्धम् ।१।

अयमधिकारो विधिश्च । तेन सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा त्रिपाद्यामपि पूर्वंप्रतिपरमसिद्धम् । अमुष्मै । अमुष्मात् । अमुष्मिन् । उत्वस्यासिद्धत्वात् स्मायादयः ।

## न लोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ।२।

सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र । राजभिः । राजभ्यः । ऐस्त्वमेत्वं च न । स्वर । पञ्चार्मम् । दशार्मम् । न लोपस्यासिद्धत्वात्–अर्मे चावर्णमिति पूर्वपदस्याद्युदात्तत्व । पञ्चब्राह्मण्यो दशब्राह्मण्यः । वृत्रहभ्याम् ।

## न मुने ।३।

नाभावे कर्तव्ये कृते च मुभावो नासिद्धः किन्तु सिद्ध एव । अमुना । मुभावस्यासिद्धत्वाद् विलक्षणो नाभावो न स्यात् । ( संयोगान्तलोपो रोरुत्वेसिद्धो वक्तव्यः ) हरिवांमेदिनंत्वा ( सिज्लोप एकादेशे सिद्धो वक्तव्यः ) अलावीत् । अयावीत् । ( संयोगादि लोपः संयोगान्तस्य लोपे सिद्धो वक्तव्यः ) काष्ठतट् ( निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्तव्यः ) वृक्णः । क्षीबः । ( वस्वादिषुदत्वंसौदीर्घत्वेसिद्धं वक्तव्यम् ) उखास्रत् । पर्णध्वत् । ( अदसईत्वोत्वेस्वरे बहिष्पदलक्षणे सिद्धे वक्तव्ये ) अमी आसते । अमू अत्र । ( प्रगृह्यसंज्ञायाञ्चसिद्धे वक्तव्ये ) अमी अत्र । अमू आसाते ( प्लुति स्तुग्विधौ छे च सिद्धावक्तव्या ) अग्ना ३ इच्छत्रम् । पटा ३ उच्छत्रम् । ( श्चुत्वं धुड्विधौसिद्धं वक्तव्यम् ) अटश्च्योतति । पटश्च्योतति । ( अभ्यास जश्त्वचर्त्वमेत्वतुकोः सिद्ध

वक्तव्यम् ) बभणतुः । बभणुः । उचिच्छिषति । ( द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम् ) संय्यन्ता । सँव्वत्सरः । ल्ँलोकम् । ( पदाधिकारश्चेल्लत्वढत्वघत्वनत्वरुत्वषत्वणत्वानुनासिकछत्वानि सिद्धानि वक्तव्यानि ) क्रमेण लिख्यन्ते । गलो गलः । द्रोढा । द्रोग्धा २ । नुन्नोनुत्तः । अभिनोऽभिनः । मातुः ष्वसा २ । मातुः स्वसा २ । माषवापाणि २ । वाङ्नयनम् २ । वाग्नयनम् २ । वाक् छयनम् २ । वाक् शयनम् २ ।

## उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तः । ४ ।

उदात्तस्थाने स्वरितस्थाने च यो यण ततः परस्यानुदात्तस्य स्वरितः । कुमार्यौ । कुमार्य्यः ।

## एकादेश उदात्तेनोदात्तः । ५ ।

अनुदात्तस्योदात्तेन सह य एकादेशः स, उदात्तः । अग्नी । वायू ।

## स्वरितो वाऽनुदात्ते पदादौ । ६ ।

अनुदात्ते पदादौ उदात्तेन सह य एकादेशः स स्वरितो वा भवत्युदात्तो वा । सु उत्थितः । सूत्थितः । अनुदात्त इति किम् । देवदत्तोऽत्र । पदादाविति किम् । वृक्षौ । वृक्षः ।

## न लोपः प्रातिपदिकान्तस्य । ७ ।

प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः । राजा । राजभ्याम् । राजभिः । ( अह्नो न लोपस्य प्रतिषेधो वक्तव्यः ) अहोभ्याम् । अहोभिः । प्रातिपदिकग्रहणं किम् । अहन्नहम् । अन्त ग्रहणं किम् । राजा । राजानौ ।

## नङि सम्बुद्ध्योः । ८ ।

प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य लोपो नं, ङि सम्बुद्ध्योः परतः । आर्द्रे चर्म्मन् । हे राजन् । ( नङि सम्बुद्ध्योरनुत्तरपद इति वक्तव्यम् )

चर्मणि तिला अस्य चर्मतिलः। राजन्वृन्दारक। (वा नपुंसकानामिति वक्तव्यम्) हे चर्मन्। हे चर्म।

## मादुपधायाश्च मतोर्वोऽयवादिभ्यः ।९।

मान्तान् मोपधादकारान्तादकारोपधाच्च मतोर्मस्य वः। किम्वान्। शमीवान्। वृक्षवान्। यशस्वान्। मादुपधायाश्चेति किम्। अग्निमान्। अयवादिभ्य इति किम्। यवमान्।

## झयः ।१०।

झयः परस्य मतोर्मस्य वः। अग्निचित्वान्ग्रामः। विद्युत्वान्बलाहकः।

## सञ्ज्ञायाम् ।११।

संज्ञायां विषये मतोमस्य वः। अहीवती। कपीवती। ऋषीवती। मुनीवती।

## आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती ।१२।

एते षट् संज्ञायां निपात्यन्ते। आसनशब्दस्यासन्दीभावः। आसन्दीवान् ग्रामः। अन्यत्रासन्नवान्। अस्थिशब्दस्याष्ठीभावः। अष्ठीवान्नाम ऋषिः। अस्थिमानन्यत्र। चक्रशब्दस्य चक्रीभावः। चक्रीवान्नामराजा। चक्रवानन्यत्र। कक्ष्यायाः सम्प्रसारणम्। कक्षीवान्नाम ऋषिः। कक्ष्यावानन्यत्र। लवणशब्दस्य रुमण्भावः। रुमण्वान्नाम पर्वतः। लवणवानन्यत्र। चर्म्मणो न लोपाभावो णत्वञ्च। चर्मण्वतीनाम नदी। चर्मवत्यन्यत्र।

## उदन्वानुदधौ च ।१३।

उदकस्य उदन्भावो मतौ उदधौ संज्ञायाञ्च। उदन्वान् समुद्रः, ऋषिश्च।

## राजन्वान् सौराज्ये ।१४।

राजन् शब्दस्य मतौ नलोपाभावो निपात्यते सौराज्ये। राजन्वती भूमिः। राजवानित्येवान्यत्र।

## छन्दसीरः। १५।

इवर्णान्ताद्रेफान्ताच्च मतोर्मस्यवश्छन्दसि। हरिवोमेदिनं त्वा। गीर्वान्। धूर्वान्।

## अनो नुट्। १६।

अनन्तान्मतोर्नुट् छन्दसि। अक्षण्वन्तः कर्णवन्तः सखायः।

## नाद्घस्य। १७।

नान्ताद्घस्य नुट् छन्दसि। सुपथिन्तरः। (रथिन ईद्वक्तव्यः) रथीतरः। (भूरिदाव्नस्तुड् वक्तव्यः) भूरिदावत्तरोजनः।

## कृपोरोलः। १८।

कृपोऽवयवस्य रस्य लः। र इति श्रुतिसामान्यमुपादीयते। तेन यः केवलो रेफो यश्च ऋकारस्थ स्तयो द्वयोरपि ग्रहणम्। ल इत्यपि सामान्य मात्र मुपादीयते। कल्पते। चक्लृपे। (कृपणादीनां प्रतिषेधो वक्तव्यः) कृपणः। कृपाणः। (वालमूललघ्वलमङ्गुलीनां वालोरत्वमापद्यत इति वक्तव्यम् अश्ववालः। अश्ववारः। मूलदेवः। मूरदेवः। वरुणस्य लघुस्पदः। रघुस्पदोवा। इत्यादि। (संज्ञाछन्दसोर्वा कपिलादीनामिति वक्तव्यम्) कपिलकाः। कपिरकाः। इत्यादि।

## उपसर्गस्यायतौ। १९।

उपसर्गावयवस्य रस्य लो ऽयतौ। प्लायते। पलायते। निस्, दुस् इत्येतयोस्तु सत्वस्यासिद्धत्वाद् लत्वेन नैव भवितव्यम्। निरयणम्। दुरयणम्।

## ग्रोयङि। २०।

ग्रोरेफस्य लो यङि। निजेगिल्यते। यङीति किम्। निगीर्य्यते। गृणाते स्तु नेह ग्रहणम् अनभिधानात्तत्र यङ एवानुत्पत्तेः।

# अचि विभाषा । २१ ।

ग्रोरेफस्य लो वाऽजादौ । निगिरति । निगिलति । निगरणम् । निगलनम् । इयं च व्यवस्थितविभाषा । तेन गर इति विषे नित्यं न । गल इति प्राण्यङ्गे नित्यमेव लः । गिरौ इत्यत्र धातोः स्वरूपग्रहणे तत्प्रत्यये विज्ञान मिति लत्व न । गिरति वां लत्वविधावधिकृत इदन्तु गृणाते रूपम् ।

# परेश्च घाङ्कयोः । २२ ।

परे रस्य लोवा घाङ्कयोः । परिघः । पलिघः । पर्य्यङ्कः । पल्यङ्कः । ( योगेचेति वक्तव्यम् ) परियोगः । पलियोगः । घ इति स्वरूपग्रहण मत्र, न तरप्तमपौ इति ।

# संयोगान्तस्य लोपः । २३ ।

सयोगान्तं यत्पदन्तस्यलोपः । गोमान् । संयोगान्तलोपे यणः प्रतिषेधो वक्तव्यः ) दध्यत्र । मध्वत्र । पदस्येति किम् । गोमन्तौ ।

# रात्सस्य । २४ ।

रात्परस्य संयोगान्तस्य सस्यैव लोपो नान्यस्य । गोभिरक्षाः । मातुः । पितुः । ऊर्क् -अत्र न ।

# धि च । २५ ।

धादौप्रत्यये सस्य लोपः । अलविध्वम् । अलविढ्वम् । इतः प्रभृति सिचः सकारस्य लोप इष्यते । इह न भवति । चकाद्धि पलितं शिरः ।

# झलोझलि । २६ ।

झलः परस्य सस्य लोपो झलि । अभित्त । अभित्थाः । अवात्ताम् । झल इति किम् । अमंस्त । झलीति किम् । अभित्साताम् ।

# ह्रस्वादङ्गात् । २७ ।

हृस्वान्तादङ्गात्परस्य सस्य लोपो झलि । अकृत । अहृत । हृस्वा-

दिति किम्। अच्योष्ट। अङ्गादिति किम्। अलाविष्टम्। झलीत्येव। अकृषाताम्।

## इट ईटि। २८।

इटः परस्य सस्य लोप ईटि। अदेवीत्। इट इति किम्। अकार्षीत्। इटीति किम्। अलाविष्टाम्।

## स्कोः संयोगाद्योरन्ते च। २९।

पदान्ते झलि च यः संयोगस्तदाद्योः स्कोर्लोपः। लस्जेः लग्नः। लग्नवान्। मस्जेः मग्नः। मग्नवान्। साधुलक्। ककारस्य। तक्षेः काष्ठ तट्। स्कोरिति कित्। नर्नर्त्ति। संयोगाद्योरिति किम्। पयःशक्। अन्तेचेति किम्। तक्षिता।

## चोः कुः। ३०।

झलि पदान्ते च चोः कुः। पक्ता। पक्तुम्। पक्तव्यम्। वक्तेत्यादि।

## होढः। ३१।

झलि पदान्ते च हो ढः। सोढा। जलाषाट्।

## दादेर्धातोर्घः। ३२।

झलि पदान्ते च उपदेशे दादेर्धातोर्होघः। दग्धा। दग्धुम्। काष्ठधक्। दादेरिति किम्। लेढा।

## वाद्रुहमुहष्णुहष्णिहाम्। ३३।

झलि पदान्ते च द्रुहादीनां हस्य घो वा। द्रोग्धा। द्रोढा। मित्रध्रुक्। मित्रध्रुट्। इत्यादि। द्रुहेर्दादित्वाद्घत्वं नित्यं प्राप्तमितरेषां मप्राप्तमेव घत्वं विकल्प्यते।

## नहोधः। ३४।

झलि पदान्ते च नहो हस्य धः। नद्धा। उपानत्।

## आहस्थः। ३५।

आहो हस्य थो झलि । आत्थ । आदेशान्तरकरणं झषस्तथो र्धोध इत्यस्य निवृत्त्यर्थम् । झलीत्येव । आह ।

## व्रश्च भ्रस्ज सृज मृज यज राज भ्राज च्छशां षः । ३६ ।

झलि पदान्ते च व्रश्चादीनां षः । व्रष्टा । मूलवृट् । भ्रष्टा । धाना भृट् । स्रष्टा । रज्जुसृट् । मार्ष्टा । कंसपरिमृट् । यष्टा । उपयट् । सम्राट् स्वराड् । विभ्राट् । प्रष्टा । शब्दप्राट् । लेष्टा । वेष्टा । विट् । (हृग्रहो र्भश्छन्दसि हस्येति वक्तव्यम् ।) गर्दभेन संभरति । ग्रभीता । उद्ग्राभं च निग्राभं च ।

## एकाचो बशोभष्झषन्तस्य स्ध्वोः । ३७ ।

धातोरवयवस्यैकाचो झषन्तस्य वशोभष् झलि सकारे ध्वे च पदान्ते च । भोत्स्यते । अभुद्ध्वम् । अर्थभुत् । धोक्ष्यते । अधुग्ध्वम् । गोधुक् । एकाच इति किम् । दामलिह मिच्छति, दामलिह्यति दामलिह्यते रप्रत्यय । दामलिट् । असति ह्येकाच् ग्रहणे धातो रित्येतद् बशो विशेषणं स्यात् । बश इति किम् । क्रोत्स्यति झषन्तस्ये ति किम् । दास्यति । स्ध्वोरिति किम् । बोद्धा ।

## दधस्तथोश्च । ३८ ।

द्विरुक्तस्य झषन्तस्य दधातेर्बशो भष् तथोः स्ध्वोश्च परतः । धत्तः धत्थः । धत्से । धत्स्व । धद्ध्वम् । वचनसामर्थ्यात् आतो लोपस्य स्थानिवद् भावो न भवति । अभ्यास जश्त्वस्य चासिद्धत्वम् । झषन्तस्येत्येव । दधाति । तथोरिति किम् । आनन्तर्यात्र स्ध्वोरेव विज्ञायेत ।

## झलांजशोऽन्ते । ३९ ।

पदान्ते झलां जशः स्युः । वागत्र । श्वलिडत्र । अन्तग्रहणं झलीत्यस्य निवृत्त्यर्थम् । वस्ता । वस्तव्यम् ।

## झषस्तथोर्धोधः । ४० ।

झषन्तात्परयोस्तथोर्धो नतु दधातेः । लब्धा । अलब्धाः । लेढा । अलीढाः । अध इति किम् । धत्थः ।

## षढोः कः सि ।४१।

रपक्ष्यम् । वेक्ष्यति । अवेक्ष्यत् । विविक्षति । लेक्ष्यति । सीति किम् । पिनष्टि । लेढि ।

## रदाभ्यां निष्ठातो नः पूर्वस्य च दः ।४२।

रदाभ्यां परस्य निष्ठायास्तस्य नस्तदपेक्षया पूर्वस्य दस्य च । आस्तीर्णम् । भिन्नः । रदाभ्यां किम् । कृतः । निष्ठेति किम् । कर्ता । त इति किम् । चरितम् । पूर्वस्येति किम् । परस्य माभूत् । भिन्नवद्भ्याम् ।

## संयोगादेरातोर्यण्वतः ।४३।

संयोगादेर्यण्वत आकारान्ताद्धातोः परस्य निष्ठातस्य नः । द्राणः । द्राणवान् । ग्लानः । ग्लानवान् । संयोगादेरिति किम् । यातः । अत इति किम् । च्युतः । धातोरिति किम् । निर्यातः । यण्वतः किम् । स्नातः ।

## ल्वादिभ्यश्च ।४४।

ल्वादिभ्यः परस्य निष्ठातकारस्य नः लूनः । लूनवान् । ( ॠकारल्वादिभ्यः क्तिन्निष्ठावद्भवतीति वक्तव्यम् ) कीर्णिः । गीर्णिः । लूनिः ( दुग्वोर्दीर्घश्चेतिवक्तव्यम् ) आदूनः । विगूनः । ( पूञो विनाश इति वक्तव्यम् ) पूना यवाः । नष्टा इत्यर्थः । विनाश इति किम् । पूतं धान्यम् । ( सिनोतेर्ग्रासकर्मकर्तृकस्येति वक्तव्यम् ) सिनोग्रासः स्वयमेव । ग्रासकर्मकर्तृकस्येति किम् । सिता पाशेन शकरी ग्रासोऽपि यदा कर्मैव भवति न कर्मकर्ता तदा न भवति । सितो ग्रासो देवदत्तेन ।

## ओदितश्च ।४५।

ओदितः परस्य निष्ठातकारस्य नकारादेशः स्यात् । ओलस्जी । लग्नः । लग्नवान् । ओविजी । उद्विग्नः । ओप्यायी । आपीनः । आपीनवान् । स्वादय ओदितः । षूङ् । सूनः । सूनवान् । दूनः । दूनवान् ।

## क्षियो दीर्घात् । ४६ ।

दीर्घात् क्षियो निष्ठातकारस्य नकारः । क्षीणस्तपस्वी । दीर्घादिति किम् अक्षित मसि मामेक्षेष्ठाः । अक्षित मिति क्तप्रत्ययो भावे । भावश्च ण्यदर्थ इति दीर्घाभावः ।

## श्योऽस्पर्शे । ४७ ।

अस्पर्शे श्यायतेः परस्य निष्ठातकारस्य नकारः । शीनं घृतम् । अस्पर्श इति किम् । शीतम् ।

## अञ्चोऽनपादाने । ४८ ।

अनपादानेऽञ्चतेर्निष्ठातकारस्य नकारः । समक्नौ शकुनेः पादौ । संगताविरत्यर्थः । अनपादान इति किम् । उदक्त मुदक कूपात् ।

## दिवोऽविजिगीषायाम् । ४९ ।

अविजिगीषायां दिवो निष्ठातकारस्य नकारः । आद्यूनः । परिद्यूनः । अविजिगीषाया मिति किम् । द्यूतं वर्तते । विजिगीषयाहि तत्राक्षपातनादि क्रियते ।

## निर्वाणोऽवाते । ५० ।

निपूर्वाद्वातेर्निष्ठानत्वं निपात्यतेऽवाते । निर्वाणोऽग्निः । अवात इति किम् । निर्वातो वातः ।

## शुषः कः । ५१ ।

शुषः परस्य निष्ठायास्तस्य कः । शुष्कः । शुष्कवान् ।

## पचो वः । ५२ ।

पचः परस्य निष्ठायास्तस्य वः । पक्वः । पक्ववान् ।

## क्षायो मः । ५३ ।

क्षैधातोः परस्य निष्ठातस्य मः । क्षामः । क्षामवान् ।

## प्रस्त्योऽन्यतरस्याम् । ५४ ।

प्रपूर्वात्स्त्यायतेः परस्य निष्ठातस्य मो वा। प्रस्तीमः। प्रस्तीमवान्। प्रस्तीतः। प्रस्तीतवान्।

## अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः।५५।

अनुपसर्गादेते निपात्यन्ते। फुल्लः। ञिफला विशरणे इत्येतस्मात् धातोरुत्तरस्य निष्ठातस्य लकारो निपात्यते, उत्त्वमडभावश्च सिद्ध एव। क्षीबकृशोल्लाघा इति क्षीबकृशिभ्यामुत्पूर्वाच्च लाघेः क्तप्रत्ययस्य तलोप इडागमाभावश्च निपात्यते। कृते वा इटि इच्छब्दलोपः। क्षीबः। कृशः। उल्लाघः। अनुपसर्गादिति किम्। प्रफुल्लाः सुमनसः। प्रक्षीबितः। प्रकृशितः। प्रोल्लाघितः। लाघेरुदोन्य उपसर्गः प्रतिषिध्यते। ( उत्फुल्ल सम्फुल्लयोरिति वक्तव्यम् ) उत्फुल्लः। सम्फुल्लः।

## नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्।५६।

नुदादिभ्यः परस्य निष्ठातस्य नो वा। नुन्नः। नुत्तः। विन्नः। वित्तः। उन्नः। उत्तः। त्राणः। त्रातः। घ्राणः। घ्रातः। ह्रीणः। ह्रीतः। ह्री इत्येतस्माद प्राप्तं नत्व मितरेषां नित्यं प्राप्तं विकल्प्यते। विद विचारणे इत्यस्य विदे रिह ग्रहण मिष्यते। तथा च—

वेत्तेस्तु विदितो निष्ठा विद्यते विन्न इष्यते।
वित्ते र्विन्नश्च वित्तश्च भोगे विन्नश्च विन्दतेः॥

## न ध्याख्यापृमूर्छिमदाम्।५७।

ध्यादिभ्यः परस्य निष्ठातस्य नो न। ध्यातः। ध्यातवान्। ख्यातः। ख्यातवान्। पूर्तः। पूर्तवान्। मूर्तः। मूर्तवान्। मत्तः। मत्तवान्। रदाभ्यां संयोगादे रिति च प्राप्तः प्रतिषिध्यते।

## वित्तो भोगप्रत्यययोः।५८।

विदेः परस्य निष्ठा तस्य नत्वाभावो निपात्यते भोगे प्रत्यये च। वित्तं धनम्। धन हि भुज्यत इति भोगोऽभिधीयते। प्रत्यये। वित्तः पुरुषः। प्रतीत इत्यर्थः। प्रतीयत इति प्रत्ययः। भोगप्रत्यययो रिति किम्। विन्नः।

## भित्तं शकलम्।५९।

भिदेः परस्य निष्ठा तस्य नत्वाभावो निपात्यते शकले चेत् । भित्तं तिष्ठति । भिन्नमन्यत् ।

## ऋणमाधमर्ण्ये ।६०।

ऋतेः परस्य निष्ठातस्य नत्वं निपात्यते आधमर्ण्ये । ऋणं ददाति । धारयति वा । आधमर्ण्य इति किम् । ऋतं वक्ष्यामि नानृतम् ।

## न सत्तनिषत्तानुत्तप्रतूर्त्तसूर्त्तगूर्त्तानि छन्दसि ।६१।

न सत्तादिषु नत्वाभावो निपात्यते छन्दसि । न सत्तमञ्जसा । न सन्नमिति भाषायाम् । निषत्तः । निषण्णमिति भाषायामित्यादि ।

## क्विन्प्रत्ययस्य कुः ।६२।

क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः स्यात्पदान्ते 'स्पृशोऽनुदके क्विन्' । घृतस्पृक् ।

## नशेर्वा ।६३।

नशेः कवर्गान्तादेशः पदान्ते वा । जीवनक् । जीवनट् । जीवानां नाश इत्यर्थः ।

## मो नो धातोः ।६४।

मान्तस्य पदस्य धातोर्नः स्यात् । प्रशान् । अनुनासिकस्य क्विझलो रिति दीर्घत्वम् । नत्वस्यासिद्धत्वान्नलोपो न भवति । म इति किम् । भित् । धातोरिति किम् । इदम् । पदस्येत्येव । प्रतामौ ।

## म्वोश्च ।६५।

मान्तस्य धातोर्नो मवयोः । अगन्म तमसः पारम् । गमे र्लिङि बहुलं छन्दसीति शपोलुक् । अगन्व । जगन्वान । विभाषा गमहन विद विशामिति कसाविडागमस्याभावः ।

## ससजुषोरुः ।६६।

पदान्तस्य सस्य सजुषश्च रुः। अग्निरत्र। सजूर्देवेन सवित्रा। जुषेः क्विपि सपूर्वस्य रूपमेतत्।

## अवयाः श्वेतवाः पुरोडाश्च।६७।

सम्बुद्धौ अवयाः श्वेतवाः पुरोडाः एषां दीर्घत्वं निपात्यते। हे अवयाः, श्वेतवाः पुरोडाः।

## अहन्।६८।

पदान्तस्याह्नो रुः। अहोभ्याम्। अहोभिः। नलोपम कृत्वा निर्देशो ज्ञापकः। नलोपाभावो यथा स्यात्। दीर्घाहा निदाघः। (रुत्वविधावह्नो-रूपरात्रिरथन्तरेषूपसंख्यानम्) अहोरूपम्। गतमहो रात्रिरेषा। अहोरात्रः। अहोरथन्तरम्।

## रोऽसुपि।६९।

अह्नो रेफादेशो न तु सुपि। अहर्ददाति। अहर्भुङ्क्ते। असुपीति किम्। अहोभ्याम्।

## अम्नरूधरवरित्युभयथा छन्दसि।७०।

अम्न आदीनांरुरेफौ छन्दसि। अम्नरेव। अम्न एव। ऊधरेव। ऊध एव। अवरेव। अव एव। (छन्दसि भाषायाश्च प्रचेतसः राजन्युपसंख्यानं कर्तव्यम्) प्रचेतो राजन्। प्रचेता राजन्। (अहरादीनां पत्यादिषूपसंख्यानम्) अहर्पतिः। अहःपतिः। अहः पतिः। अहर्पुत्रः। अहः पुत्रः। अहः पुत्रः। गीर्पतिः। गीः पतिः गीः पतिः। एवं धूः।

## भुवश्च महाव्याहृतेः।७१।

महाव्याहृतेर्भुवसूशब्दस्यरुरेफौ वा छन्दसि। भुवरित्यन्तरिक्षम्। भुव इत्यन्तरिक्षम्।

## वसुस्रंसुध्वंस्वनडुहां दः।७२।

पदस्य सान्तस्य वस्वन्तस्य स्रंसादेश्च दः। विद्वद्भ्याम्। उखा-

स्रद्भ्याम् । पर्णध्वद्भ्याम् । अनडुद्भ्याम् । स इत्येव । विद्वान् । पदस्येत्येव । विद्वांसौ ।

## तिप्यनस्तेः । ७३ ।

अस्तिभिन्नस्य सान्तस्य दस्तिपि । अचकाद्भवान् । तिपीति किम् । चकास्तेः क्विप् । चकाः । अनस्तेरिति किम् । आप एवेद सलिल सर्वमाः । आ इति अस्तेर्लङि तिपि बहुलं छन्दसीति ईड् न कृतः ।

## सिपि धातोरुर्वा । ७४ ।

सान्तस्य धातोः पदस्य रुर्वा सिपि । अचकास्त्वम् । अचकास्त्वम् ।

## दश्च । ७५ ।

दान्तस्य धातोः पदस्य सिपि रुर्वा । अभिनस्त्वम् । अभिनत्त्वम् ।

## र्वोरुपधाया दीर्घ इकः । ७६ ।

पदस्य रेफवान्तस्य धातोरुपधाया इको दीर्घः । गीः । धूः । वग्रहणमुत्तरार्थम् । उपधाग्रहणं किम् । अबिभर्भवान् । अभ्यासेकारस्य माभूत् । इक इति किम् । अत्र व प्रत्युदाहरणे मशब्दाकारस्य माभूत् । धातोरित्येव । अग्निः । पदस्येत्येव । गिरौ ।

## हलि च । ७७ ।

रेफ वान्तस्य धातोरुपधाया इकोदीर्घो हलि । आस्तीर्णम् । दीव्यति । धातोरित्येव । दिवमिच्छति । दिव्यति । इक इत्येव । स्मर्य्यते ।

## उपधायाञ्च । ७८ ।

धातोरुपधाभूतौ यौ रेफवकारौ तयोरुपधाया इको दीर्घो हलि । हूर्च्छिता । तूर्विता । हलीत्येव । चिरि, जिरि । चिरिणोति । जिरिणोति । इह कस्मान्न भवति । रीगतौ । रिर्यतुः । व्रीगत्यादिषु । विव्यतुः । यणादेशस्य स्थानिवद्भावात् असिद्धत्वाच्च बहिरङ्ग लक्षण त्वेन हल्परौ रेफवकारौ न भवतः ।

## नभकुर्छुराम् । ७९ ।

रेफवान्तस्य भसंज्ञकस्य कुर्छु रोश्चोपधाया इको न दीर्घः । धुर्य्यः । दिव्यम् । कुर्यात् । छुर्यात । रेफवकाराभ्यां भविशेषणं किम् । प्रति दीव्ना ।

## अदसोऽसेर्दादुदोमः । ८० ।

असान्तस्यादसोदात्परस्य–उकारो दस्य च मः । अमुम् । अमू । अमून् । भाव्यमानेनाप्युकारेण सवर्णानां ग्रहण मिष्यते । इत्येक मात्रिकस्य मात्रिको द्विमात्रिकस्य द्विमात्रिक आदेशो भवति । असेरिति किम् । अद इच्छति अदस्यति । ( अदसोऽनोस्रे इति वक्तव्यम् ) ओकाररेफयोरपि प्रतिषेधो यथा स्यात् । अदोऽत्र । अदस्यति । अदः । तदर्थं केचित् सूत्रं वर्णयन्ति । अः सेर्यस्य सोऽयमसिः । यत्र सकारस्य अकारः क्रियत इति । तेन त्यदाद्यत्वविधान एतत् अन्यत्र न भवितव्यमेवेति । अदद्र्या देशे कथम्—

अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् ।

केचिदन्त्य सदेशस्य नेत्येके ऽसेर्हि दृश्यते । इति । यैरसेरिति सकारस्य प्रतिषेधः क्रियते, अन्त्यबाधेऽन्त्यसदेशस्य इति च परिभाषा नाश्रीयते, तेषामुभयोरपि मुत्वेन भाव्यम् । अमुमुयङ् । अमुमुयञ्चौ । यथा चलीक्लृप्यते इति लत्वम् । ये तु परिभाषा माश्रयन्ति तेषामन्त्यसदेशस्यैव भवितव्यम् । अदमुयङ् । येषांतुत्यदाद्यत्वविषय एव मुत्वेन भवितव्य मिति दर्शनं तेषामत्र न भवितव्यम् अदद्र्यङ् । दादिति किम् । अलोऽन्त्यस्य माभूत । अमुया । अमुयोः ।

## एत ईद्बहुवचने । ८१ ।

अदसोदात्परस्यैत ईद्बहुवचने । अमी । अमीभिरित्यादि ।

## वाक्यस्य टेःप्लुत उदात्तः । ८२ ।

एतत्त्रयमधिक्रियत आपादपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामो वाक्यस्य, टेः, प्लुत इति एवं तद् वेदितव्यम् । वक्ष्यति । प्रत्यभिवादे-

ऽशूद्र' इति । अभिवादये देवदत्तोऽहम् भोः । आयुष्मानेधि देवदत्त ३ । पदाधिकारोऽनुवर्तत एव । टिग्रहणं व्यञ्जनान्तस्यापि टेरचः प्लुतो यथा स्यात् । अग्नि चि ३ दिति । वाक्यग्रहण मनन्त्यस्य पदस्य प्लुत निवृत्त्यर्थम् ।

## प्रत्यभिवादेऽशूद्रे । ८३ ।

अशूद्रविषयक प्रत्यभिवादे वाक्यस्य टेः प्लुत उदात्तः । अभिवादये देवदत्तोऽहं भोः । आयुष्मानेधि देवदत्त ३ । ( अशूद्रस्त्र्यसूयकेष्विति, वाच्यम् ) अभिवादये तुषजकोऽहंभोः । आयुष्मानेधि तुषजक । अभिवादये गार्गी अह भोः । आयुष्मती भव गार्गि । अभिवादये स्थाली अहं भोः । आयुष्मानेधि स्थालिन् । ( भो राजन्यविशांवेति वक्तव्यम् ) अभिवादये देवदत्तोऽहं भोः । आयुष्मानेधि देवदत्त भोः३ । भोः वा । अभिवादये इन्द्रवर्म्माहं भोः । आयुष्मानेधि इन्द्रवर्मा ३न् । वर्म्मन् वा । अभिवादये इन्द्रपालितोऽहं भोः । आयुष्मानेधीन्द्रपालिता ३ । पालित वा । अपर आह सर्वस्यैवनाम्नः प्रत्यभिवादने भोः शब्द आदेशो वा वक्तव्यः ) अभिवादये देवदत्तोऽहं भोः । आयुष्मानेधि भोः ३ । आयुष्मानेधि देवदत्ता ३ इति वा ।

## दूराद्धूते च । ८४ ।

दूरात्सम्बोधने वाक्यस्य टेः प्लुतः सचोदात्तः । आह्वानं हूतं शब्देन संबोधनम् । हूत ग्रहणं च सम्बोधन मात्रोपलक्षणार्थम् । तेन यत्राह्वानं नास्ति तत्रापि प्लुति र्भवति । यत्र प्राकृतात् प्रयत्नात् यत्न विशेषे आश्रीयमाणे शब्दः श्रूयते तद्दूरम् ।

## हैहेप्रयोगेहैहयोः । ८५ ।

दूरात् सम्बोधने हैहे प्रयोगे हैहयोरेव प्लुत उदात्तः । है३देवदत्त । देवदत्तहै३ । हे३ देवदत्त । देवदत्त हे ३ ।

## गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् । ८६ ।

ऋद्भिन्नस्यानन्त्यस्यान्त्यस्यचैकैकस्य गुरोर्वा प्लुतः । दे३वदत्त ।

देवद३त्त। देवदत्त ३। देवदत्त। गुरोरिति किम्। वकारात् परस्य माभूत्। अनृत इति किम्। कृष्णामि३त्र। कृष्णामित्र ३। एकैक ग्रहणं पर्य्यायार्थम्। प्राचामिति ग्रहणं विकल्पार्थम् आयुष्मानेधि देवदत्त।

## ओमभ्यादाने। ८७।

प्रारम्भे ओम् शब्दस्य प्लुतः। ओ३म्—अग्निमीले पुरोहितम्। अभ्यादानं प्रारम्भः। अभ्यादान इति किम्। ओमित्येतदक्षर मुद्गीथ मुपासीत।

## ये यज्ञकर्मणि। ८८।

यज्ञकर्मणि ये—इति प्लुतो भवति। ये३ यजामहे।

## प्रणवष्टेः। ८९।

यज्ञकर्मणि वाक्यस्यटेः प्रणव आदेशः। अपां रेतांसि जिन्वतो३म्। देवान् जिगाति सुम्नयो३म्।

## याज्यान्तः। ९०।

यज्ञकर्मणि ये याज्या मन्त्रास्तेषामन्त्यस्य टेः प्लुतः। स्तोमैर्विधेमाग्नये ३।

## ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः। ९१।

यज्ञकर्मणि ब्रूह्यादेरादेः प्लुतः। अग्नयेऽनुब्रू३हि। अग्नये गोमयान्प्रे३ष्य। अस्तुश्रौ३षट्। सोमस्याग्नेवीहीवौ३षट्। अग्निमा३वह।

## अग्नीत्प्रेषणे परस्य च। ९२।

अग्नीधः प्रेषणेपरस्यादेश्च प्लुतः। ओ३श्रा३वय।

## विभाषा पृष्टप्रतिवचने हेः। ९३।

पृष्टप्रतिवचने हेर्वा प्लुतः। अकार्षीः कटं देवदत्त। अकार्षं हि ३। अकार्षं हि।

## निगृह्यानुयोगे च। ९४।

स्वमतात्प्रच्यावनाविष्करणे वाक्यस्य टेः प्लुतो वा। अनित्यः शब्द इत्यात्थ३। अनित्यः शब्द इत्यात्थ।

## आम्रेडितंभर्त्सने। ९५।

भर्त्सनेआम्रेडितस्य टेः प्लुतः। चौर चौर३ घातयिष्यामि त्वा। (भर्त्सने पर्य्यायेणेति वक्तव्यम्) चौर३ चौर। चौर चौर ३।

## अङ्गयुक्तंतिङाकांक्षम्। ९६।

भर्त्सने अङ्गयुक्तस्य साकांक्षस्य तिङन्तस्य टेः प्लुतः। अङ्गकूज इदानीं ज्ञास्यसि।

## विचार्य्यमाणानाम्। ९७।

विचार्य्यमाणानां वाक्यानां टेः प्लुतः। होतव्यं दीक्षितस्य ग्रहा ३इ। होतव्यं न होतव्यमिति विचार्य्यते।

## पूर्वन्तु भाषायाम्। ९८।

भाषायां विचार्यमाणानां वाक्यानां पूर्वस्यैव टेः प्लुतः। अहिनु३ रज्जुर्नु। लोष्टोनु३ कपोतो नु।

## प्रतिश्रवणे च। ९९।

स्वीकारे प्रतिषेधे श्रवणाभिमुख्ये च वाक्यस्य टेः प्लुतः। गां मे देहि भोः। अहं ते ददामि३। व्यापक ईश्वरो भवितुमर्हति ३। देवदत्त भोः किमात्थ ३।

## अनुदात्तं प्रश्नान्ताभिपूजितयोः। १००।

प्रश्नान्तेऽभिपूजिते च वाक्यस्य टेः प्लुतः अनुदात्तः। अगमः३ पूर्वा३न् ग्रामा३न्। अग्निभूत३इ। पटा३उ। शोभनः खल्वसि माणवक३।

## चिदितिचोपमार्थे प्रयुज्यमाने। १०१।

उपमानार्थे चिदिति प्रयुज्यमाने वाक्यस्य टेः प्लुतः अनुदात्तः। अ-

ग्निचिद्भाया३इ। अग्निरिव भायादित्यर्थः।

## उपरिस्विदासीदिति च।१०२।

उपरिस्विदासीदित्यस्य टेः प्लुतः अनुदात्तः। अधः स्विदासी३त्। उपरिस्विदासी३त्।

## स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु।१०३।

आम्रेडिते पूर्वस्य टेः प्लुतः स्वरितोऽसूयादिषु। माणवक३ माणवक-वृथा ते पाण्डित्यम्। माणवक३ माणवक शोभनः खल्वसि। माणवक३ माणवक इदानीं ज्ञास्यसि जाल्म। याष्टीक३ याष्टीक वृथा ते यष्टिः (असूयादिषु वा वचनम्) माणवक माणवकेत्यादि।

## क्षियाशीःप्रैषेषु तिङा काङ्क्षम्।१०४।

आकाङ्क्षं यत्तिङन्तं तस्य प्लुतः स्वरितः क्षियादिषु। स्वयं रथेन याति३ उपाध्यायं पदातिं गमयति। स्वयं ओदनं ह भुङ्क्ते३ उपाध्यायं सक्तून्पाययति। सुतांश्च लप्सीष्ट३ धनञ्च तात। कटं कुरु३ ग्रामं च गच्छ।

## अनन्तस्यापिप्रश्नाख्यानयोः।१०५।

प्रश्ने आख्याने च अनन्त्यस्यान्त्यस्य च पदस्य टेः प्लुतः स्वरितः। अगमः३ पूर्वा३न् ग्रामा३न्। अग्निभूत३इ। आख्याने। अगमं३ पूर्वा३न् ग्रामा३न् भोः३।

## प्लुतावैच इदुतौ।१०६।

ऐचः प्लुत प्रसङ्गे इदुतौ प्लुतौ भवतः। ऐ३तिकायन। औ३पगव।

## एचोऽप्रगृह्यस्यादूराद्धूतेपूर्वस्यार्द्धस्यादुत्तरस्येदुतौ।१०७।

अदूराद्धूतेऽप्रगृह्यस्यैचः पूर्वार्द्धस्यात्सच प्लुतः स्यादुत्तरस्येदुतौ। (प्रश्नान्ताभिपूजितं विचार्यमाण प्रत्यभिवादयाज्यान्तेष्विति व-

क्तव्यम् ) अगमः ३ पूर्वा३न् ग्रामा३न् अग्निभूत३इ, पट३उ । भद्रं करोषि अग्निभूत३इ । होतव्यं दीक्षितस्य गृहा३इ । आयुष्मानेधि अग्निभूत३इ । स्तोमैर्विधेमाग्नय३इ । ( एचः प्लुतविकारे पदान्तग्रहणम् ) भद्रं करोषि गौः । ( आमन्त्रिते छन्दस्युपसंख्यानम् ) अग्ना३इ पत्नीवः ।

## तयोर्य्वावचि संहितायाम् । १०८ ।

तयोरिकारोकारयोर्य्यौस्तोऽचि संहितायाम् । अग्ना३ याशा । पटा३ वाशा । अग्ना३यिन्द्रम् । पटा३वुदकम् ॥

इत्यष्टमाध्यायस्य द्वितीयः पादः ।

# अथाष्टमाध्यायस्य तृतीयपादारम्भः।

## मतुवसोरुसम्बुद्धौ छन्दसि ।१।

मत्वन्तस्य वस्वन्तस्य च रुः सम्बुद्धौ छन्दसि । इन्द्रमरुत्व इह पाहि सोमम् । हरिवो मेदिनं त्वा । मीढ्वस्तोकाय तनयाय । ( मतुवसोरादेशे वन उपसंख्यानं कर्तव्यम् ) यस्त्वायन्तं वसुनाप्रातरित्वः ( भवद् भगवद् अघवदित्येतेषां विभाषारुर्वक्तव्यः ) ओच्चावस्यवक्तव्यः ) । भोः । भगवन् । भगोः भगवन् । अघोः । अघवन् ।

## अत्रानुनासिकः पूर्वस्य तु वा ।२।

रु प्रकरणे रोः पूर्वस्यानुनासिकोवेत्यधिक्रियते । वक्ष्यति 'समः सुटि' संस्कर्त्ता ।

## आतोऽटि नित्यम् ।३।

रोः पूर्वस्याकारस्यानुनासिको नित्यमटि । महाँ असि । महाँइन्द्रोय ओजसा ।

## अनुनासिकात्परोऽनुस्वारः ।४।

अनुनासिकं विहाय रोःपूर्वस्मात्परोऽनुस्वारः । संस्कर्ता । संस्कर्तव्यम् ।

## समःसुटि ।५।

समोरुःसुटि संहितायां विषये । सँस्स्कर्ता । संस्स्कर्ता । सँस्स्कर्त्ता । सम इति किम् । उपस्कर्त्ता । सुटीति किम् । सकृतिः । ( सम्पुंकानां सोवक्तव्यः ) संस्स्कर्त्ता । पुंस्कामा । कांस्कानिति ।

## पुमः खय्यम्परे ।६।

पुमोरुरम्परेखयि । पुँस्पुत्रः । पुंस्पुत्रः । खयीति किम् । पुंदासः । अम्पर इति किम् । पुंक्षीरम् । परग्रहणं किम् । पुमाख्यः ।

## नश्छव्य प्रशान् ।७।

प्रशान्भिन्नस्य नान्तस्य पदस्यरुरम्परेछवि । भवाँश्छादयति । भवांश्चिनोति । भवाँष्टीकते । छवीति किम् । भवान् करोति । अप्रशानिति किम् । प्रशाञ्छादयति । अपर इत्येव । भवान् त्सरुकः ।

## उभयथर्क्षु ।८।

ऋक्षुपूर्वोक्तं वा । तस्मिंस्त्वादधाति । तस्मिन्त्वादधाति ।

## दीर्घादटि समानपादे ।९।

दीर्घात्परस्य पदान्तस्य नस्यरुर्वाऽटिसमानपादे । परिधींरति । देवां अच्छादीव्यत् । परधींरति ।

## नॄन् पे ।१०।

नॄ नित्यस्यवा रुःपकारे । नॄँः पाहि इत्यादि । प इति किम् । नॄन् भोजयति ।

## स्वतवान्पायौ ।११।

स्वतवानित्यस्य रुःपायुशब्दे । स्वतवाँः पायुरग्ने ।

## कानाम्रेडिते ।१२।

कानित्यस्यरुराम्रेडिते । काँस्कान् । कांस्कान् । अस्य कस्कादिषु पाठो द्रष्टव्यः । तेन 'कुप्वोः कपौ च' इति न भवति । पूर्वेषु सूत्रेषु गतस्य रोरत्रानभिसम्बन्धः । आम्रेडित इति किम् । कान् कान् पश्यति । एकोऽच कुत्सायाम् ।

## ढोढे लोपः ।१३।

ढस्यलोपोढे । लीढम् । गूढम् । ष्टुत्वस्याच सिद्धत्वमाश्रयाद् द्रष्टव्यम् ।

## रोरि ।१४।

रेफस्य लोपो रेफे । दूरक्तम् । अग्नीरथः ।

## खरवसानयोर्विसर्जनीयः ।१५।

खरि अवसाने च पदान्तस्य रस्य विसर्गः । वृक्षश्छादयति । वृक्षः । खरवसानयो रिति किम् । अग्नि र्नयति । इह नृकुट्यां भवः नाकुटः । नृपते रपत्यं नार्पत्यः । इति । वृद्धे र्बहिरङ्गलक्षण त्वात्तदाश्रयस्य रेफस्यासिद्धं बहिरङ्ग मित्यसिद्धत्वाद्विसर्जनीयो न भवति ।

## रोःसुपि ।१६।

रोरेवविसर्गः सुपि नान्यस्य । पयःसु । तेनेहन। गीर्षु।

## भो भगो अघो अपूर्वस्य योऽशि ।१७।

भो भगो अघो अवर्णपूर्वस्यरोर्यःस्यादशि । भो अत्र । भगो अत्र । अघो अत्र । क आस्ते । भो भगो अघो अपूर्वस्येति किम् । अग्निरत्र । अश् ग्रहणं किम् । वृक्षः । नैतदस्ति । संहिताया मिति वर्तते । तर्हि अश् ग्रहणमुत्तरार्थम् । हलि सर्वे षा मित्ययं लोपोऽशि हलि यथा स्यात् । इह माभूत् । वृक्षं वृश्चतीति वृक्ष वृट ,तमाचष्टे यः स वृक्षवयति । वृक्षवयते रप्रत्ययः । वृक्षव् करोति । अथ तत्र वाश्ग्रहण कस्मान्न कृतम् । उत्तरार्थम् । मोऽनुस्वार इति हल् मात्रे यथा स्यात् । व्योर्लघु प्रयत्नतरः शाकटायनस्य लोपः शाकल्यस्येति । तच्च वृक्षव् करोतीत्यत्र माभूदित्यश् ग्रहणम् ।

## व्योर्लघु प्रयत्नतरः शाकटायनस्य ।१८।

भो आदिपूर्वयोर्व्योः पदान्तयोर्लघुप्रयत्नतरः(१) स्यादशि शाकटायनस्य मते । भोयत्र । भगोयत्र । अघोयत्र । कयास्ते । क यास्ते । अस्मायुद्धर । अस्मा उद्धर । लघुप्रयत्न तरत्वमुच्चारणे स्थान करण शैथिल्यम् । स्थानं तात्वादि । करणं जिह्वामूलादि । तयो रुच्चारणे मन्द प्रयत्नता ।

---

[ १ ] उच्चारणे स्थानकरणशैथिल्यं तत्त्वम् ।

## लोपः शाकल्यस्य ।१६।

अवर्ण पूर्वयोः पदान्तयोर्वयोर्लोपोवाऽशि । क आस्ते । कयासते । असा आदित्यः । असावादित्यः । काक आस्ते । काकयास्ते ।

## ओतो गार्ग्यस्य ।२०।

पूर्वस्यैवापवादः । ओतः परस्य यस्य लोपोऽशि । भो अत्र । भगो अत्र । अघो अत्र । गार्ग्य ग्रहणं पूजार्थम् ।

## उञि च पदे ।२१।

अवर्ण पूर्वयोः पदान्तयोर्व्योर्लोप उञिपदेपरे । स उ एकविंशतिः । पद इति किम् । तन्त्र उतम्, तन्त्र युतम् । वेञः संप्रसारणे कृते उञिति भूतपूर्वेण ञकारेण शक्यते प्रतिपत्तुम् ।

## हलि सर्वेषाम् ।२२।

भो भगो अघो अवर्ण पूर्वस्य यस्य लोपो हलि सर्वेषामाचार्य्याणां मते । भो हसति । भगो हसति । अघो हसति । वृक्षा हसन्ति । सर्वेषां ग्रहणं शाकटायनस्यापि यथा स्यात् लोपः, लघुप्रयत्नतरो माभूदिति ।

## मोऽनुस्वारः ।२३।

मान्तस्य पदस्य अनुस्वारो हलि । वनं याति । हलीत्येव । त्वमत्र । पदान्तस्येत्येव । गम्यते ।

## नश्चापदान्तस्य झलि ।२४।

अपदान्तस्यनस्य मस्य चानुस्वारो झलि । पयांसि । आक्रंस्यते । अपदान्तस्येति किम् । राजन् भुङ्क्ष्व । झलीति किम् । रम्यते ।

## मो राजि समः क्वौ ।२५।

समो मस्य मः क्विबन्तेराजि । मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थम् । सम्राट् । राजीति किम् । संयत् । सम इति किम् । किं राट् । क्वाविति किम् । संराजिता ।

## हे मपरे वा ।२६।

मपरे हकारे मस्य मो वा। किं ह्मलयति। किम् ह्मलयति। ( यवल परे यवला वा ) किं य्ँह्यः, किंह्यः। किव्ँह्वलयति। किंह्वलयति। किल्ँह्लादयति। किं ह्लादयति।

## नपरे नः।२७।

नपरेहकारेमस्य नो वा। किन्ह्नुते। किं ह्नुते। कथ ह्नुते। कथन् ह्नुते।

## ङ्णोः कुक्टुक्शरि ।२८।

पदान्तयो, ङ्णोः कुक्टुकौ वा स्तः शरि। प्राङ्क्शेते। प्राङ्शेते। प्राङ्क्षष्ठः। प्राङ्षष्ठः। प्राङ्क्साये। प्राङ्साये। वण्ट्शेते। वण्शेते।

## डः सि धुट्।२९।

डान्तात्पदात्परस्य सस्य धुड्वा। मधुलिट्त्स्मरति। मधुलिट् स्मरति। परादिकरणं, नपदान्ता ट्टोरनामिति ष्टुत्वप्रतिषेधार्थम्।

## नश्च ।३०।

नान्तात्पदात्परस्य सस्य धुड्वा। भवान्त्साये। भवान्साये। धुटश्चुत्वस्य चासिद्धत्वान्नश्छव्यप्रशानिति रुत्वं न भवति।

## शि तुक्।३१।

नान्तस्य पदस्य तुग्वा शे। भवाञ्छेते(१)।

## ङमो ह्रस्वादचि ङमुण्नित्यम्।३२।

ह्रस्वात्परोयो ङम् तदन्तात्परस्याचो नित्यं ङमुट्। ङणनेभ्यो यथा संख्यं ङणना भवन्ति। प्रत्यङ्ङास्ते। वण्णास्ते। कुर्वन्नास्ते। ङम इति

---

१ तुगादि विकल्पाद्रूपचतुष्टयम्।

किम् । त्वमास्से । ह्रस्वादिति किम् । प्राङास्ते । अचीति किम् । प्रत्यङ् करोति ।

## मय उञो वो वा । ३३ ।

मयः परस्य उञो वो वा स्यादचि । शम्वस्तु वेदिः । शमु अस्तु वेदिः । प्रगृह्यत्वादुञः प्रकृति भावे प्राप्ते वकारो विधीयते । तस्या सिद्धत्वा द्धलीति मोऽनुस्वारो न भवति ।

## विसर्जनीयस्य सः । ३४ ।

विसर्जनीयस्य सः खरि । वृक्षश्छादयति ।

## शर्प्परे विसर्जनीयः । ।

शर्प्परे खरि विसर्जनीयः । पुरुषः त्सुरुः । नेति वक्तव्ये विसर्जनीयस्य विसर्जनीयकरणं विकार निवृत्त्यर्थम् । तेन जिह्वामूलीयोपध्मानीयौ न भवतः ।

## वा शरि । ३६ ।

विसर्गस्य विसर्गो वा शरि । वृक्षः शेते । वृक्षश्शेते । ( खर्प्परे शरि वा लोपो वक्तव्यः ) वृक्षा स्थातारः । वृक्षाः स्थातारः ।

## कुप्वो ≍क ≍पौ च । ३७ ।

कवर्गे पवर्गे च विसर्गस्य जिह्वामूलीयोपध्मानीयौस्तश्चाद्विसर्गः । वृक्ष≍करोति । वृक्षः करोति । चैत्र≍पचति । चैत्रः पचति । कपावुच्चारणार्थौ जिह्वामूलीयोपध्मानीयावेतावादेशौ ।

## सोपदादौ । ३८ ।

विसर्गस्य सोऽपदाद्योः कुप्वोः । ( पाशकल्प क काम्येषु ) पयस्पाशम् । पयस्कल्पम् । पयस्कम् । पयस्काम्यति ( सोपदादाविस्यनव्ययस्येति वक्तव्यम् ) प्रातः कल्पम् । पुनः कल्पम् । ( रोः काम्ये इति वक्तव्यम् ) रोरेव काम्ये नियमार्थम् । पयस्काम्यति । यशस्काम्यति । नेह गीः काम्यति ।

## इणः षः । ३९ ।

इणः परस्य विसर्गस्य षोऽपदाद्योः कुप्वोः परतः पाश कल्पककाम्येषु परतः । सर्पिष्पाशम् । सर्पिष्कल्पम् । सर्पिष्कम् । सर्पिष्काम्यति । अपदादावित्येव । अग्निः करोति । कुप्वो रित्येव सर्पिस्ते । यजुस्ते । इत उत्तरं स इति इणःष इति च वर्तते तत्र इणः परो यो विसर्जनीयस्तस्य षकारो भवति, अन्यस्य सकारो भवति ।

## नमस्पुरसोर्गत्योः । ४० ।

गतिसंज्ञकयोर्नमस्पुरसोर्विसर्गस्य सः कुप्वोः । नमस्कर्त्ता । नमस्कृत्य । पुरस्कर्ता । पुरस्कृत्य । गत्यो रिति किम् । पूः पुरौ पुरः करोति ।

## इदुदुपधस्य चाप्रत्ययस्य । ४१ ।

इकारोकारोपधस्याप्रत्ययस्य विसर्गस्य षः कुप्वोः । निर् दुर् बहिराविश्चतुर्प्रादुस् । निष्कृतम् । निष्पीतम् । दुष्कृतम् । दुष्पीतम् । ( पुंमुहुसोः प्रतिषेधो वक्तव्यः ) पुंस्कामा । अप्रत्ययस्येति किम् । अग्निः करोति ।

## तिरसोऽन्यतरस्याम् । ४२ ।

तिरसो विसर्गस्य सो वा कुप्वोः । तिरस्कर्ता । तिरः कर्ता । गतेरित्येव । तिरः कृत्वा काण्डं गतः ।

## द्विस्त्रिश्चतुरिति कृत्वोर्थे । ४३ ।

कृत्वोर्थे वर्त्तमानानां द्विरादीनां विसर्गस्य षः कुप्वोः । द्विः करोति । द्विष्करोति । इत्यादि । कृत्वोऽर्थ इति किम् । चतुष्कपालम् ।

## इसुसोः सामर्थ्ये । ४४ ।

इसुसोर्विसर्गस्य षो वा कुप्वोः सामर्थ्ये । सामर्थ्यमिह व्यपेक्षा । सर्पिष्करोति । सर्पिः करोति । यजुष्करोति । यजुः करोति ।

## नित्यंसमासेऽनुत्तरपदस्थस्य । ४५ ।

अनुत्तरपदस्थस्येसुसोर्विसर्गस्य समासे नित्यं षः कुप्वोः । सर्पिष्कुण्डि-

का। धनुष्कपालम्।

## अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ।४६।

अतः परस्यानव्ययस्य विसर्गस्य समासेऽनुत्तरपदस्थस्य नित्यं सः कृकादिषु। अयस्कारः। अयस्कामः। अयस्कंसः। अयस्कुम्भः। अयस्पात्रम्। अयस्कुशा। अयस्कर्णी।

## अधः शिरसी पदे ।४७।

अधः शिरसोरनुत्तरपदस्थस्य विसर्गस्य समासे सः पदशब्दे। अधस्पदम्। शिरस्पदम्। समास इत्येव। अधः पदम्। अनुत्तरपदस्थस्येत्येव। परमशिरः पदम्। अधस्पद मिति मयूरव्यंसकादित्वात् समासः।

## कस्कादिषु च ।४८।

कस्कादिष्विण उत्तरस्य विसर्गस्य षोऽन्यत्र सः कुप्वोः। कस्कः। कौतस्कुतः। सर्पिष्कुण्डिका।

## छन्दसि वाऽप्राम्रेडितयोः ।४९।

विसर्गस्य सो वा प्राम्रेडितभिन्नयो कुप्वोः छन्दसि। अयः पात्रम्। अयस्पात्रम्।

## कः करत्करतिकृधिकृतेष्वनिदितेः ।५०।

अनिदितेर्विसर्गस्य सः क आदिषु छन्दसि। विश्वतस्कः। विश्वतस्करत्। पयस्करति। उरुणस्कृधि। सदस्कृतम्।

## पञ्चम्याः परावध्यर्थे ।५१।

पञ्चम्याविसर्गस्य सोऽध्यर्थे परौ छन्दसि। दिवस्परि प्रथम जज्ञे। हिमवतस्परि। उपरीत्यर्थः।

## पातौ च बहुलम् ।५२।

पञ्चम्या विसर्गस्य बहुलं सः पातौ परे छन्दसि। दिवस्पातु। न च भवति। परिषदः पातु।

## षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु। ५३।

षष्ठ्या विसर्गस्य सः पत्यादिषु छन्दसि। वाचस्पतिं विश्वकर्माणमूतये। दिवस्पुत्राय सूर्य्याय। दिवस्पृष्ठे धावमानं सुपर्णम्। अगन्म तमसस्पारम् इडस्पदे समिध्यसे। सूर्यं चक्षुर्दिवस्पयः। रायस्पोषं यजमानेषु धत्तम्।

## इडाया वा। ५४।

इडाया विसर्गस्य वा सः पत्यादिषु छन्दसि। इडायास्पतिः। इडायाः पतिरित्यादि।

## अपदान्तस्य मूर्द्धन्यः। ५५।

अधिकारोऽयमापादपरिसमाप्तेः। सिषेवेत्यादि।

## सहेः साढः सः। ५६।

साड्रूपस्य सहेः सस्य मूर्द्धन्यः। जलाषाट्। सहेरिति किम्। सह डेन वर्तते सडः स्तस्यापत्यं साडिः। साड् ग्रहणं किम्। यत्रास्यैतद्रूपं तत्र यथा स्यात्। इह माभूत् जलासाहम्। स इति किम्। आकारस्य माभूत्।

## इण्कोः। ५७।

अधिकारोऽयम्। सिषेव। वाक्षु।

## नुम्विसर्जनीयशर्व्यवायेपि। ५८।

इण्कुभ्यां परस्य प्रत्येकं नुमादिव्यवायेऽपि सस्य मूर्धन्यः। सर्पींषि। यजूंषि। हवींषि। सर्पिःषु। सर्पिष्षु।

## आदेशप्रत्यययोः। ५९।

इण्कुभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवस्य च सस्य मूर्धन्यः। सिषेव। सुष्वाप। अग्निषु। वायुषु।

## शासिवसिघसीनाञ्च। ६०।

इण्कुभ्यां शास्यादीनां सस्य मूर्धन्यः। अन्वशिषत्। उषितः। जक्षतुः।

## स्तौतिण्योरेव षण्यभ्यासात् । ६१ ।

अभ्यासेणः परस्य स्तौतेर्ण्यन्तस्य चादेशस्य सस्य मूर्धन्यः षणि । तुष्टूषति । सिषेवयिषति । नियमादिह न । सिसिक्षति । सुसूषति । षणीति किम् । अन्यत्र नियमो माभूत् । सिषेव ।

## सः स्विदिस्वदिसहीनाञ्च । ६२ ।

अभ्यसात्परस्य स्विआदीनांण्यन्तानां सस्य सः षणि । सिस्वेदयिषति । सिस्वादयिषति । सिसाहयिषति । सकारस्य सकारवचनं मूर्धन्यनिवृत्यर्थम् ।

## प्राक्सितादड्व्यवायेऽपि । ६३ ।

सितात्प्राक् अड्व्यवायेऽपि मूर्धन्यः । अभिषुणोति । अभ्यषुणोदित्यादि ।

## स्थादिष्वभ्यासेन चाभ्यासस्य । ६४ ।

उपसर्गात्सुनोतीत्यत्रस्थादिष्वभ्यासव्यवायेऽभ्यासस्य च षत्वम् । अभिषिषेणयिषति । अभितष्ठौ । अभिषिषिक्षति ।

## उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् । ६५ ।

उपसर्गस्थान्निमित्तात्परस्यसुनोत्यादीनां सस्य मूर्धन्यः । अभिषुणोति अभ्यषुणोत् । अभिषुवति । अभिष्यति । अभिष्टौति । अभ्यष्टौत् । अभिष्टोभते । अभिष्ठास्यति । अभिषेणयति । अभ्यषेणयत् । अभिषेधति । अभिषिञ्चति । अभिषजति । अभिष्वजते । उपसर्गादिति किम् । दधि सिञ्चति ।

## सदिरप्रतेः । ६६ ।

प्रतिभिन्नोपसर्गात् सदेः सस्य मूर्धन्यः । निषीदति । न्यषीदत् । अप्रतेरिति किम् प्रतिसीदति ।

## स्तन्भेः । ६७ ।

उपसर्गस्थान्निमित्तात् परस्य स्तम्भेः सस्य मूर्धन्यः। अभ्यष्टभ्नात्। अप्रतेरितीह नानुवर्तते। तेनैतदपि भवति। प्रतिष्टभ्नाति। प्रत्यष्टभ्नात्।

## अवाच्चालम्बनाविदूर्ययोः ॥ ६८ ॥

अवात्परस्यस्तम्भेः सस्य मूर्धन्यः आलम्बने आविदूर्ये च। अवष्टभ्यास्ते। अवष्टब्धा सेना। आलम्बनाविदूर्ययोरिति किम्। अवस्तब्धो वृषलः शीतेन।

## वेश्च स्वनो भोजने ॥ ६९ ॥

वेरवाच्च परस्य भोजने वर्तमानस्य स्वनेः सस्य मूर्धन्यः। विष्वणति। व्यष्वणत्। अवष्वणति। अवाष्वणत्। भोजन इति किम्। विस्वनति मृदङ्गः।

## परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् ॥ ७० ॥

पर्य्यादिभ्यः सेवत्यादीनां सस्य मूर्धन्यः। परिषेवते। पर्य्यषेवत। निषेवते। विषेवते। परिषितः। निषितः। परिषयः। परिषीव्यति। परिषहते। परिष्करोति। परिष्वजते। पूर्वेणैव सिद्धे स्तुस्वञ्जिग्रहण मुत्तरार्थम्। अड्व्यवाये विभाषा यथा स्यात्। पर्य्यष्टौत्। पर्य्यस्तौत्।

## सिवादीनांवाड्व्यवायेपि ॥ ७१ ॥

पर्य्यादिभ्योऽड्व्यवधानेऽपि सिवादीनां सस्य मूर्धन्यो वा। पर्यषीव्यत्। पर्य्यसीव्यदित्यादि।

## अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ॥ ७२ ॥

अन्वादिभ्योऽप्राणिविषयस्य स्यन्दतेः सस्य वा मूर्धन्यः। अनुष्यन्दते। विष्यन्दते। परिष्यन्दते। अभिष्यन्दते। निष्यन्दते। अनुस्यन्दते इत्यादि। अप्राणिष्विति किम्। अनुस्यन्दते मत्स्य उदके। अप्राणिष्विति

पर्युदासो न प्रसज्य प्रतिषेधः । प्राण्यप्राणिविषयस्यापि स्यन्दते रयं विकल्पः । अनुष्यन्देते मत्स्योदके । अनुस्यन्देते वा ।

## वेःस्कन्देरनिष्ठायाम् । ७३ ।

वेः परस्य स्कन्देः सस्य वा मूर्धन्यः न तु निष्ठायाम् । विष्कन्ता । विस्कन्ता । अनिष्ठाया मिति किम् । विस्कन्नः ।

## परेश्च । ७४ ।

परेः परस्य स्कन्देः सस्य वा मूर्धन्यः । परिष्कन्ता । परिस्कन्ता । परिष्कण्णः । परिस्कन्नः । पृथग्योगकरणसामर्थ्यात् अनिष्ठायामिति नानुवर्तते । परिष्कण्णः । परिस्कन्नः ।

## परिस्कन्दः प्राच्यभरतेषु । ७५ ।

प्राच्यभरतेषु परिस्कन्द इत्यत्र षत्वाभावो निपात्यते । परिष्कन्दोऽन्यत्र ।

## स्फुरतिस्फुलत्योर्निर्निविभ्यः । ७६ ।

निरादिभ्यः स्फुरतिस्फुलत्योः सस्य वा मूर्धन्यः । निष्फुरति । निस्फुरति । विस्फुरति । विष्फुरति । निष्फुलति । निस्फुलति ।

## वेःस्कभ्नातेर्नित्यम् । ७७ ।

वेः परस्य स्कभ्नातेः सस्य मूर्धन्यः नित्यम् । विष्कभ्नाति ।

## इणः षीध्वंलुङ्लिटां धोऽङ्गात् । ७८ ।

इणन्तादङ्गात्परस्य षीध्वमो लुङ्लिटोश्च धस्य मूर्धन्यः । च्योषीढ्वम् । प्लोषीढ्वम् । अच्योढ्वम् । चकृढ्वे । षीध्वं लुङ् लिटामिति किम् । स्तुष्वे । अङ्गादिति किम् । परिवेविषीध्वम् ।

## विभाषेटः । ७९ ।

इणः परो य इट् ततः परस्य षीध्वमो लुङ् लिटोश्च धस्य मूर्धन्यः । लविषीढ्वम् । लविषीध्वम् । पविषीढ्वम् । पविषीध्वम् । अलविढ्वम् । अलविध्वम् । लुलुविध्वे । लुलुविढ्वे । इण इत्येव । आसिषीध्वम् ।

## समासेऽङ्गुलेः सङ्गः । ८० ।

अङ्गुलेः परस्य सङ्ग सस्य मूर्धन्यः समासे । अङ्गुलेः सङ्गः अङ्गुलिषङ्गः । समासे इति किम् । अङ्गुलेः सङ्गं पश्य ।

## भीरोः स्थानम् । ८१ ।

भीरोः परस्य स्थान सस्य मूर्धन्यः समासे । भीरुष्ठानम् । समास इत्येव । भीरोः स्थानं पश्य ।

## अग्नेः स्तुत्स्तोमसोमाः । ८२ ।

अग्नेः परस्य स्तु दादीनां सस्य मूर्धन्यः । अग्निष्टुत् । अग्निष्टोमः । अग्नीषोमौ । ( अग्नेर्दीर्घात्सोमस्य ) तेनेहन अग्निसोमौ माणवकौ । समास इत्येव । अग्नेः सोमः ।

## ज्योतिरायुषः स्तोमः । ८३ ।

ज्योतिरायुर्भ्यां परस्य स्तोम सस्य मूर्धन्यः समासे । ज्योतिष्टोमः । आयुष्टोमः । समास इत्येव । ज्योतिः स्तोमं दर्शयति ।

## मातृपितृभ्यां स्वसा । ८४ ।

मातृ पितृभ्यां परस्य स्वसृ सस्य मूर्धन्यः समासे । मातृष्वसा । पितृष्वसा ।

## मातुः पितुर्भ्यामन्यतरस्याम् । ८५ ।

मातुः पितुर्भ्यां परस्य स्वसृसस्य वा मूर्धन्यः समासे । मातुःष्वसा । मातुःस्वसा । पितुःष्वसा । पितुःस्वसा । समास इत्येव । वाक्ये माभूत् । मातुः स्वसा ।

## अभिनिसस्तनः शब्दसंज्ञायाम् । ८६ ।

अभिनिसः परस्य स्तनः सस्य वा मूर्धन्यः शब्द संज्ञायाम् । अभिनिष्टानो वर्णः । अभिनिष्टानो विसर्जनीयः । अभिनिस्तान इति वा । शब्द संज्ञाया मिति किम् । अभिनिस्तनति मृदङ्गः ।

## उपसर्गप्रादुर्भ्यामस्तिर्यच्परः । ८७ ।

उपसर्गेणः प्रादुषश्च परस्य अस्तेः सस्य मूर्धन्यो यकारेऽचि च परे। अभिषन्ति । निषन्ति । विषन्ति । प्रादुःषन्ति । निष्यात् । प्रादुःष्यात् । यच् पर इति किम् । निस्तः । प्रादुस्तः ।

## सुविनिर्दुर्भ्यः सुपिसूतिसमाः । ८८ ।

स्वादिभ्यः सुप्यादीनां सस्य मूर्धन्यः । सुषुप्तः । विषुप्तः । निषुप्तः । दुःषुप्तः । सुषूतिः । निषूतिः । निःषूतिः । दुःषूति । सुषमम् । विषमम् । निःषमम् । दुःषमम् ।

## निनदीभ्यां स्नातेः कौशले । ८९ ।

निनदीभ्यां परस्य स्नातेः सस्य मूर्धन्यः कौशले । निष्णातः कटकरणे नद्यांस्नातीति नदीष्णः । सुपिस्थ इत्यत्र सुपीति योग विभागात् क प्रत्ययः। कौशल इति किम् । निष्णातः । नद्यां स्नातो नदीस्नातः ।

## सूत्रं प्रतिष्णातम् । ९० ।

प्रतिष्णातमितिनिपात्यते सूत्रञ्चेत् । प्रतिष्णातं सूत्रम् । शुद्ध मित्यर्थः प्रतिस्नात मित्येवान्यत्र ।

## कपिष्ठलो गोत्रे । ९१ ।

गोत्रे कपिष्ठल इति निपात्यते । कपिष्ठलोनाम यस्य सः कापिष्ठलिः पुत्रः । गोत्र इति किम् । कपेः स्थलं कपिस्थल मन्यत्र ।

## प्रष्ठोऽग्रगामिनि । ९२ ।

अग्रगामिनि प्रष्ठ इति निपात्यते । प्रतिष्ठत इति प्रष्ठोऽश्वः । अग्रतोगच्छतीत्यर्थः । अग्रगामिनीति किम् । प्रस्थे हिमवतः पुण्ये । प्रस्थो व्रीहीणाम् ।

## वृक्षासनयोर्विष्टरः । ९३ ।

वृक्षासनयोर्विष्टर इति निपात्यते । विष्टरो वृक्षः । विष्टरमासनम् । वृक्षासनयो रिति किम् । औलपिदाक्यस्य विस्तरः ।

## छन्दोनाम्नि च । ९४ ।

छन्दोनाम्नि विपूर्वात्स्तृणातेरपि षत्वं निपात्यते। विष्टारपङ्क्तिश्छन्दः। विष्टारो बृहती छन्दः । छन्दोनाम्नीति किम् । पटस्य विस्तरः ।

## गवियुधिभ्यां स्थिरः । ९५ ।

गवियुधिभ्यां स्थिरस्य सस्य मूर्धन्यः । गविष्ठिरः । युधिष्ठिरः ।

## विकुशमिपरिभ्यः स्थलम् । ९६ ।

व्यादिभ्यः स्थलस्य सस्य मूर्धन्यः । विष्ठलम् । कुष्ठलम् । शमिष्ठलम् । परिष्ठलम् ।

## अम्बाऽम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः । ९७ ।

अम्ब, आम्ब, गो, भूमि, सव्य, अप, द्वि, त्रि, कु, शेकु, शङ्कु, अङ्गु, मञ्जि, पुञ्जि, परमे, बर्हिस्, दिवि, अग्नि इत्येतेभ्य उत्तरस्य स्थस्य मूर्धन्यः । अम्बष्ठः । आम्बष्ठः । गोष्ठः । भूमिष्ठः । सव्यष्ठः । अपष्ठः । द्विष्ठः । त्रिष्ठः । कुष्ठः । शेकुष्ठः । शङ्कुष्ठः । अङ्गुष्ठः । मञ्जिष्ठः । पुञ्जिष्ठः । परमेष्ठः । बर्हिष्ठः । दिविष्ठः । अग्निष्ठः । ( स्थास्थिन्स्थॄणामिति वक्तव्यम् ) सव्येष्ठाः । परमेष्ठी । सव्येष्ठा सारथिः ।

## सुषामादिषु च । ९८ ।

सुषामादिषु सस्य मूर्धन्यः । शोभनं साम यस्यासौ सुषामा ब्राह्मणः । निष्षामा ।

## एति सञ्ज्ञायामगात् । ९९ ।

गरहिताभ्यामिण्कुभ्यां परस्य सस्य मूर्धन्यः एति संज्ञायाम् । हरिषेणः । वारिषेणः । एतीति किम् । हरिसक्थम् । संज्ञायामिति किम् । पृथ्वीसेना यस्य स पृथुसेनो राजा । अगादिति किम्। विश्वक्सेनः । इण्कोरित्येव । सर्वसेनः ।

## नक्षत्राद्वा । १०० ।

नक्षत्रसम्बन्धिभ्यां गरहिताभ्यामिण् कुभ्यां परस्य सस्य मूर्धन्य एति संज्ञायाम् । रोहिणिषेणः । रोहिणिसेनः ।

## ह्रस्वात्तादौ तद्धिते । १०१ ।

ह्रस्वात्सस्य मूर्धन्य स्तादौ तद्धिते । सर्पिष्टरम् । यजुष्टरम् । सर्पिष्टमम् इत्यादि । सर्पिस्तरति । तादाविति किम् । सर्पिस्साद्भवति । तद्धित इति किम् । सर्पिस्तरति ह्रस्वादिति किम् । धूस्तरा । ( तिङन्तस्य प्रतिषेधो वक्तव्यः ) भिन्द्युस्तराम् । छिन्द्युस्तराम् ।

## निसस्तपतावनासेवने । १०२ ।

निसः सस्य मूर्धन्यः तपतावनासेवने । निष्टपति सुवर्णम् । अनासेवन इति किम् । निस्तपति सुवर्णं सुवर्णकारः । पुनः पुनरग्निं स्पर्शयतीत्यर्थः ।

## युष्मत्तत्ततक्षुः ष्वन्तः पादम् । १०३ ।

युष्मदादिषु सस्य मूर्धन्यः पादमध्ये स चेत् । युष्मदादेशास्त्व त्वा, ते, त व । अग्निष्ट्वंनामासीत् । अग्निष्ट्वा वर्द्धयामसि । ते अग्निष्टे विश्वमानय । अप्स्वग्ने सधिष्टव । अग्निष्टद्विश्वमापृणाति । द्यावापृथिवी निष्टतक्षुः ।

## यजुष्येकेषाम् । १०४ ।

यजुषि युष्मदादिषु वा सस्य मूर्धन्यः । अर्चिभिष्ट्वम् । अर्चिभिस्त्वमित्यादि ।

## स्तुतस्तोमयोश्छन्दसि । १०५ ।

छन्दसि स्तुतस्तोमयोः सस्य वा मूर्धन्यः । त्रिभिष्टुतस्य । स्तुतस्य वा । गोष्टोमं षोडशिनम् । स्तोमम्वा ।

## पूर्वपदात् । १०६ ।

छन्दसि पूर्वपदस्थान्निमित्तात्परस्य सस्य वा मूर्धन्यः । द्विषन्धिः । त्रिषन्धिः । द्विसन्धिर्वा ।

## सुञः । १०७ ।

छन्दसि पूर्वपदस्थान्निमित्तात्परस्य सस्य मूर्धन्यः । अभीषुणः सखीनाम् ।

## सनोतेरनः । १०८ ।

पूर्वपदस्थान्निमित्तात्परस्य अकारान्तस्य सनोतेः सस्य मूर्धन्य । गोषाः नृषाः ।

## सहेः पृतनर्त्ताभ्यां च । १०९ ।

पृतनर्ताभ्यां सहेः सस्य मूर्धन्यः । पृतनाषाहम् । ऋताषाहम् ।

## न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ।११०।

रेफपरस्य सस्य सृप्यादीनां च सस्य मूर्धन्यः न । विस्रब्धः कथयति पुराक्रूरस्य विसृपः । वाचो विसर्जनात् । दिविस्पृशम् । निस्पृहं कथयति । अश्वसनिम् ।

## सात्पदाद्योः । १११ ।

सातेः पदादेश्च सस्य मूर्धन्यो न । अग्निसात् । दधिसिञ्चति ।

## सिचो यङि । ११२ ।

सिचः परस्य सस्य मूर्धन्यो न यङि । सेसिच्यते । अभिसेसिच्यते ।

## सेधतेर्गतौ । ११३ ।

गत्यर्थस्य सेधतेः सस्य मूर्धन्यो न । अभिसेधयति गाः । गताविति किम् शिष्य मकार्यात् प्रतिषेधयति ।

## प्रतिस्तब्धनिस्तब्धौ च । ११४ ।

प्रतिस्तब्ध निस्तब्ध इत्यत्र षत्वाभावो निपात्यते ।

## सोढः । ११५ ।

सोढः सस्य मूर्धन्यो न । परिसोढः । सोढ्भूतग्रहणं किम् । परिषहते ।

## स्तम्भुसिवुसहां चङि । ११६ ।

स्तम्भ्वादीनां सस्य मूर्धन्यो न चङि । स्तम्भेरिति परिनिविभ्य इति च प्राप्तः । पर्यतस्तम्भत् । पर्यसीषिवत् । पर्यसीषहत् । ( स्तम्भुसिवुसहां चङ्युपसर्गादिति वक्तव्यम् ) तथैवोदाहृतम् ।

## सुनोतेः स्यसनोः । ११७ ।

सुनोतेः सस्य मूर्धन्यो न स्यसनोः । अभिसोष्यति । अभिसुसूः । स्यसनोरिति किम् । सुषाव ।

## सदिष्वञ्जोः परस्य लिटि । ११८ ।

सदिष्वञ्जोः परस्य सस्य मूर्धन्यो न लिटि । अभिषसाद । परिषसाद । परिषस्वजे । अभिषस्वजे ।

## निव्यभिभ्योऽड्व्यवाये वा छन्दसि । ११९ ।

न्यादिभ्योऽड्व्यवाये सस्य मूर्धन्यो वा छन्दसि । न्यषीदत्पिता नः । व्यषीदत् पिता नः । न्यसीदत् । व्यसीदत् । अभ्यषीदत् । अभ्यसीदत् ।

इत्यष्टमाध्यायस्य तृतीयः पादः ।

# अथाष्टमाध्यायस्य चतुर्थपादारम्भः।

## रषाभ्यां नो णः समानपदे ।१।

रषाभ्यां परस्य नस्य ण एकपदे। आस्तीर्णम्। विस्तीर्णम्। कुष्णाति। (ऋवर्णाच्चेति वक्तव्यम्) तिसृणाम्। षग्रहणमुत्तरार्थम्, ष्टुत्वेनैव सिद्धमेतत्। समान पद इति किम्। अग्निर्नयति।

## अट्कुप्वाङ्नुम्व्यवायेऽपि ।२।

अट् कवग पवर्गाङ् नुमां व्यवधानेऽपि रषाभ्यां परस्य नस्य णः। करणम्। अर्केण। मूर्खेण। गर्गेण। अर्घेण। दर्पेण। रेफेण। गर्भेण। चर्मणा। पर्याणद्धम्। बृंहणम्।

## पूर्वपदात्संज्ञायामगः ।३।

गभिन्नात्पूर्वपदस्थान्निमित्तात्परस्य नस्य णः संज्ञायाम्। द्रुणसः। शूर्पणखा। संज्ञायामिति किम्। चर्मनासिकः। अग इति किम्। ऋगयनम्।

## वनं पुरगामिश्रकासिध्रका शारिकाकोटराग्रेभ्यः ।४।

पुरगादिभ्यः पूर्वपदेभ्यो वनस्य नस्य णः। पुरगावणम्। मिश्रकावणम्। सिध्रकावणम्। शारिकावणम्। कोटरावणम्। अग्रेवणम्। सिद्धे सति आरम्भो नियमार्थः। एतेभ्य एव परस्य वननकारस्य णकारादेशो भवति, नान्येभ्य इति। कुबेरवनम्। शतधावनम्।

## प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्यो ऽसंज्ञायामपि ।५।

प्रादिभ्यो वनस्य नस्य णकारादेशः संज्ञासंज्ञयोः । प्रवणे यष्टव्यम् । निर्वणे प्रतिधीयते । अन्तर्वणे । शरवणम् । इक्षुवणम् । प्लक्षवणम् । आम्रवणम् । कार्ष्यवणम् । खदिरवणम् । पीयूक्षावणम् ।

## विभाषौषधिवनस्पतिभ्यः ।६।

ओषधिवनस्पतिवाचि पूर्वपदस्थान्निमित्तात्परस्य वनस्य नस्य वा णः । दूर्वावणम् । वनम्वा । शिरीषवणम् । वनम्वा । ( द्व्यक्षर त्र्यक्षरेभ्य इति वक्तव्यम् ) नेह देवदारुवनम् ( इरिकादिभ्यः प्रतिषेधो वक्तव्यः ) इरिकावनम् । सत्यपि भेदे वृक्ष वनस्पत्यो रिहाभेदेन ग्रहणं द्रष्टव्यम् ।

फली वनस्पति र्ज्ञेयो वृक्षाः पुष्पफलोपगाः ।
ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः ॥

## अह्नोऽदन्तात् ।७।

अदन्तात्पूर्वपदस्थान्निमित्तात्परस्य अह्नो नस्य णः । पूर्वाह्णः । अपराह्णः । अदन्तादिति किम् । निरह्नः । 'अह्नोऽह्न एतेभ्यः' इति अह्नादेशः । अह्न इत्यकारान्त ग्रहणात् दीर्घाह्नी शरदित्यत्र न भवति ।

## वाहनमाहितात् ।८।

आहितवाचि पूर्वपदस्थान्निमित्तात्परस्य वाहनस्य नस्य णः । इक्षुवाहणम् । शरवाहणम् । वाहने यदारोपित मुच्यते तदाहित मुच्यते । आहितादिति किम् । दाक्षिवाहनम् । दाक्षिस्वामिकं वाहन मित्यर्थः ।

## पानं देशे ।९।

पूर्वपदस्थान्निमित्तात्परस्य पानस्य नस्य णो देशेऽभिधेये । पीयत इति पानम् । कृत्यल्युटो बहुलमिति कर्मणि ल्युट् । क्षीरंपानं येषांते क्षीरपाणा उशीनराः । दाक्षीणां पानं दाक्षिपानम् ।

## वा भावकरणयोः ।१०।

पूर्वपदस्थान्निमित्तात्परस्य भावकरणयोः पानस्य नस्य वा णः। क्षीरपाणम्। पानम्वा। क्षीरपाणः। पानं वा। (वा प्रकरणे गिरिनद्यादीनामुपसंख्यानम्) गिरिणदी। नदी वा।

## प्रातिपदिकान्तनुम्विभक्तिषु च। ११।

पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तस्य नुमोविभक्तिस्थस्य च नस्य वा णः। माषवापिणौ। वापिनौ वा। माषवापाणि। वापानि वा। माषवापेण। वापेन वा। (युवादीनां प्रतिषेधो वक्तव्यः) आर्य्ययूना।

## एकाजुत्तरपदे णः। १२।

एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तानुम् विभक्तिस्थस्य नस्य णः। वृत्रहणौ। क्षीरपाणि। क्षीरपेण।

## कुमति च। १३।

कवर्गवत्युत्तरपदे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम् विभक्तिस्थस्य नस्य णः। वस्त्रयुगिणौ। वस्त्रयुगाणि। वस्त्रयुगेण।

## उपसर्गादसमासेऽपि णोपदेशस्य। १४।

उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णोऽसमासे समासे च। प्रणमति। उपसर्गादिति किम्। प्रगता नायका अस्माद्देशात् प्रनायको देशः। असमासेऽपीति किम्। पूर्वपदाधिकारात् समास एव स्यादिति तदधिकार निवृत्तिद्योतनार्थम्। णोपदेशस्येति किम्। प्रनर्दति।

## हिनुमीना। १५।

उपसर्गस्थान्निमित्तात्परस्य हिनुमीना इत्येतयोर्नस्य णः। प्रहिणोति। प्रमीणाति।

## आनि लोट्। १६।

उपसर्गस्थान्निमित्तात्परस्य आनीत्यस्य नस्य णः। प्रवपाणि। परिवपाणि।

## नेर्गदनदपतपदघुमास्यतिहन्तियातिवाति-द्रातिप्सातिवपतिवहतिशाम्यतिचिनोति-देग्धिषु च। १७।

उपसर्गस्थान्निमित्तात्परस्य नेर्णो गदादिषु। प्रणिगदति। प्रणिनदति। प्रणिपतति। प्रणिपद्यते। प्रणिददाति। प्रणिमिमीते। प्रणिमयते। प्रणिष्यति। प्रणिहन्ति। प्रणियाति। प्रणिवाति। प्रणिद्राति। प्रणिप्साति। प्रणिवपति। प्रणिवहति। प्रणिशाम्यति। प्रणिचिनोति। प्रणिदेग्धि। (नेर्गदादिषु अड्व्यवाये उपसंख्यानं कर्त्तव्यम्) प्रण्यगदत्।

## शेषे विभाषाकखादावषान्त उपदेशे। १८।

उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य वा णः उपदेशे कादिखादिषान्तभिन्ने शेषे धातौ। प्रणिपचति। प्रनिपचति। अकखादाविति किम्। प्रनिकरोति। अषान्त इति किम्। प्रतिपिनष्टि। उपदेश ग्रहणं किम्। इह प्रतिषेधो यथा स्यात्। प्रनिचकार। इह च माभूत्। विशः प्रणिवेष्टा।

## अनितेरन्तः। १९।

उपसर्गस्थान्निमित्तात्परस्य अनितेर्नस्य णः। प्राणिति। पराणिति। पदान्ते। हे प्राण्। हे पराण्।

## उभौ साभ्यासस्य। २०।

उपसर्गस्थान्निमित्तादुत्तरस्य साभ्यासस्यानितेरुभौ नौ णत्वं प्राप्नुतः। प्राणिणिषति। पराणिणिषति। पराणिणत्।

## हन्तेरत्पूर्वस्य। २१।

उपसर्गस्थान्निमित्तात्परस्य हन्तेरत्पूर्वस्य नस्य णः। प्रहण्यते। परिहण्यते। अत्पूर्वस्येति किम्। प्रघ्नन्ति। तपरकरणं किम्। विणि प्राघानि।

## वमोर्वा। २२।

उपसर्गस्थान्निमित्तात्परस्य हन्तेरत्पूर्वस्य नस्य णो वा वमोः परतः । प्रहण्वः । प्रहन्वः । प्रहण्मः । प्रहन्मः ।

## अन्तरदेशे । २३ ।

अन्तः शब्दात्परस्य हन्तेरत्पूर्वस्य नस्य णोऽदेशे । अन्तर्हण्यते । अदेश इति किम् । अन्तर्हननो देशः । अत्पूर्वस्येत्येव । अन्तर्घ्नन्ति । तपरकरणं किम् । अन्तरघानि ।

## अयनञ्च । २४ ।

अन्तः परस्य अयनस्य नस्य णोऽदेशे । अन्तरयणं शोभनम् । अदेशे किम् । अन्तरयनोदेशः ।

## छन्दस्यृदवग्रहात् । २५ ।

ऋकारान्तादवग्रहात्पूर्वपदात्परस्य नस्य णश्छन्दसि । नृमणाः । पितृयाणम् ।

## नश्च धातुस्थोरुषुभ्यः । २६ ।

धातुस्थान्निमित्तादुरुशब्दात्षुशब्दाच्च नसो नस्य णश्छन्दसि । अग्नेरक्षाणः । उरुणस्कृधि । अभीषुणः सखीनाम् ।

## उपसर्गाद्बहुलम् । २७ ।

उपसर्गस्थान्निमित्तान्नसो नस्य णो बहुलम् । प्रणः शूद्रः । प्रणसः प्रणो वा राजा । न च भवति । प्र नो मुञ्चतम् ।

## कृत्यचः । २८ ।

उपसर्गस्थान्निमित्तात्परस्य अचः परः कृत्स्थो यो नस्तस्य णः । प्रयाणम् । प्रयाण्यमाणम् । प्रयाणीयमित्यादि । (कृत्स्थस्य णत्वे निर्विण्णस्योपसंख्यानं कर्त्तव्यम् ) निर्विण्णोहमत्र वासेन ।

## णेर्विभाषा । २९ ।

उपसर्गस्थान्निमित्तात्परस्य ण्यन्ताद्विहितो यः कृत्तत्स्थस्य नस्य णो वा । प्रयापणम् । प्रयापनम् ।

## हलश्चेजुपधात्[१] । ३० ।

उपसर्गस्थान्निमित्तात्परस्य इजुपधाद्धलादेर्विहितो यः कृत्तत्स्थस्याचः परस्य नस्य णो वा । प्रकोपणम् । प्रकोपनम् । हल इति किम् । प्रोहणम् । इजुपधात् किम् । प्रवपणम् । अच इत्येव । परिभुग्नः ।

## इजादेः सनुमः । ३१ ।

सनुम इजादेर्हलन्तात् विहितो यः कृत्तत्स्थस्य नस्य णः । प्रेङ्खणम् । प्रेङ्गणम् । सिद्धे सत्यारम्भो नियमार्थः । इजादेरेव सनुमो नान्यस्मादिति प्रमङ्गनम् ।

## वा निंसनिक्षनिन्दाम् । ३२ ।

उपसर्गस्थान्निमित्तादुत्तरस्य निंसादीनां नस्य णो वा । प्रणिंसनम् । प्रनिंसनम् । प्रणिक्षणम् । प्रनिक्षणम् । प्रणिन्दनम् । प्रनिन्दनम् ।

## न भाभूपूकमिगमिप्यायिवेपाम् । ३३ ।

उपसर्गस्थान्निमित्तात्परस्य भादिभ्यो विहितो यः कृत्तत्स्थस्य नस्य णो न । प्रभानम् । प्रभवनम् । प्रपवनम् । इत्यादि । ( भादिषु पूञ्ग्रहणं कर्तव्यम् ) नेह प्रवपणसोमस्य । ( ण्यन्तस्य चोपसंख्यानं कर्त्तव्यम् ) प्रभापनम् । परिभापनम् ।

## षात्पदान्तात् । ३४ ।

षकारात्पदान्तात्परस्य कृत्स्थस्य नस्य णो न । निष्पानम् । सर्पिष्पानम् । पदान्तात् किम् । कुष्णाति । षादिति किम् । निर्णयः । पदेऽन्तः पदान्त इति सप्तमी समासोऽयं, तेनेह न, सुसर्पिष्केण । शेषाद्विभाषेति कप् ।

---

( १ ) इजुपधस्य सर्वस्य हलन्तत्वादादिविशेषणं हल ग्रहणम् ।

## नशेः षान्तस्य । ३५ ।

षान्तस्य नशो नस्य णो न । प्रनष्टः । परिनष्टः । षान्तस्येति किम् । प्रणश्यति । षान्त ग्रहणं भूतपूर्वस्यापि षान्तस्य यथा स्यात् । प्रनङ्क्ष्यति ।

## पदान्तस्य । ३६ ।

पदान्तस्य नस्य णो न । वृक्षान् । प्लक्षान् ।

## पदव्यवायेऽपि । ३७ ।

निमित्तनिमित्तिनोः पदेन व्यवधानेपि नस्य णो न । माषकुम्भवापेन । चतुरङ्गयोगेन । ( पदव्यवायेऽतद्धित इति वक्तव्यम् ) नेह, आर्द्रगोमयेण । शुष्कगोमयेण । 'गोश्चपुरीषे' इति मयट् ।

## क्षुभ्नादिषु च । ३८ ।

क्षुभ्नादिषु नस्य णो न । क्षुभ्नाति । अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः ।

## स्तोश्चुनाश्चुः । ३९ ।

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः । वृक्षश्शेते । वृक्षश्चिनोति । सच्चित् । यज्ञः ।

## ष्टुना ष्टुः । ४० ।

सकारतवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गौ स्तः । रामष्षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । राजण् ढौकसे ।

## नपदान्ताट्टोरनाम् । ४१ ।

पदान्ताट्टवर्गात्परस्यानामः स्तोष्टुर्न । षट्सन्तः । षट्ते । ( अनाम्नवतिनगरीणामितिवाच्यम् ) षण्णाम् । षण्णवतिः । षण्णगर्यः ।

## तोः षि । ४२ ।

तवर्गस्य टवर्गो न षकारे परे । सन्षष्ठः ।

## शात् । ४३ ।

शात्परस्य तवर्गस्य श्चुत्वन्न । विश्नः । प्रश्नः ।

## यरोऽनुनासिकेऽनुनासिको वा । ४४ ।

पदान्तस्य यरोऽनुनासिके परेऽनुनासिको वा । वाग्नयति । वाङ्नयति । अग्निचिन्नयति । अग्निचिद्नयति । ( प्रत्यये भाषायां नित्यम् ) वाङ्मयम् । त्वङ्मयम् ।

## अचोरहाभ्यां द्वे । ४५ ।

अचः पराभ्यां रहाभ्यां परस्य यरो द्वे वा स्तः । हर्य्यनुभवः । नह्य्यस्ति । पर इति किम् । ह्नुते । ह्मलयति ।

## अनचि च । ४६ ।

अचः परस्य यरो द्वेवास्तो नत्वचि । दद्ध्यत्र । मद्ध्वत्र । ( द्विर्वचने यणो मय इति वक्तव्यम् ) यण इति पञ्चमी पक्षे । उल्क्का । मय इतिपञ्चमीपक्षे । दध्य्यत्र । ( शरः खय इति वक्तव्यम् ) शर इति पञ्चमीपक्षे । स्थ्थाली । खय इति पञ्चमीपक्षे । वत्स्सरः ।

## नादिन्याक्रोशे पुत्रस्य । ४७ ।

आदिनी शब्दे परे पुत्रशब्दस्य न द्वे स्तः आक्रोशेगम्ये । पुत्रादिनी त्वमसि पापे । ( नादिन्याक्रोशे पुत्रस्येत्यत्र तत्परेचेति वक्तव्यम् ) पुत्र पुत्रादिनी । ( वा हतजग्धपरे इति वक्तव्यम् ) पुत्त्रहती । पुत्त्रजग्धी । पुत्रहती । पुत्रजग्धी । ( चयो द्वितीया भवन्ति शरि परतः पौष्करसादेराचार्यस्य मतेन ) वथ्सरः । अफ्सराः ।

## शरोऽचि । ४८ ।

अचि परे शरो न द्वे । कर्षति । अचीति किम् । दश्श्यर्ते ।

## त्रिप्रभृतिषु शाकटायनस्य । ४९ ।

त्रिप्रभृतिषु संयुक्तेषु शाकटायनमतेन न द्वित्वम्। इन्द्रः। चन्द्रः। उष्ट्रः। राष्ट्रम्। भ्राष्ट्रम्।

## सर्वत्र शाकल्यस्य। ५०।

शाकल्यस्य मते सर्वत्र द्वित्वन्न। अर्कः। मर्कः।

## दीर्घादाचार्याणाम्। ५१।

दीर्घात्परस्याचार्याणां मते न द्वित्वम्। दात्रम्। पात्रम्। मूत्रम्। सूत्रम्।

## झलां जश्झशि। ५२।

स्पष्टम्। लब्धा। लब्धुम्। दोग्धा। बोद्धा। झशीति किम्। दत्तः।

## अभ्यासे चर्च्च। ५३।

अभ्यासे झलां चरः स्युर्जशश्च। चिखनिषति। चिच्छित्सति। टिठकारयिषति।

## खरि च। ५४।

खरि झलांचरः स्युः। भेत्ता। युयुत्सते। आरिप्सते।

## वावसाने। ५५।

अवसाने झलां चरो वा। वाक्। वाग्। त्वक्। त्वग्।

## अणोऽप्रगृह्यस्यानुनासिकः। ५६।

अवसानेऽप्रगृह्यस्याणोऽनुनासिकः स्यात्। दधि २। मधु २। अण इति किम्। कर्तृ। अप्रगृह्यस्येति किम्। अग्नी।

## अनुस्वारस्य ययि परसवर्णः। ५७।

स्पष्टम्। शङ्किता। उञ्छिता। कुण्डिता। ययीति किम्। आक्रंस्यते।

## वा पदान्तस्य। ५८।

पदान्तस्यानुस्वारस्य ययि परसवर्णो वा । त्वङ्करोषि । त्वंकरोषि ।

## तोर्लि । ५९ ।

तवर्गस्य लकारे परसवर्णः । भवाँल्लुनाति । महाँल्लुनाति । तल्लयः ।

## उदः स्थास्तम्भोः पूर्वस्य । ६० ।

उदःपरयोः स्थास्तम्भोः पूर्वसवर्णः । आदेःपरस्य । उत्थानम् । उत्तम्भनम् । ( उदःपूर्वत्वेस्कन्देश्छन्दस्युपसंख्यानं कर्तव्यम् ) अग्ने दूरमुत्कन्दः । ( रोगेचेतिवक्तव्यम् ) उत्कन्दको रोगः ।

## झयो होऽन्यतरस्याम् । ६१ ।

झयः परस्य हस्य वा पूर्वसवर्णः । वाग्घसति । झय इति किम् । भवान् हसति ।

## शश्छोटि । ६२ ।

झयः परस्य शस्य छो वाटि । वाक्छेते । वाक्शेते । ( छत्वममीति वाच्यम् ) । तच्छ्लोकेन ।

## हलोयमांयमि लोपः । ६३ ।

हलः परेषां यमां यमि वा लोपः । शय्या । शय्य्या । हल इति किम् । अन्नम् । यमामिति किम् । अग्निः । यमीति किम् । शार्ङ्गम् ।

## झरो झरि सवर्णे । ६४ ।

हलः परस्य झरो वा लोपः सवर्णे झरि । मरुत्त्तः । मरुत्तः । झर इति किम् । शार्ङ्गम् । झरीति किम् । प्रियपञ्च्त्रः । सवर्ण इति किम् । तर्प्ता ।

## उदात्तादनुदात्तस्य स्वरितः । ६५ ।

उदात्तात्परस्यानुदात्तस्य स्वरितः । गार्ग्यः । वात्स्यः । पचति । पठति ।

## नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्

। ६६ ।

उदात्तपरस्य स्वरितपरस्यचानुदात्तस्य न स्वरितः। गार्ग्यस्तत्र। वात्स्यस्तत्र। गार्ग्यःक्व। वात्स्यः क्व। अनेकाचार्य्यसंकीर्तनं पूजार्थम्।

## अ अ इति । ६७ ।

विकृतोऽकारः संवृतः स्यात्। वृत्तः। प्लत्तः। इह शास्त्रे कार्यार्थमकारो विवृतः प्रतिज्ञातस्तस्य तथा भूतस्यैव प्रयोगो माभूदिति संवृत प्रत्यापत्तिरियं क्रियते। दीर्घप्लुतयोश्चानेन विवृतेनाकारेण ग्रहणं नेष्यते तेन तयोः संवृतो न भवति। संवृतेन च सर्वे गुणस्य मात्रिकस्य ग्रहणमिष्यते। तेन सर्वगुणः प्रत्यापद्यते। शमित्योम्। 

## इत्यष्टमाध्यायस्य चतुर्थः पादः।

समाप्तश्चायमध्यायः॥





## स्वास्थ्य सम्बन्धी पुस्तकें

| | | |
|---|---|---|
| आहार [ भोजन सम्बन्धी पूर्ण जानकारी के लिए] | श्री रामरक्ष पाठक | ५) |
| लहसुन-प्याज़ [ दूसरा परिवर्द्धित संस्करण ] | श्री रामेश वेदी | २।।) |
| शहद [ शहद के बारे पूरी जानकारी के लिए ] | ,, | ३) |
| तुलसी [ दूसरा परिवर्द्धित सस्करण ] | ,, | २) |
| सोंठ [ तीसरा परिवर्धित संस्करण ] | ,, | १।।) |
| देहाती इलाज [ दूसरा परिवर्द्धित संस्करण ] | ,, | १) |
| मिर्च ( काली, सफ़ेद और लाल ) दूसरा संस्करण | ,, | १) |
| स्तूप निर्माणकला, सचित्र, सजिल्द | श्री नारायणराव | ३) |
| प्रमेह, श्वास, अर्श रोग | | १।) |
| जल चिकित्सा | श्री देवराज | १।।) |

## गुरुकुल सम्बन्धी साहित्य

| | |
|---|---|
| गुरुकुल कांगड़ी का ५० वर्ष का इतिहास | ।।।) |
| गुरुकुल परिचय [ चित्रमय ] | ।) |
| गुरुकुल विश्वविद्यालय का संक्षिप्त परिचय [ वर्णनात्मक ] | ।) |
| गुरुकुल विश्वविद्यालय का ३८ वां वार्षिक वृत्तान्त [ सचित्र ] | १) |
| गुरुकुल ऐट ए ग्लान्स [ चित्रमय ] अंग्रेजी में | ।) |
| गुरुकुल यूनिवर्सिटी—एन इन्ट्रोडक्शन, अंग्रेजी में | ।।) |
| गुरुकुल यूनिवर्सिटी—वाचस्पति परीक्षा का प्रोस्पेक्टस, अंग्रेजी में | ।) |
| पाठविधि—गुरुकुल के वेद तथा साधारण महाविद्यालय की | ।।) |
| पाठविधि—गुरुकुल की नवम तथा दशम श्रेणी की | ।) |
| पाठविधि—गुरुकुल के आयुर्वेद महाविद्यालय की | ।।) |
| गुरुकुल पत्रिका [ मासिक ] वार्षिक मूल्य देश में ४) विदेश में | ६) |
| गुरुकुल पत्रिका की प्रथम वर्ष की फाइल | ४) |
| गुरुकुल पत्रिका का पहला स्वर्ण जयन्ती विशेषांक | १) |

प्रकाशन मन्दिर, गुरुकुल कांगड़ी विश्वविद्यालय, हरिद्वार।

# स्वाध्याय के लिए चुनी हुई पुस्तकें

## वैदिक साहित्य

| | | |
|---|---|---|
| वैदिक विनय १,२,३ भाग | श्री अभय | २।), २।), २।) |
| वैदिक ब्रह्मचर्य-गीत | श्री अभय | २) |
| ब्राह्मण की गौ | श्री अभय | ।।) |
| वैदिक अध्यात्म विद्या | श्री भगवद्दत्त | १।) |
| वैदिक स्वप्न-विज्ञान | श्री भगवद्दत्त | २) |
| वेद गीताञ्जली [ वैदिक गीतीयां ] | श्री वेदव्रत | २) |
| वैदिक सूक्तियां | श्री रामनाथ | १।।) |
| वरुण की नौका [ दो भाग ] | श्री प्रियव्रत | ६) |
| सोम-सरोवर, सजिल्द, अजिल्द | श्री चमूपति | २), १।।) |
| अथर्ववेदीय मन्त्र-विद्या | श्री प्रियरत्न | १।।) |

## धार्मिक साहित्य

| | | |
|---|---|---|
| सन्ध्या रहस्य | श्री विश्वनाथ | २) |
| धर्मोपदेश १,२,३ भाग | श्री स्वामी श्रद्धानन्द | १।), १), १।।) |
| आत्ममीमांसा | श्री नन्दलाल | २) |
| प्रार्थनावली [ प्रेरणा देने वाली प्रार्थनाएं व गीतीयां ] | | ।) |
| आर्यसमाज और विचार-संसार | श्री चमूपति | ।) |
| कविता मंजरी | | ।-) |
| कविता कुसुमाञ्जली | | ।) |

---

प्रकाशन, मन्दिर, गुरुकुल कांगड़ी विश्वविद्यालय, हरिद्वार ।

